**'वाचकः शब्दस्फोटः'** इति हि शाब्दिकानां समयः। स चाखण्डरूप एवेति निश्चप्रचम्। तथाभूतेनाखण्डेन वाचकेनाभिधीयमानार्थस्यापि स्फोटत्वं शाब्दिकैस्साधितम्। स्फोटरूपोऽखण्ड-वाक्यार्थः प्रतिभाशब्देनाप्युपाचर्यते। वाक्यार्थ एव प्रतिभेति इदमीयराद्धान्तः।

अत्रेदं निभाल्यतां किमपि विशेषरहस्यम्। उक्तं खलु हरिणा—

**अत्रातीतविपर्यासः केवलामनुपश्यति।**
**छन्दस्यश्छन्दसां योनिमात्मा छन्दोमयीं तनूम्**[1] ॥ इति।

इतरदपि—

**'व्यतीत्यालोकतमसी ज्योतिश्शुद्धं प्रवर्तते'।**

अत्र आत्मस्वरूपं कीदृग्? इत्याकाङ्क्षायामुत्तरं प्रस्तूयते—**'आत्मा छन्दस्यः'।** **'छन्दस्यः'** इति पदेन आत्मन ओङ्कारोपलक्षितत्त्वमित्यर्थोऽङ्गीकार्यः। कुत इति चेत्? छन्दोमयीं तनूं पश्यति, छन्दोमयीमात्मीयां तनूं पश्यतीत्युत्तरत्र वक्ष्यमाणत्वात्। यावद्विपर्यासस्तिष्ठति, तावत्स्वरूपं न प्रकाशते। विपर्यासस्य भ्रमनिमित्तकस्य समतिक्रम एव तत्त्वं स्पष्टतया स्फुरति।

व्याकरणशास्त्रेण वेदेन च समधीतेन विपर्यासोऽपगच्छति। व्याकरणशास्त्रं सम्यक्तयाऽधीयानेन पुरुषेण यदाऽऽत्मा साक्षात्क्रियते, तदैव आत्मनः शुद्धं रूपं प्रकाशमाप्नोति। इदं कारिकायां शुद्धस्यात्मनःछन्दस्यत्वेन निरूपणात्, आत्मनो विग्रहस्य च तथैव प्रतिपादनात् तत्त्वं शब्दमयमेव प्रतिपादितं भवतीति। विशुद्धं तत्त्वं यथा शब्दरूपम्, तथा तदीयविवर्तोऽपि शब्दरूप एवेति मन्तव्यम्।

अत्र **'केवलाम्'** इति पदेन शब्दातिरिक्तस्य अपरस्य कस्यापि सुतरां निषेधः, शब्दस्यैव वैयाकरणसमयेऽद्वयरूपत्वाङ्गीकाराभ्युपगमात्।

अन्यच्च—यदा शुद्धशब्दाख्ये तत्त्वे स्थितिरस्ति, तदा न केवलं लौकिकस्य भ्रमस्यापगमः, अपि तु वृत्तिजन्यस्य लौकिकस्य सर्वस्यापि ज्ञानस्य। अत्र **'आलोक'**पदेन सर्वं वृत्तिजन्यं ज्ञानमिष्यते, **'तमः'**पदेन भ्रमस्याप्यतिक्रमः, अर्थात् परमस्थितौ सर्वथालौकिकमर्यादाऽतिक्रमो भवति। शब्दस्यैव लोकोत्तरत्वे हरिणा अन्यत्रापि ब्रह्मकाण्डे किमपि प्रमाणान्तरं प्रास्तावि—

**वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।**
**न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी**[2] ॥ इति।
**न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते**[3] ॥ इति।

तत्र कारिकाप्रथमे **'अवबोधस्य शाश्वती वाग्रूपताऽस्ति'** इत्यवर्णि। **'सर्वं ज्ञानं शब्देनानुविद्धम्'** इति ग्रन्थेनापि तदेव प्रतिपादितम्। ज्ञानेन सह शब्दस्य प्रकाश्यप्रकाशकभावः सम्बन्धः। यावल्लौकिकं ज्ञानं तावदेव शब्दः, शब्दमन्तरेण ज्ञानं स्वात्मानं न लभते। तत्र

---

१. वाक्यपदीयम्—१।१७। २. वाक्यपदीयम् १।१२४।
३. तदेव—१।१२३।

केनापि पुरुषेणात्मनि सन्निविष्टं ज्ञानं यदि प्रकाशयितुमिष्यते, तर्हि शब्द एव तस्य शरणम्। अपरस्मै कस्मैचिदर्थविशेषं ज्ञानविषयकं प्रतिपादयता पुरुषेण शब्द एव प्रयोक्तव्यः। शब्दप्रयोगमन्तरेण बुद्धिगतोऽप्यर्थः कदाप्यन्यस्मै प्रकाशयितुं न शक्यते। शब्देनार्थस्य प्रकाशो भवति, इत्यतः शब्दस्य प्रकाशरूपत्वं ज्योतिष्ट्वं वा इष्यते।

शास्त्रेषु तावद् ज्योतींषि त्रीणि वर्ण्यन्ते—(क) वह्न्यादिपदार्थ एकं ज्योतिः, तेन तमसावृताः पदार्थाः प्रकाश्यन्ते, (ख) वृत्तिज्ञानमपि प्रकाशरूपं भवति। वृत्तिज्ञानेन तद्विषयस्यार्थस्य प्रकाशो भवति। बुद्धिरन्तःकरणधर्मो वाऽऽत्मधर्मो वेति विचारेणालम्, परं बुद्धेरर्थप्रकाशकत्वं लोके सुविदितमेव, अतस्तस्या अपि प्रकाशरूपत्वेन वर्णनं सङ्गच्छत एव। परमनयोर्द्वयोः प्रकाशयोः प्रकाशकोऽपरः कश्चन पदार्थोऽस्तीति तार्तीयीकप्रकाशस्योल्लेखः शास्त्रेषु कृतभूरिपरिश्रमैर्मन्यत एव, (ग) स च प्रकाशः शब्दाख्यः। एतस्य प्रकाशरूपत्वं मनसि निश्चीय कविनाऽभाणि—

**इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते[1] ॥ इति।**

इदं यत्तार्तीयीकं ज्योतिः, तन्नूनं किमप्यलौकिकं तत्त्वमिति तत्त्वम्। अपरस्य प्रकाशद्वयस्य लौकिकत्वात्। सति चैवं शब्दस्यालौकिकज्योतिष्ट्वसिद्धे वैयाकरणसम्मतं मतं सर्वथा श्रौतमित्यस्मत्प्रतिभाविषयः। अत एव तादृशस्य लोकोत्तरस्याद्वयरूपस्य ज्योतिःपदार्थस्य शब्दाख्यस्यावगमानन्तरं तस्यैव सम्यक्प्रयोगे इहामुत्र च सर्वथा इष्टलाभो भवति, इत्यभिप्रायेण भगवान् पतञ्जलिराह—**'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति[2]'** इति।

अत्र **'एकः शब्दः'** इति पदद्वयेन ओङ्कार एवेति प्रमास्थानम्। तस्यैव सर्ववाङ्मयत्वात्। तथा च श्रुतिः—**'ओङ्कार एव सर्वा वाक्[3]'** इति।

अत्र ओङ्कारस्य सर्ववाग्रूपत्वकथनेन तस्य ब्रह्मोपलक्षकत्वम् अवगन्तव्यम्। नोङ्काराभिहितं ब्रह्म परमोङ्कारोपलक्षितं ब्रह्मेति तत्त्वम्। ब्रह्मणोऽशब्दरूपत्वं परं श्रुतिपूपलभ्यते, तस्य तत्र **'अशब्दम्'** इति पदेन ब्रह्मणः शब्दवाच्यत्वं निराक्रियते, न तु शब्दोपलक्षितत्वमपि।

ईदृशस्य शब्दाख्यब्रह्मणः प्राप्तिः कथं भवतीदानीं विमृश्यते। हरिणा अलौकिकस्य तत्त्वस्य ब्रह्मपदेन, अक्षरपदेन, परब्रह्मपदेन, शब्दतत्त्वपदेन च क्रियासमभिहारं वर्णनमकारि। तत्र तद् ब्रह्मप्राप्त्या उच्यते—

**यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः।**
**शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत्[4] ॥ इति।**

शब्दपूर्वको योगो यदाऽऽश्रितो भवेत्, तदा विश्वं विश्वमिदं प्रतिबिम्बायमानं स्यात्। प्रतिबिम्बपदार्थस्य सत्यत्वं मिथ्यात्वं वेति भिन्नः पन्थाः। व्याकरणशास्त्रे सम्यगभिनिवेशे जाते,

---

१. काव्यादर्शः–१।४।
२. महाभाष्यम्–पस्पशा० पृ० ३६।
३. छा० उ० २।२३।३।
४. वा० प० १।२०।

वाचो निमित्तानि प्रकृतिप्रत्ययादीनि प्रतिबिम्बवद्भासन्ते। तेनेदमर्थं आयाति यद् यावद् व्याकरण-शास्त्रं सम्यगधीतं नाभविष्यत्, तावद् वाचो निमित्तानि प्रतिबिम्बतया प्रतीतानि नाभविष्यन्।

**अत्रेदमवधेयम्**—व्याकरणस्य सम्यगध्ययनं कीदृशमभिप्रेतम्? इति विचारणायां शब्दपूर्वयोगाश्रयणेन तत्सम्पादनीयमिति बोधेलिमम्। योगो नाम सम्बन्धः। अथ शब्दपूर्वो योगः कीदृश इति? शब्देन शब्दाख्येन चैतन्येन योगः सम्बन्ध इति शोभनोऽर्थः। कथं तादृशोऽर्थोऽधिगम्यत इति चेदत्र व्याहरामः। क्रमसंहारेण स आसादितव्य इति वैयाकरणकृताश्रयः शब्दयोगविद्भवति, वाग्योगविद् वा, स क्रमसंहारव्यापारे नूनं नदीष्णो भवति। अथ कोऽयं **'क्रमसंहारः'** इति क्रमस्य संहारः, उपसंहारः क्रमसंहार इति। देशकालानवच्छिन्नरूपस्य परम-तत्त्वस्य स्थितेः नो कालकृतो देशकृतो वा क्रमस्तत्राभिचाकशीति। कालकृतस्य देशकृतस्य वा क्रमस्य पूर्वत्वापरत्वरूपस्य सम्यगुपसंहारे समुपजायमाने लोकोत्तरा स्थितिर्भवति।

**अत्रेदं विमृश्यते**—स्वान्तर्गतं भावं प्रकाशयता वर्णात्मकाश्शब्दाः प्रयुज्यन्ते। वर्णानां क्रमिकत्वं तदानीं वर्तत एव। वर्णानां क्रमस्य जागरूकत्वेऽपि वर्णसमूहरूपस्य पदस्य, तत्समूह-रूपस्य वाक्यस्य वा तादृशस्य वाचकत्वानभ्युपगमे, वाचकत्वमनभ्युपगम्य वैयाकरणैः अक्रमः कश्चन स्फोटो वाचकत्वेन सिद्धान्तितः। यदेव वाचकं भवति, तत्किमपि अक्रमं तत्त्वं स्फोटाख्यं तादृशेन वाचकेनाभिव्यक्तमपि अर्थस्वरूपं किमपि अक्रममेव।

एवं वाच्यवाचकयोरक्रमत्वं प्रतिपद्य वैयाकरणैर्व्यवहारकालेऽपि यथाऽस्माकमखण्डे तत्त्वे दृष्टिः सन्निविष्टा भवेत्, तदर्थं प्रयासो व्यधायि। व्यवहारकालेऽपि अद्वयतत्त्वे दृष्टिं स्थिरीकुर्वता वैयाकरणेन पारिमार्थिकं वस्त्वपि किमपि अक्रममित्युद्घोष्यते। तत्र व्यवहारदशायां क्रमिका वर्णाः प्रयुज्यन्ते, उच्चार्यमाणास्तादृशास्तत्तद्वर्णाः क्रमिका वैखरीशब्देन उच्यन्ते। **'वैखरी विवृतक्रमा'** इति क्रमस्य उपसंहारे इष्यमाणे क्रमशो मध्यमापर्यन्तानुसरणं विधेयम्। **'मध्यमा हृदि संस्थिता'** इति। तस्यामेव दशायां मध्यमावस्थायां कश्चन क्रमः प्रतीयते, यदा मध्यमा-माप्तोऽपि पुनरपि क्रमस्य उपसंहारो भवति, तदा पश्यन्तीरूपेणावस्थितिः, पश्यन्त्यां सर्वथा क्रमस्यानुल्लेखः। सा एवावस्था पश्यन्तीरूपा चरमा स्थितिरस्ति वैयाकरणसिद्धान्ते। तथा च प्रामाणिकभणितिः—

**वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।**
**अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्**[1] ॥ इति।

त्रय्याख्याया वाचो व्याकरणशास्त्रमेव परं स्थानं भवति। अत एव वैयाकरणसमये क्रमसंहारमाश्रित्य शब्दाख्यस्य ज्योतीरूपस्य परमतत्त्वस्य समुद्भासो बोभवीतीति सर्वं विशदमि-त्यलमनल्पपल्लवितेन।

वाग्योगशब्देन शब्दयोगशब्देन वा तत्त्वसाक्षात्कार एवार्थः समुल्लसति। तादृशस्य साक्षात्कारस्य वैयाकरणनये क्रमसंहार एव सोपानभूत इति भूतार्थो वाच इति।

---

१. वा० प० १।१४३।

व्याकरणशास्त्रमनधीयानेन पुरुषेण न क्रमसंहारमाश्रयितुं शक्यते, न वा तल्लभ्य-वाग्योगाख्यं तत्त्वं साक्षात्कर्तुं पार्यत इति ।

अधिकञ्च—

तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते ।। इति ।

हरिकारिकायामस्यां शब्दसंस्कारस्यैव परमात्मनः शब्दब्रह्मणः सिद्ध्युपायत्वेन वर्णनं समुपलभ्यते । परं शब्दसंस्कारे आश्रीयमाणे अपभ्रंशानामपगमो भवति । अधीतव्याकरणो यदा अपभ्रंशान् परिहरति, साधूंश्च प्रयुङ्क्ते, तदा धर्मविशेषस्तम् अनुगृह्णाति । आविर्भूते धर्मविशेषे अभ्युदयलाभो भवति । तदनन्तरं मोक्षः परापतति । कथमिति चेत् ? उच्यते—शब्दपूर्वकं योग-मधिगम्य प्रतिभां····सम्यगवबुध्य स्थिता क्षेमप्राप्तिरिति । शब्दपूर्वकयोगाधिगमेन प्रतिमाया बोधः । ततोऽपवर्गलाभः । अथ कोऽयं शब्दपूर्वको योग इति ? शब्दपूर्वं साधुशब्दप्रयोगज्ञान-पूर्वकं शब्दस्वरूपस्य यद् अभेदतत्त्वज्ञानम्, तादृशे ज्ञाने उपजायमाने क्रमसंहारद्वारेण योगो लभ्यते ।

अयं परिष्कारः—साधुशब्दप्रयोक्तुः पुरुषस्य धर्म आविर्भवति । आविर्भूते धर्मे तस्य प्रसादेन इन्द्रियोपशमो जायते । इन्द्रियनिवृत्तेः पश्चात् स चेन्द्रियोपशमः शब्दब्रह्मप्राप्तिमुद्दिश्यैव भवति । क्रमशो ब्रह्मप्राप्तिर्जायते । स क्रम ईदृशो भवति । प्रथमतः सा वाग् अपभ्रंशेन सम्भिन्ना तिष्ठति । तदनु अपभ्रंशस्यापगमे भेदस्य तिरोधाने अभेदस्य च समुल्लासे प्रतिभाया आविर्भावः । सा च प्रतिभा पश्यन्तीपर्याया । प्रतिभा नाम सर्वेषां वाग्विकाराणां प्रकृतिः । पश्यन्तीसाक्षात्कारानन्तरं प्रत्यस्तमितसर्वविधविकारोल्लेखमात्रस्य परमप्रकृतिभूतस्य ब्रह्मणः प्रकाशो जायते ।

अत्र प्रमाणमुपन्यस्यति—

प्राणवृत्तिमतिक्रान्ते वाचस्तत्त्वे व्यवस्थितः ।
क्रमसंहारयोगेन संहृत्यात्मानमात्मनि ।।
वाचः संस्कारमाधाय वाचं ज्ञाने निवेश्य च ।
विभज्य बन्धनान्यस्य कृत्वा तां छिन्नबन्धनाम् ।।
ज्योतिरान्तरमासाद्य छिन्नग्रन्थिपरिग्रहः ।
परेण ज्योतिषैकत्वं छित्वा ग्रन्थीन् प्रपद्यते ।।

अयमर्थः—बुद्धौ प्राणे च वाचोऽवस्थानम् । 'प्राणवृत्तिमतिक्रान्ते' इत्युक्तौ वाचस्तदा बुद्धौ स्थितिः । तत्रापि भेदस्य तत्कृतक्रमस्यावभासो भवति । अत एव क्रमस्य उपसंहारे कर्तव्ये कश्चन योग आस्थेयः । तेनैव योगेन वाचस्तत्त्वं यावत् सुस्थितं भवेत्, तावद् अहङ्कारादिग्रन्थि-मुक्तो ज्योतीरूपो जीवः परमात्मानं प्राप्नोति । जीवात्मनः प्रकाशमयत्वात् परमात्मनोऽपि तथात्वादुभयोरभेदेन स्थितिर्भवति ।

तमेवार्थं हरिर्वक्ति—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते[1] ।। इति ।

---

१. वाक्यपदीयम्—१।१३१ ।

अत्र सायुज्यपदस्यायमर्थः—अत्यन्तविनिर्भागेन संसर्ग इति । सर्वथैकीभवनमिति यावत् । कारिकायामस्यां जीवात्मनो महता ऋषभेन अर्थात् परमात्मना तस्य सायुज्यलाभः अभीष्ट इति समुद्घोषयता शरीरावच्छिन्नस्य जीवस्य शब्दरूपत्वे परमात्मनोऽपि शब्दरूपता सुविशदं प्रतिपादिता । अत्र वृत्तिग्रन्थे शब्दात्मनो नित्यकार्यभेदेन द्वैविध्यं विवृतमस्ति । तत्र विवृतस्य कार्यत्वमविवृतस्य च नित्यत्वमास्थितम् । तत्र यः कार्यशब्दः, तेन लोकव्यवहारो निष्पद्यते । स एव कार्यशब्दो नित्यस्य वागात्मनः पुरुषस्य प्रतिबिम्बग्राही । स च नित्यः पुरुषो वागात्मा सर्वथा संहृतक्रमः सर्वेषामन्तःसन्निविष्टो विकाराणां प्रभवः कर्मणामाश्रयः सुखदुःखयोरधिष्ठानं सर्वत्राव्याहतकार्यशक्तिः स्वेच्छागृहीतपरिमितविग्रहः सर्वदा मूर्तीनामुत्पादनेऽपि अनालिङ्गितक्षयः सर्वज्ञानरूपः सर्वज्ञेयरूपः सर्वशक्तिः सर्वेस्वरश्च शब्दवृषभ इति निगद्यते । कार्यनित्यशब्दयोरर्थाद् जीवपरमात्मनोरेकीभावस्तदैव आपद्यते, यदा शब्दपूर्वेण अहङ्कारग्रन्थयः सम्यक्तया छिन्ना भवन्ति ।

प्राचीनवेदान्तिषु प्रसिद्धाः श्रीमण्डनमिश्रा अपि शब्दब्रह्मवादं समर्थयन्ते । तथाहि—

आनन्दमेकममृतमजं विज्ञानमक्षरम् ।
असर्वं सर्वमभयं नमस्यामः प्रजापतिम् ॥

इति स्वकीयमङ्गलश्लोकं व्याकुर्वन्त आहुः । अक्षरम् इति शब्दात्मकतामाह । ननु अक्षरशब्दः अकारादिवर्णोपेतो विशेषरूपमोंकारमाह । तत्कथं अपेतवर्णविभागं सकलशब्दार्थानुस्यूतं सामान्यरूपमोंकारमाह इति चेत्, न, विशेषेण सामान्यलक्षणात् तत्र प्रमाणं—**'परं चापरं च ब्रह्म यदोंकारः'**[1] ? इति श्रुतिः । न च प्रतीकोपदेशोऽयं यत्रोपासनाविधिः, तत्रैवं न तु ओमिति ब्रह्म, ओमितीदं सर्वम्, ओंकार एवेदं सर्वम् इत्यादौ । अत्र हि सर्ववागनुगमाद् ओंकारो वाचस्तत्त्वमिति दर्शयित्वा वाग्रूपात्यागात् रूपप्रपञ्चस्य ओंकार एवेदं सर्वमित्याह ।

अयमर्थः—सर्ववागनुगमेन ओंकारः सर्ववाचां तत्त्वं यथा घटाद्यनुगतमृदादि तेषां तत्त्वं सत्यरूपं 'ओंकारेण सर्वावाक् सन्तृणा' इत्युक्तेः । सर्वार्थानां च वागनुविद्धबुद्धिबोध्यत्वात् तेषां वागेव तत्त्वं वाचश्च ओंकार इत्यतः सर्वस्य शब्दार्थोभयरूपप्रपञ्चस्य ओंकारस्तत्त्वम् । 'ओंकार एवेदं सर्वम्' इत्युक्तेः, सर्वं च ब्रह्म, अतः ओंकारो ब्रह्म ।

एवं **'वागेव विश्वा भुवनानि जज्ञे'**[2] इति श्रुतिरपि वाचः सर्वोपादानत्वे प्रमाणम्, ब्रह्म च सर्वोपादानम्, अतो वागेव ब्रह्म । एवमनुमानमपि शब्दाद्वैते प्रमाणम् । तथाहि जगद्वाचो विकारः, प्रत्येकं तदनुविद्धत्वात्, यदेवं तदेवं यथा मृद्घटानुविद्धशरावादि तद्विकारः ।

अपि च ऋग्वेदीये वाक्सूक्ते वाचः सर्वात्मकत्वमुक्तम्—**'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैः उत विश्वदेवैः'**[3] इत्यादिना । तत्राहंशब्दार्थः वागेव । अस्य सूक्तस्य वागम्भृणी ऋषिरित्युक्तत्वात् । यथा आत्मनि प्रबुद्धेन वामदेवेन **'अहं मनुरभवं सूर्यश्च'** इत्युक्तं ब्रह्मवाक्योभयमेकमेव द्वयोः सार्वात्म्यायोगात् ।

---

१. प्र० उ० ५।२ । २. छा० उ० ५।१।२ । ३. ऋ० सं० १०।१२५।१ ।

अपि च प्रकृतिरूपान्विता विकारा दृश्यन्ते, यथा मृद्घट 'अयं घट इति प्रतीतेः' वाग्रूपान्वितं च जगत् । अतो वाक्परिणामो वा विवर्तो वा जगत् । अशब्दव्यवहारिणां बालानां स्तन्यपानादौ प्रवृत्तिरपि इदमिति निश्चिन्वतामेव प्रवृत्तिसामान्यस्य निश्चयपूर्वकत्वात् । निश्चयः शब्दानुरागशून्यो नास्त्येवेति, तेषामपि वाग्रूपोपरक्तमेव क्षीरादिज्ञानम् ।

अपि च 'नीलमुत्पलम्' इति प्रयोगे नीलोत्पलशब्दयोः यत्सामानाधिकरण्यं प्रतीयते, तदर्थगत एवासौ यदि ज्ञाप्यज्ञापकभावेन सामानाधिकरण्यं तदा ऊर्ध्वत्वे कालनिलयनात्—'अयं स्थाणुः' इत्यत्रापि ज्ञाप्यज्ञापकयोः सामानाधिकरण्यं स्यात् । न च तथा दृश्यते, अतस्तादात्म्यादेव सामानाधिकरण्यम्, तादात्म्यं चोपादानोपादेयभावेन । अतोऽर्थप्रपञ्चः शब्दविवर्तो वा परिणामो वा इति ।

चित्सुखाचार्या अपि ब्रह्मसिद्धिटीकायां भावशुद्धौ ओंकारात्मकशब्दविवर्तत्वमेव प्रपञ्चस्याङ्गीचक्रुः । एवमेवानन्दपूर्णविद्यासागरोऽभिप्रायप्रकाशिकाकर्ता मूलमेवानुसृत्य शब्दब्रह्मवादमनुमेने ।

मण्डनमिश्राः शब्दब्रह्मवादोपसंहारे 'शब्दसंस्पर्शेऽर्थे बोधोत्कर्षदर्शनात् तत्प्रतिसंहारे च संचेतितानामप्यसंचेतितकल्पत्वात् पथि गच्छतो तृणादीनामपकर्षाद् वाग्रूपताधीनमेव चितश्चितित्वमिति सूक्ष्मशब्दाख्यस्फोटस्य चेतनत्वमुद्घाटितम् । एतेन श्रीशङ्कराचार्यैः स्फोटखण्डनमपि अचेतनस्फोटखण्डनपरमवसेयम्, चेतनस्फोटविषये तु ब्रह्मवादान्नातिरिच्यते स्फोटवाद इति अन्यभावव्यावृत्तेरिति सूत्रव्याख्यानेनापि परिमलकारैरयमभिप्रायः स्फुटीकृत इति शम् ।



# पूर्वतन्त्रतन्त्रशास्त्रयोस्साम्यविमर्शः

आचार्यपी० एन्० पट्टाभिरामशास्त्री, 'विद्यासागरः'

**'चतुश्शास्त्रपण्डितः'** इत्यान्ध्रेष्वस्ति व्यवहारः। व्याकरणम्, न्यायः, पूर्वोत्तरमीमांसे द्वे इति चत्वारि शास्त्राणि। एतेष्वधिगतवैदुष्यश्चतुश्शास्त्रपण्डितो व्यवह्रियते। शास्तीति शास्त्रम्। व्याकरणं साधुशब्दप्रयोगं शास्ति। न्यायस्तु प्रमाणप्रमेयजातं शास्ति, पूर्वमीमांसा च कर्तव्यपदार्थानादिशति, उत्तरमीमांसा स्वस्वरूपावाप्तिपन्थानमनुशास्ति। आ च बाल्याद् आ च वार्द्धक्याद् मानवैरनुशासने वर्तितव्यमित्येवामीषां शास्त्राणां परममुद्देश्यम्। साधूनां शब्दानां प्रयोगेण वागिन्द्रियस्य सत्यत्वम्, सतां पदार्थानां यथायथं स्वरूपावगमनेन मानसिकममृतत्वम्, कर्तव्यानां कर्मणामनुष्ठानेनाकर्तव्यानाञ्च हानेन चित्तवृत्तेस्सूक्ष्मवस्तुग्राहकत्वम्, तदनु सूक्ष्मवस्तुपरिप्राप्तिरिति शास्त्राणामेतेषां प्रयोजनानि परिगण्यन्ते। भुवि जनिमातस्थुषा मानवेन प्रापञ्चिकव्यवहारे यदि वर्तितव्यं तर्हि पूर्वोक्तानि प्रयोजनानि न केवलमेष्टव्यानि, किन्तु नान्यदृते अमीभ्यः प्रयोजनेभ्यः प्रयोजनान्तरमवशिष्यत इति सुदृढं निश्चेतव्यम्। मानवान् मानवेष्ववस्थापयन्तीमानि मानवानां मानवत्वोपदेशायैव शास्त्राणीमानि प्रावर्तिषत।

दर्शनश्रवणमनननिदिध्यासनादयो व्यापाराः पूर्वाभिहितफलावाप्तय एव साक्षात्परम्परया वा समुपदिष्टा अकृतकेन वचसा। भगवतः परमेष्ठिनः सृजिकर्मभूतेषु सर्वविधसाधनोपेतेषु मानवशरीरेषु विचिन्त्यमानेषु स्पष्टमिदं प्रतिभायाद् यन्मानवा दैवेन प्रदत्तैस्सकलसाधनोपेतैश्शरीरयन्त्रैः सह विवेकशक्त्या किमनुतिष्ठेयुः ? कीदृशं वा फलमनुभवेयुः ? किं स्थास्नु ? किंवा विनश्वरम् ? किं हितम् ? किञ्चाहितम् ? इति साधु विचिन्त्य सांसारिकव्यवहारे कथं प्रवर्तेरन्निति शास्त्राणामध्ययनं न बोधमात्रेण समाप्तं भवति, चतुरवदानन्यायेन प्रचारणपर्यन्तं तदित्यवबुध्य जीवने शास्त्रोदिता अर्था यथा सम्मिलिता भवेयुः, तथा प्रेक्षवता मानवेन वर्तितुं यतितव्यम्।

तत्र तन्त्रशास्त्रमधिकृत्य किञ्चिद्विमृशामः। यद्यपि पूर्वोक्तेषु चतुर्षु शास्त्रेषु नेदमन्तर्भवति, किन्तु तैराविष्कृते पथि गच्छति। अत एव निखिलस्य संस्कृतवाङ्मयस्य प्रामाण्यविचारप्रसङ्गे वेदाविरुद्धानां तन्त्राणामागमानाञ्च प्रामाण्यं व्यवस्थापयाम्बभूवुर्भट्टपादाः। मीमांसाया-मेकादशाध्यायस्य **'तन्त्राध्यायः'** इति नामधेयम्। तत्र 'तन्त्र'पदेन 'अनेकोद्देशेन सकृदनुष्ठानम्' उदीर्यते। अग्रे विवेचयिष्यमाणेषु, तन्त्रशास्त्रसम्बन्धिषु पदार्थेषु मीमांसकाभिमततन्त्रपदार्थः कथं समन्वितो भवतीति प्रदर्शयिष्यते। विस्तारार्थकात् 'तनु' धातोर्निष्पन्नस्तन्त्रशब्द इति तावदविवादम्। भूयसां प्रधानानामङ्गानि क्वचिदावृत्यानुष्ठेयानि, क्वचिच्च सकृदिति द्विविधायामपि सरण्यां विस्तारार्थकतन्त्रस्योपपत्तिस्सूपपादा। आवृत्यानुष्ठाने विस्तारः स्पष्ट एव, तावतां कर्मानुष्ठानक्षणानामाधिक्यात्। यत्र च सकृदनुष्ठानं तत्राप्यस्ति विस्तारः प्रधानोपकारप्रयुक्तः। उपकारजनकत्वेनैवाङ्गानामङ्गत्वं प्रसिध्यति। किञ्चिदपि दृष्टमदृष्टं वोपकारमजनयदङ्गं भवितुं नार्हति। तत्र सकृदनुष्ठानावसरेऽङ्गं स्वजन्यादृष्टद्वारा बहूनां प्रधानानामुपकरोतीति विस्तारोऽस्त्येव। अणीयस्यपि तैलबिन्दौ जले निपतिते यथा तस्य विस्तारो विलोक्यते, तथेदं सकृदनुष्ठितमङ्गं

स्वीयमुपकारं विस्तारयति । अङ्गेष्वारादुपकारकाणि प्रायस्सकृदनुष्ठानेनैवोपकारकाणि । तत्रैव तन्त्रानुष्ठानमिति **मीमांसकाः** ।

बहूनां यागानामेकतन्त्रेणानुष्ठानमिति श्रौतेषु कर्मस्वनुष्ठानं विलोकयामस्तत्रापि तन्त्रमङ्गानामेव । तन्त्रशास्त्रेऽपि चर्याकाण्डम्, उपासनाकाण्डम्, ज्ञानकाण्डमिति त्रेधा विभागः । तत्र चर्याकाण्डीयपदार्थानामनुष्ठानावसरे प्रायो मीमांसकसम्मतामेव पद्धतिं विभावयामः । उपासनाकाण्डीयानां ज्ञानकाण्डीयानाञ्च तेषामुत्तरमीमांसासम्मतो पन्था विलोक्यते । अतस्तन्त्रशास्त्रमपि पूर्वोक्तशास्त्रचतुष्टयी तौल्यमावहतीति कथनं न युक्तिविहीनं प्रतिभाति । अतिचिरन्तने काले शास्त्रकारेषु स्थितां पद्धतिं यद्यनुसन्दध्महे, नूनं तर्हि साधयितुमिदं शक्नुमो यत्तेषां स्वस्वसिद्धान्तव्यवस्थापनपरिपाट्यां विद्यमानायामपि मिथो विषयादानप्रदानेऽभवतामिति । तत्रापि मीमांसया सह तन्त्रशास्त्रस्य नैकट्यं विभावयामः ।

एकदा भारते तन्त्रशास्त्रस्य भूयान् प्रचार आसीत् । सर्वेऽपि शास्त्रकारास्तेन प्रभाविता अभवन् । यथा ह्यद्यतनेषु दिनेषु विज्ञानस्य प्रमुखतया प्रचारपथमानीतस्य प्रभावेण 'नाडीविज्ञानम्', 'भाषाविज्ञानम्', 'आयुर्विज्ञानम्', 'पञ्चभूतविज्ञानम्' इत्येवं स्वस्वप्रतिपाद्यविषयाणां नूतनत्वावद्योतनाय विज्ञानपदघटितानि नामधेयानि कल्पयन्तो दृश्यन्ते, तथैव प्राक्तनेष्वपि कालेषु **'तन्त्ररत्नम्', 'तन्त्रवार्तिकम्', 'तन्त्ररहस्यम्', 'तन्त्रसिद्धान्तरत्नावलिः'** इत्यादि तन्त्रपदघटितानि नामधेयानि ग्रन्थानां कल्पयामासुरिव । अथवा पूर्वमीमांसायां रूढस्य तन्त्रपदस्य यौगिकविशेषार्थावबोधनाय तान्त्रिका स्वस्वग्रन्थस्यान्ते तन्त्रपदं **'योगिनीतन्त्रम्', 'वाराहीतन्त्रम्'**, इत्येवं घटयन्तः पूर्वमीमांसातौल्यमवद्योतयाम्बभूवुरिव ।

इयांस्तु विशेषः—पूर्वमीमांसायां तन्त्रशब्द आदौ, तन्त्रशास्त्रे चान्ते प्रयुज्यत इति; किन्तु पद्धतिमिमामनुकुर्वन्तीव मीमांसकाः पूर्वतन्त्रमुत्तरतन्त्रमिति प्रयुञ्जानाः कतरस्यानुकार्यत्वम्, कतरस्य चानुकारकत्वमिति निर्णयो न सुलभः । तन्त्रशास्त्रे यागः, होमः, महायागः, बहिर्यागः, अन्तर्यागः, यागशाला, द्रव्यम्, देवता, क्रमः, प्रयोगः, अधिकार इत्यादीनां शब्दानां मीमांसाशास्त्रसाधारणानामुपलब्धिर्भूयसी विलोक्यते । अनुकार्यत्वं यस्य कस्य वा भवतु, किन्तु चिरन्तनादेवकालादुभे अपि शास्त्रे प्रवर्तेते इति तावदङ्गीकर्तव्यम् ।

एतावताऽनयोश्शास्त्रयोश्शब्दतस्साम्यं किञ्चिदिवावगतम् । अथार्थतः कियत्तद्वर्तत इति विमृशामः । सर्वसम्प्रतिपन्नमिदं यत्कस्यापीप्सितस्य प्ररिप्राप्तिः, कस्याश्चन विहितक्रियाया अवलम्बनेनैव सिध्यतीति । जोषम्भावमास्थितः किमप्यकुर्वन्नेप्सितं लब्धुं क्षमः । तदर्थं कस्यापि विहितस्य कर्मणोऽनुष्ठानं तावदावश्यकम् । तदिदमनुष्ठानं शास्त्रद्वयेऽपि समानम् । तत्र यागहोमदानादीनामनुष्ठानमित्येकत्रापरत्र च न्यास-मुद्रा-षोडशोपचार-राजोपचारार्चनतर्पणादीनामनुष्ठानमिति भेदः । 'अग्नेरहं देव यज्यया पशुमान् पुष्टिमान् भूयासम्' इत्यनुमन्त्रणमन्त्राम्नानपूर्वकमग्नेः स्वस्य चैकताध्यानमेकत्रापरत्र च—

भूषानिक्षिप्तहेमद्युतिसमकिरणां मुग्धचन्द्रावतंसां
बिभ्राणां दक्षिणेनारुणलिकुचफलं पाणिपङ्केरुहेण ।
हस्तेनादक्षिणेन प्रणतजनकुलेष्वर्थजातं किरन्तीं
वन्दे तामेकवर्णां बलरिपुविनुतां मङ्गलां सर्वपूर्वाम् ॥

इति स्तुवतामर्चकानां ध्यानम्। ध्याने देवताया विग्रहादिरहिताया एकत्रापरत्र च दिव्य-मङ्गलविग्रहयुताया इति भेदः। विग्रहादिराहित्यं दर्शपूर्णमासादि क्रतुष्वेव, नान्यत्र। फलसाध-नत्वेन क्रतोरेवोपदिष्टत्वाद् अग्न्यादिदेवतायाश्च क्रत्वङ्गत्वेन विधानादित्यभिमानः। तन्त्रेषु तु तत्तत्फलसाधनत्वेन विभिन्नप्रयोगाणां विधानेऽपि देवतायाः प्राधान्यमिष्यते।

अत्रैवं विवेचनं युक्तं विभावयामि—मीमांसकमते स्वाध्यायाध्ययनं दृष्टार्थज्ञानायेति सिद्धान्तः। 'भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्' इत्यादिभिर्वादिर्वेदमधीत्य तदर्थज्ञानरहितस्य पुरुषस्य निन्दितत्वाद् मीमांसाशास्त्रारम्भस्य वैधत्वसाधनाच्चार्थज्ञानपर्यन्त-मध्ययनविधिरनुधावतीति सिद्धान्तिन आशयः। एवं सिद्धान्तयितुरिदमभिमतं प्रयोजनं यत्क्रतू-नामनुष्ठानावसरे समुच्चार्यमाणैर्मन्त्रैः कर्मसमवेताः पदार्थाः स्मारितास्सन्तः प्रयोक्तुः कर्मसु विततानां पदार्थानां निश्चितः कश्चन क्रमो ज्ञातो भवतीति। तदिदं प्रयोजनं करणमन्त्रेषु क्रियमाणानुवादिमन्त्रेषु, अनुमन्त्रणमन्त्रेषु च सिध्यति। किन्तु यदा स्तोत्रमन्त्राः, शस्त्रमन्त्राः, प्रातरनुवाकमन्त्राश्च ऋत्विग्भिः पठ्यन्ते, तत्र पूर्वाभिहितं प्रयोजनं दुर्लभम्। एतेषां मन्त्राणां पठनावसरे पठनार्थं विहितेषु नैकविधेषु नियमेष्वेव ऋत्विजां मनः प्रसरेत्, न तत्तन्मन्त्रार्थस्मरणे। अत एव स्तुतशास्त्राधिकरणे द्वितीयप्रथमपष्ठे स्तोत्राणां शस्त्राणाञ्च प्रधानकर्मत्वं प्रतिपाद्य स्तुतशस्त्रयोः प्रयाजादिवदारादुपकारकत्वाददृष्टद्वारा क्रत्वर्थतेति साधितम्।

एवञ्च सर्वत्र मन्त्रोच्चारणं न स्मारकम्; किन्तु क्वचिदेवेति सिद्धं भवति। किञ्च मन्त्राः किं प्रयोक्तुरर्थान् स्मारयन्ति ? उत श्रोतुः ? इति विचिकित्सायां श्रोतुरेव तत्कुर्वन्तीत्येष्टव्यम्। न खलु लौकिकवाक्यसदृशानि भवन्ति मन्त्रवाक्यानि। लोके ह्यर्थं बुध्वा शब्दरचना भवति, वेदे पुनर्मन्त्रवाक्यानि नित्यसिद्धानि। अतोऽत्र प्रयोक्तुरर्थज्ञानं न नियमेनावश्यकम्। अव्युत्पन्ना-नामपि मन्त्रप्रयोगो न विरुद्धः। किञ्च वेदेषु सम्बुध्यन्ता मन्त्रा अनेके श्रूयन्ते **'अग्ने नय सुपथा राये'**[1] इत्यादयः। सम्बोधनं नामाभिमुखीकृत्य ज्ञापनम्। ज्ञानं श्रोतरि, ज्ञापनन्तु वक्तरि। ततश्चाभिमुखीभूताग्न्यादिदेवतानिष्ठं यत्साधुमार्गनयनज्ञानम्, तदनुकूलः प्रयोक्तृगतव्यापारः 'अग्ने नय सुपथा राये' इत्यादि मन्त्रवाक्यार्थः। एवंविधो बोधः सम्बोध्यस्य तदितरेषां श्रोतॄणां प्रयोक्तुश्च सम्भाव्यमानोऽपि सर्वेषां स न कार्यकारी। सम्बोध्यगतमेव ज्ञानं कार्यकारि, अन्यथा मन्त्रे 'अग्ने' इति सम्बुध्यन्तस्य वैयर्थ्यं स्यात्। अतः श्रोतुरेव मन्त्रार्थज्ञानमपेक्ष्यत इति सिध्यति। प्रयोक्तुर्वाक्यमाकर्ण्य श्रोता अग्निः समीचीने पथि नयेदस्मान्।

एवं चेत् कर्मगतानामग्न्यादि देवतानां न केवलं शब्दरूपत्वम्, किन्तु करचरणाद्यवयव-वत्त्वमपीत्येष्टव्यम्। शब्दरूपत्वञ्च देवतानामुद्देश्यत्यागावसरे काममस्तु, यतो हि विधिगतशब्द-स्यैवोद्देश्यत्यागकाले ग्रहणमिति नियमात्।

तान्त्रिककर्मसु का स्थितिरिति पश्यामः। अत्रापि मन्त्राणां सैव स्थितिः। मन्त्राश्चात्र वैदिकाः तान्त्रिकाश्चेति द्विविधाः। द्विविधानामपि मन्त्राणां श्रीविद्यायां **'अधिगमाध्ययनमननु-भावितं चार्थतः खरस्य चन्दनभारवत् केवलं भवति'** इति निरुक्तादिवचनेनार्थज्ञानहीनस्य

---

1. ऋ० सं० १।१८९।१।

निष्फलत्वश्रवणात् 'य एतेन दविष्ठा यजते य उ चैनमेवं वेद' इत्यनुष्ठानज्ञानयोः समफलत्वज्ञापन-श्रुतिदर्शनाच्च सर्वथा अर्थज्ञानमावश्यकमिति सिध्यति। तत्र मन्त्रो नामानुष्ठेयार्थप्रकाशकं मननसाधनम्। मननञ्चानुभूतार्थविषया स्मृतिः। अनुष्ठेयार्थः तत्प्रकाशकश्चेत्युभयं तस्य पुरुषस्य निष्प्रयोजनं यश्चानवगतमन्त्रार्थः। अतो हेतोः सकलविद्यानिधेर्हयग्रीवरूपिणो भगवतो महा-विष्णोः लब्धविद्यावैशद्येनापरिच्छिन्नचिच्छक्तिकलासमावेशतरङ्गितहृदयेनागस्त्यमुनिना तन्त्र-शास्त्रसिद्धमन्त्राणामर्थो विवृतः। एवञ्च मन्त्राणामर्थज्ञानं प्रयोगावसरे पूर्वतन्त्रतन्त्रशास्त्रयोरा-वश्यकमित्युभयत्र समानम्।

सर्वे वर्णात्मका मन्त्रा देवः शक्त्यात्मकः प्रिये।
शक्तिस्तु मातृका ज्ञेया मातृका तु शिवात्मिका॥
तया व्याप्तमिदं सर्वमाब्रह्म भुवनान्तरम्॥

इत्यादि श्रीतन्त्रवचनैर्वर्णात्मकत्वं मन्त्राणां तच्छक्त्यात्मकत्वं देवताया अवगच्छामः। पूर्वतन्त्रेऽप्येषैव रीतिः।

सर्वभावपदार्थेषु विलक्षणां काञ्चन शक्तिमभ्युपयन्तो मीमांसकास्तस्याः पृथक्पदार्थत्वं व्यवस्थापयन्ति। शक्तिं विना परमेश्वरोऽप्यकिञ्चित्करः। जले स्नेहः, तैलेऽपि सः। स च पिण्डीभावहेतुरिति नैयायिकाः। जलं तैलञ्च गोधूमादिपिष्टस्यैव पिण्डीभावं सम्पादयितुं क्षमम्, न सिकतानां तथाभावं सम्पादयितुम्। अतः पिष्टेऽपि तथा भावहेतुरस्तीत्येष्टव्यम्। सिकतासु तथाविधं सामर्थ्यं नास्ति। अतस्तासां पिण्डीभावो न भवति। स्नुह्या जलसंयोगेनैवेष्टकानां संयोजनं दृश्यते, न तैलसंयोगेन, नाप्याज्यसंयोगेन। प्रतिवस्तु नियता काचन शक्तिर्विलसति। यथा द्रव्येषु तथा गुणक्रियासामान्येष्वपि तादृशी शक्तिरुल्लसति। अनया रीत्या वेदेषु प्रत्यक्षरं काचन शक्तिरस्तीति याज्ञिकमीमांसकास्स्वीकुर्वते। तथैव तान्त्रिका अपि।

तन्त्रशास्त्रे 'अकथासनम्' इति काचन परिभाषा। गुरोरासनमिति तदर्थः। अकारादि षोडश षोडशाक्षराणां गणना। तानि त्रिकोणचक्रे विन्यस्य 'हळक्ष' इति त्रीण्यक्षराणि च विन्यस्य मृगीमुद्रया तान्त्रिका मस्तके स्वस्वगुरून् ध्यायन्ति। तान्त्रिकस्साधको यागशालां प्रविश्य सुखासन उपविश्य पूजासङ्कल्पं विधाय प्रथमं अकथासने गुरुं भावयतीति क्रमः। तमेव क्रमं वैदिका अपि गुरोस्सकाशादध्ययनारम्भे 'श्री गुरुभ्यो नमः, हरिःओम्' इत्युच्चार्याध्ययन-मध्यापनञ्चारभमाणा अवलम्बन्ते। स्वस्वगुरुस्मरणं तस्य तस्य कर्मण आरम्भावसरे चिरन्तना-देव कालात्सम्प्रवृत्तम्। मन्त्रसिद्धिर्वा मन्त्रार्थदेवतायाः सिद्धिर्वा गुर्वधीना। शक्तिसम्पन्नेभ्यो गुरुभ्यो गृहीत एव मन्त्रः फलति। अत एवोभयत्र गुरुपरम्परयानुसरणं समानम्।

तत्र मन्त्रशक्तिसम्पादनं मन्त्रार्थदेवताशक्तिसम्पादनं साधकाधीनम्। गुरुः केवलमुप-दिशति मन्त्रान् मन्त्रार्थांश्चावबोधयति। शिष्यस्तानवाप्य तदर्थांश्चावगत्य गुरुपदिष्टमार्गेण विहि-तानि कर्माण्यनुतिष्ठेत्। उभयत्रानुष्ठानविषयभूतेषु कर्मसु विभिन्नेष्वपि कर्मानुष्ठाने तौल्यमस्त्येव। चित्तवृत्तेर्दृढीकरणायैव कर्माण्यनुष्ठीयन्ते। विना चित्तवृत्तेर्दृढीकरणेन सूक्ष्मवस्तुग्राह्यत्वं चित्तस्य कथमिव सिध्येत्? अत एव तान्त्रिकाः स्वशरीरे श्रीचक्रं भागशस्तत्तत्स्थाने भावनया विन्यस्य तत्तच्चक्रस्थास्तास्ता देवताः स्वाङ्गेषु विभाव्य—

शरीरं चिन्तयेदादौ निजं श्रीचक्ररूपकम् ।
त्वगाद्याकारनिर्मुक्तं ज्वलत्कालाग्निसन्निभम् ॥

इत्येवं ध्यात्वा तथैव क्रमेण नवसु स्थानेषु चक्राणि तत्तदधिष्ठात्रीः त्रिपुरात्रिपुरेश्वरादिदेवता विन्यस्य भावयन्ति । समग्रस्य श्रीचक्रस्य तद्गतानां प्रधानदेवतानां सायुधानां साङ्गानां यथायथं विभावनं नामेदं कर्म महत्कठिनम् । यावान् कर्मकलापो बहिर्यागे तावानन्तर्यागेऽप्यनुष्ठेयः । तावत्कालं चित्तवृत्तिनिरोधः । एवमनुष्ठानेन विलक्षणा काचन दैवीशक्तिस्सञ्चिता भवति । इयमेव शक्तिराध्यात्मिकं बलमिति परिगण्यते । आध्यात्मिकबलसम्पन्ना एव सिद्धिमन्तो जायन्ते । तदर्थमेव तन्त्रशास्त्रसमुद्भवः ।

प्रायो लोकाश्चमत्कारप्रिया दृश्यन्ते । तान्त्रिकैस्साधारणशक्तिसम्पन्नैः कैश्चन प्रदर्शितैः कतिपयैश्चमत्कारैराकृष्टा जनता तानेव चमत्कारप्रदर्शकान् अनुयान्ती कालान्तरे क्षीणशक्तिकांस्तान् प्रजहाति । जनताया अनुगमनं विलोक्य तान्त्रिका आत्मनस्सर्वशक्तिमत्वं निश्चित्य कर्तव्यपथात्प्रच्युताः कालान्तरे जनतया परिहीयन्ते स्म ।

तान्त्रिकाणां कार्यवैचित्र्येण लोकास्समाकृष्टचेतसो यथा भवन्ति, तथैव लोकानां द्रव्यवितरणवैचित्र्येण तान्त्रिका अपि द्रव्यसंग्रहैकतानमतयस्समजायन्त । द्रव्यलोभः प्रवृद्धः, जिह्वाचापल्यं परां कोटिमभजत्, शरीरे मोहो वृद्धिं गतः, स्त्रैणसमाजस्याकर्षणे मतिः प्रसृता । एवं विधावस्थायां जनवर्गस्सर्वोऽप्येकरूपः कथं भवेत् ? तान्त्रिकेभ्यो जनाः शनैश्शनैः जुगुप्सन्ते स्म । 'एकः करोति पापानि फलं भुङ्क्ते महाजनः' इति न्यायेन लोकेषु तन्त्रशास्त्रे गर्हिता बुद्धिरभवत् । तन्त्रशास्त्रं हि नामैकं विज्ञानम् । अनेनाभ्यस्तेन चर्याकाण्डद्वारा न केवलं समाजः, किन्तु निखिलोऽपि देशः क्षेमसुभिक्षः कर्तुं शक्यते ।

मीमांसाशास्त्रेऽप्येषैव रीतिर्विलोकयितुं शक्यते । अत्र च याज्ञिकमीमांसकाः, दार्शनिकमीमांसका इति द्वेधा विभक्ताः । तन्त्रशास्त्रे यथा चर्याकाण्डप्रवर्तकास्तथा मीमांसायां याज्ञिकमीमांसका विविधकर्मणामनुष्ठानं प्रवर्तितवन्तः । ते ह्येवं यज्ञं भावयन्ति । यज्ञस्य यजमान आत्मा, श्रद्धा च पत्नी, शरीरमिध्मम्, वेदिरुरःप्रदेशः, उरसि विद्यमानानि लोमानि बर्हींषि, हृदयं यूपः, काम आज्यम्, मन्युः पशुः, दमः शमयिता, वाग् होता, प्राण उद्गाता, चक्षुरध्वर्युः, मनोब्रह्मा, श्रोत्रमग्निः, यावच्छरीरं ध्रियते सा दीक्षा, यदश्नाति, यत्पिबति, यत्सञ्चरत्युत्तिष्ठते स प्रवर्ग्यः, यन्मुखं तदाहवनीयः—इत्येवं तान्त्रिकाश्चक्राणीव यज्ञावयवान् स्वशरीरे याज्ञिकमीमांसका अवधार्य क्रतूननुतिष्ठन्ति ।

श्रीचक्ररूपिणं तदधिष्ठितश्रीमहात्रिपुरसुन्दर्यभिन्नश्चात्मानमवधार्य चर्यायां यथा तान्त्रिकाः प्रवर्त्तन्ते, तथैव यज्ञरूपं यज्ञपुरुषाभिन्नश्चात्मानं निर्धार्याचरन्ति क्रतून् याज्ञिकाः । एवमिम आत्मबलं सञ्चिन्वन्तो देशस्य समाजस्य च दूषणानि ईतिबाधादीनि च निराकुर्वन्तः सामाजिकैरनुभूयमानानि विविधामयजनितदुःखानि दूरीकुर्वन्तश्च देशभक्ताः समाजसेवानिरताश्चासन् । कर्माण्याचरन्तोऽपि तद्बन्धाद्विमुक्ता अभवन् ।

यज्ञेषु होतारमृत्विजं यजमानो वाग्रूपेण यजमानश्च होताऽग्निरूपेण, मनोरूपेण ब्रह्माणं यजमानः, यज्ञमानश्चाग्निरूपेण ब्रह्मा, चक्षूरूपेणाध्वर्युं यजमानः, यजमानमग्निरूपेणाध्वर्युश्चैवं

मिथो देवतात्वबुध्या क्रतूननुतिष्ठेयुः, तर्हि बन्धस्य क्वावसरः ? तान्त्रिकं वा चर्याकाण्डं याज्ञिकं वा कर्मकाण्डं स्वस्वशरीरगतमोहनिरासायैवोपादिष्टं वेदपुरुषेण । शरीरविषयकमोहेऽपगते निर्मलेन मनसातिसूक्ष्मस्य परतत्त्वस्य चिन्तने मनने च सामर्थ्यं लभते मानवः ।

भावनामयमिदं जगत् । यथा यथा भाव्यते, तथा तथेदं विपरिवर्तते । तत्र दैवीसम्पद आनुकूल्यमपेक्षत उभयत्र । अस्मिन् विषये कञ्चन मन्त्रभागमवलम्ब्य विलोकयामः—'एहु श्रीश्च ह्रीश्च धृतिश्च तपो' मे॒धा प्र॑ति॒ष्ठा श्र॒द्धा स॒त्यं धर्म॑श्चै॒तानि मोत्ति॑ष्ठन्त॒मनू॒त्ति॑ष्ठन्तु॒ मा···श्रीश्च ह्रीश्च धृतिश्च तपो' मे॒धा प्रति॒ष्ठा श्र॒द्धा स॒त्यं धर्म॑श्चै॒तानि मा मा हा॑सिषुः' इति कश्चन मन्त्रस्सोमयागे प्रवर्ग्योपसत्प्रकरणे मदन्तीनां शान्तिकर्मणि कल्पकारेण विनियुक्तः ।

अत्र श्रीप्रभृतयो धर्मान्ता नवदेवशरीराणि कर्मसमाप्तावुत्तिष्ठन्तं मा मां यजमानं अनु आ समन्तादुत्तिष्ठन्तु । एवं श्रीप्रभृतीनि धर्मान्तानि नवदेवशरीराणि मा मां मा हासिषुः, मा परित्यजन्तु— इति मन्त्रस्यार्थः । मन्दतीशब्देनाप उच्यन्ते । इमा आपः सोमरसेन सह मिश्रण-कार्ये नीयन्ते । सोमरसहोमानन्तरं चमसेन तद्भक्षणं चुश्चूपाकारेण कर्तव्यमिति विहितम् । चमसपात्रं दारवम् । ओष्ठसंयुक्तेन तेन भक्षणेनोच्छिष्टता परिगण्यते **'न सोमेनोच्छिष्टा भवन्ति'** इति शास्त्रात् । इयं प्रक्रिया चर्याकाण्डेऽपि तुल्या ।

अत्रेदमनुसन्धानमर्हति—पुरि शेत इति पुरुष इति व्युत्पत्याऽस्माकं पुरं शरीरम् । तच्च नवद्वारघटितम् । तदिदं शरीरमधिकृत्य केनचनाभियुक्तेन कीर्तितम्—

नवद्वारपुरेऽस्मिन्नायुः स्रवति सन्ततम् ।
तिष्ठतीत्यद्भुतं तत्र गच्छतीति किमद्भुतम् ॥ इति ।

यदीदं तिष्ठति तत् कस्य हेतोः ? तत्रायं मन्त्र उत्तरयति-यन्नवसु द्वारेषु श्रीप्रभृतीनि धर्मान्तानि नवदेवशरीराणि द्वाराण्यवरुध्य स्थातुं प्रभवन्ति यतः इति । शीर्यन्त इति शरीराणि । न खल्विमानि स्थास्नूनि भवितुमर्हन्ति । देवशरीरेषु पूर्वोक्तेषु तत्तद्वाराणि स्थिररूपेणाधितिष्ठन्तु नश्वरेऽस्मिन् शरीरे मोहोऽपेयादेव । अपगते च तादृशमोहे शान्तिमवाप्तुमस्त्यवसरो भूयान् । एतदर्थमेव सकलानि ऐहिकामुष्मिकैहिकसंवलितामुष्मिकफलदानि नित्यानि नैमित्तिकानि च कर्माणि श्रौतानि स्मार्तानि चानुष्ठातुमुपदिष्टानि । सततं नियतकर्मणां सश्रद्धमनुष्ठानेन सहिष्णुता-प्रवर्द्धते । शरीरे क्लेशेऽप्यात्मनो बलं समेधते । आत्मबलसम्पन्ना विमलचेतसो वैराग्यं विषयेष्व-वाप्नुवाना नित्यनैमित्तिकान्येवाचरन्तोऽन्ते प्रारब्धं सञ्चितञ्च फलमुपभुञ्जाना जन्मनः कारणा-भावेन संसारसम्बन्धविलयं भजन्ते ।

अत्रापि साधुकर्मानुष्ठानजनितविलक्षणशक्तयः केचन याज्ञिकमीमांसकाः समाजसेवाव्याजेन रोगापाकरणारातिबाधाशमनवृष्ट्यवग्रहनिरोधादिचमत्कारप्रदर्शकेषु कर्मसु द्रव्यसंग्रहलोभेन च प्रवृत्ताः लोकानां हृदयेभ्यो विनिर्गता अभवन् । कर्मस्वधुना श्रद्दधानाः कर्मानुष्ठातृभ्यो जना विमुखा अजायन्त । इदमपि समानं तान्त्रिकाणां मीमांसकानाञ्च । यस्मै फलाय यादृशः पन्था आविष्कृतः, तस्मात्पथो यदि विच्युतिस्तर्हि तत्फलं कथमवाप्यताम् ? विषयाणामानुकूल्य-सम्पादनाय विषयिणं कञ्चन निर्द्धार्य सोऽनुकूलयितव्य इति शोभनः पन्थाः । विषयी चेद्वशीभूतो विशेषणीभूतानां विषयानां वशीभावे को नाम सन्दिहीत ?

अक्ष्यामयपीडित औषधं दृशि दद्यात्, दृश्ये तदौषधं प्रयुञ्जानः कथमिव रोगान्मुक्तः स्यात् ? कथञ्च सः कृती भवेत् ? अतो मीमांसातन्त्रं तन्त्रशास्त्रञ्च सांसारिकरोगचिकित्सायै

औषधप्रदातृणी । रत्नानामाकर इव सागरः विविधौषधीनामाकरो वेदः । उभे अपि तन्त्रे वेदादोषधीर्विचित्य स्वस्वानुरूपेणौषधं निर्माय रोगिभ्यो ददतः । अत एव काम्यचयनप्रकरणे कामनाभेदेन यथा—'**प्रजाकामश्चिन्वीत**', '**पशुकामश्चिन्वीत**', '**वृष्टिकामश्चिन्वीत**', '**आमयावीचिन्वीत**', '**तेजस्कामो यशस्कामो ब्रह्मवर्चसकामश्चिन्वीत**'[1] इत्येवं नैकविधानि चयनानि तन्नियमांश्च विधाय तत्र तत्रेष्टकोच्चयनाय मन्त्रा आम्नाताः । तेषु मन्त्रेष्वयमन्यतमः—'**अष्टचक्रा नव द्वारा । देवानां पूरयोध्या । तस्या हिरण्मयः कोशः । स्वर्गो लोको ज्योतिषावृतः**' इति ।

**अस्यार्थः**—देवानामिन्द्रादीनां पूरष्टाचक्रा चक्रवदावरणभूतास्त्वग्असृग्मांसामेदः, अस्थिमज्जाशुक्रम्, ओज इत्यष्टौ धातव यस्याः सा पूः शरीरमष्टाचक्रा । शिरोवर्तिभिस्सप्तभिर्द्वारैर्नेत्रश्रोत्रनासिकामुखसम्बन्धिभिः, अधोवर्तिभ्यां द्वाभ्यां द्वाराभ्यामुपेता नवद्वारा अयोध्या केनापि योद्धुमशक्या, तस्यां पुरि हिरण्मयः सुवर्णपदार्थसदृशः कोशोऽवकाशरूपः स्वर्गो लोकः सुखमयः स्थानविशेषो ज्योतिषा चैतन्येनावृतः परिवेष्टितो वर्तते इति । यः पुमानेवं ज्ञात्वेष्टकामुपदध्यात्, तस्मै पुंसे सर्वे देवा आयुरादिकानि फलानि ददतीत्युत्तरमन्त्रेण बोध्यते ।

अयमेव मन्त्रस्तान्त्रिकैरपि प्रमाणीक्रियते श्रीचक्रस्वरूपनिरूपणे । अष्टाचक्रा नवद्वाराअष्टकोण-दशकोणद्वितय-चतुर्दशकोणाष्टपत्र-त्रिवलय-त्रिरेखात्मकान्यष्टौ चक्राणि यस्यास्साऽष्टाचक्रा । नवद्वाराणि त्रिकोणात्मकानि यस्यास्सा नवद्वारा । देवानां पूरयोध्या देवसम्बन्धिनी पूः श्रीविद्यानगरम्, अयोध्या असाध्या मन्दभाग्यानाम् । तस्यां पुरि '**हिरण्मयः कोशः**' सहस्रदलकमलकोशः, बैन्दवस्थाने तादृशकोशस्य विद्यमानत्वात्, तत्र स्वर्गो लोकः परम आनन्दः ज्योतिषाऽऽवृतोऽस्ति ।

एवं भावयते साधकाय बैन्दवस्थाने तिष्ठद्भ्यां कामेश्वरी-कामेश्वराभ्यां आयुरादिकानि फलानि वितीर्यन्ते ।

एवं तन्त्रशास्त्राध्वरमीमांसातन्त्रयोस्साम्यस्यैवायं परिणामः—ये वाजपेयान्तमनुष्ठितक्रतवो याज्ञिकमीमांसकाः प्रायेण श्रीविद्योपासका अपि भवन्ति । तेषां समाजे '**कोशो गृहीतो वा**' इति प्रश्नः परिभाषया क्रियते । संख्याशास्त्रानुसारेण '**कोशः**' शब्दस्याक्षरसंख्यापञ्चदशात्मिका (१५) निष्पद्यते । तेन पञ्चदशाक्षर्या दीक्षा जातावेति प्रश्नस्यार्थः । एवं श्रीविद्यानिकेतनस्य स्तम्भभूताः पूज्यपादाः श्रीभास्करराया स्वीयेषु सेतुबन्धादिग्रन्थेषु श्रीविद्योपासकैस्सिद्धैरपि वैदिकनित्यनैमित्तिकानि कर्माण्यवश्यमेवानुष्ठेयानीति प्रतिपादयन्ति ।

एवमुभयोस्तन्त्रयोर्विषयेषु पर्यालोच्यमानेषु कियन्नैकट्यमस्तीति न तिरोहितं विमर्शकानाम् । परमं फलं विहाय मध्य एव पथश्च्युता ऐहिकफलेष्वेवासक्ता उभयेऽपि तदवाप्तये प्रवृत्ताः लोकानामश्रद्धाभाजनमभवन् । इमामवस्थां दूरीकर्तुं भगवत्पादाः श्रीशङ्कराचार्याः स्वजीवने शास्त्रद्वयमप्युज्जीवयामासुः । यथाक्रमं दैव्यास्सम्पदोऽर्जने चित्तवृत्तिस्थिरीकरणे च तन्त्रद्वयी नितान्तं क्षमेति स्वीयेषु ग्रन्थेषु विशेषेण प्रत्यपादयन् । एवं परीक्ष्यमाणे तन्त्रद्वयस्य मिथस्साम्ये सन्ति भूयांस्युदाहरणानि । दिङ्मात्रमिह प्रदर्शितम् । प्राप्तेऽवसरे पुनर्विशेषेण निरूपयिष्याम इति शम् ।



---

१. तै० आ० १.२६ ।

# समवायः

आचार्यश्रीबदरीनाथशुक्लः
भू० पू० कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

समवायः किलैको भावभूतोऽतिरिक्तः पदार्थः, यो न्यायवैशेषिकयोः सिद्धान्तानामाधार-भूमिः, तदाश्रित्यैव तयोः सिद्धान्तप्रसादाः प्रतिष्ठिताः । अत एव तयोः सिद्धान्तान् धर्षयितुकामा अन्ये सर्व एव वैदिका अवैदिकाश्च दार्शनिकास्तमुन्मूलयितुं प्रचुरं पराक्रमन्ते प्रयतन्ते च सततं तत्परिपालनाय नैयायिकवैशेषिकाः । अत एवात्र निबन्धे तद्रक्षणपरः परैरनाकलितपूर्वः कश्चित् प्रयास उपन्यस्यते विदुषां मनोमोदाय ।

**समवायस्य लक्षणम्**

सम्बन्धिभ्यां भिन्नो नित्यः सम्बन्धः समवायः । स हि कपालादीन् कलशादिभिः, द्रव्याणि गुणकर्मभिः, द्रव्यगुणकर्माणि जातिभिः, नित्यद्रव्याणि च विशेषैः सम्बध्नाति, सम्बन्धिभ्यां कपालकलशादिभ्यां द्रव्यगुणादिभ्यां जातिव्यक्तिभ्यां विशेषनित्यद्रव्याभ्यां भिद्यते, जन्मनाश-विधुरतया नित्यतां च धत्तेऽतस्तत्र सम्बन्धिभ्यां भिन्नत्वे सति नित्यसम्बन्धत्वरूपं लक्षणं सङ्घटते ।

घटभूतलादिसंयोगेऽतिव्यक्तिवारणाय नित्यत्वम् । आकाशादौ रूपाद्यभावानां स्वरूप-सम्बन्धेऽतिव्याप्तिवारणाय सम्बन्धिभ्यां भिन्नत्वम्, तत्रैवातिव्याप्तिवारणाय सम्बन्धिनो भिन्नत्व-मनुक्त्वा सम्बन्धिभ्यां भिन्नत्वम्, अन्यथा लाघवादाकाशस्वरूपस्यैव रूपाद्यभावसम्बन्धतया तत्र रूपाद्यभावात्मकसम्बन्धिनो भेदस्य सत्त्वेनाऽतिव्याप्तिर्वारयितुं न शक्येत ।

स्वाश्रयभूतेभ्यः सम्बन्धिभ्यो भिन्ने नित्ये घटत्वादावतिव्याप्तिवारणाय सम्बन्धत्वम् । सामान्यलक्षणप्रत्यासत्तिविधया घटत्वादेरपि सम्बन्धत्वेन दोष एष तदवस्थ इति न शङ्कनीयम्, सम्बन्धत्वस्य विशिष्टप्रत्ययजननयोग्यत्वरूपस्य विवक्षितत्त्वात् । सामान्यलक्षणप्रत्यासत्तित्वं दधाना अपि घटत्वादयो न स्वाश्रयेषु इन्द्रियविशिष्टप्रत्ययं जनयन्ति, जात्वपि **'घटादिः चक्षुष्मान्'** इत्येवं घटादौ चक्षुरादिविशिष्टप्रत्ययस्य अनुभवानारोहात् ।

**वैशेषिकोक्तसमवायलक्षणम्**

अयुतसिद्धानाम् आधार्याधारभूतानां यः सम्बन्ध इह प्रत्ययहेतुः, स समवायः । अस्मिन् लक्षणे **'इह प्रत्ययहेतुः'** इत्यंशः समवाये प्रमाणप्रदर्शनाय **'इह तन्तुषु पटः'** इत्यादिप्रतीतेः संसर्गविधया हेतुत्वेनैव तत्सिद्धेः ।

अयं भावः—या खलु प्रमात्मिका विशिष्टबुद्धिः आधाराधेयभावबुद्धिर्वा, सा विशेष्य-विशेषणयोः आधाराधेययोश्च सम्बन्धे सत्येव जायते, नान्यथा, यथा दण्डपुरुषयोः संयोगे सत्येव **'दण्डी पुरुषः'** इति प्रमा जायते, एवं भूतले घटस्य संयोगे सत्येव **'इह भूतले घटः'** इति बुद्धि-र्जायते, तथा च उक्तप्रमे यथा विशेष्यविशेषणयोः आधाराधेययोश्च सम्बन्धहेतुके, तथैव

**'इह तन्तुषु पटः'** इत्यादिप्रमाया अपि तन्तुपटयोः सम्बन्धहेतुकत्वमावश्यकम्। स च सम्बन्धः संयोगादिसम्बन्धबाधेन संयोगादिभ्यो भिन्न एव कश्चित् सम्बन्धो वाच्यः, स एव समवाय-शब्देन व्यपदिश्यते। तदेवमेतल्लक्षणे **'इह प्रत्ययहेतुः'** इत्यंशः समवायसाधकं प्रमाणं निर्दिशति। **'इह प्रत्ययहेतुः'** इत्यंशभिन्नश्च समग्रो भागो लक्षणम्। तथा च **'अयुतसिद्धानाम् आधार्याधार-भूतानां यः सम्बन्धः, स समवायः'** इति लक्षणं पर्यवस्यति।

**अयुतसिद्धत्वम्**

अयुतसिद्धशब्दघटको युतशब्दोऽमिश्रणार्थकाद् युधातोः 'क्त' प्रत्ययेन निष्पन्नः। तेन युत-सिद्धशब्दोऽमिश्रितसिद्धं ब्रूते, अमिश्रितत्वं च सम्बन्धाभाववत्त्वम्। तथा च युतसिद्धो नाम सम्बन्धाभाववत्तया सिद्धः, युतशब्दस्य नञ्पदेन समासे कृते अयुतशब्दो निष्पद्यते, इति स सम्बन्धाभावाभाववन्तं वक्ति। सम्बन्धाभावस्याभावश्च प्रतियोगिव्यधिकरणो विवक्षितः, तथा च वर्तमानयोर्ययोः सम्बन्धाभावस्य प्रतियोगिव्यधिकरणोऽभावः, अर्थाद् वर्तमानयोर्ययोः कदापि सम्बन्धाभावो नास्ति, तौ अयुतसिद्धौ। यथा यदा घटकपालौ विद्येते, तदा तयोः सम्बन्धाभावो न भवति, यथासिद्धान्तं सर्वैरेव तयोः वर्तमानत्वे कस्यचित् सम्बन्धस्यावश्यमभ्युपगमात्।

एवं घटघटत्वे, घटरूपे, घटकर्मणी, विशेषनित्यद्रव्ये अयुतसिद्धे। भूतलघटाभावौ नायुतसिद्धौ, भूतले घटसत्त्वदशायां भूतलघटाभावयोः सम्बन्धाभावसत्त्वेन भूतले घटासत्त्वकाले तत्र घटाभावसम्बन्धाभावस्याभावेऽपि स न प्रतियोगिव्यधिकरणः, तत्प्रतियोगिकसम्बन्धा-भावस्य भूतले घटसत्त्वदशायां विद्यमानत्वात्।

यदि लक्षणेऽयुतसिद्धत्वमनिवेश्य केवलम् **'आधार्याधारभूतानां यः सम्बन्धः स समवायः'** इत्येतदेव लक्षणमुच्येत, तदा घटभूतलसंयोगेऽपि अतिव्याप्तिः स्यात्, तन्निवेशे तु घटभूतलयोर-युतसिद्धत्वाभावेन न तत्संयोगेऽतिव्याप्तिः।

आधार्याधारभूतत्वं विहाय यदि **'अयुतसिद्धानां यः सम्बन्धः स समवायः'** इत्येतदेव लक्षणं मन्येत, तदा विभूनां परस्परं नित्यसंयोगाभ्युपगमे विभुद्रव्ययोः संयोगेऽतिव्याप्तिः स्यात्, विभुनोः उक्तरूपायुतसिद्धतया तयोः संयोगे लक्षणप्रसरस्य दुर्निवारत्वात्। आधार्याधारभूतानामि-त्युक्तौ च न तत्रातिव्याप्तिः, विभुद्रव्येषु आधार्याधारभावस्यासत्त्वात्।

**उक्तस्यानुगमः**

द्वित्वविशिष्टद्वित्वाश्रयत्वम् अयुतसिद्धत्वम्। वैशिष्ट्यं च स्वतादात्म्य-स्वावच्छिन्नकालिक-सम्बन्धावच्छिन्नाधिकरणतावत्कालावच्छेद्यस्वाश्रयवृत्तिप्रतियोगिव्यधिकरणसम्बन्धाभावाभावकत्त्वै-तदुभयसम्बन्धेन, अवच्छेद्यत्वान्तं स्वाश्रयवृत्तित्वे विशेषणम्, स्वाश्रयवृत्तित्वं च द्वितीयाभावे विशेषणम्।

घटकपालगतद्वित्वं स्वात्मकद्वित्वेन विशिष्टं तत्र तत्तादात्म्यस्य तदवच्छिन्नकालिक-सम्बन्धावच्छिन्नाधिकरणताद्घटकपालद्वयवत्कालावच्छेदेन तदाश्रये घटे कपाले च तयोः सम्बन्धाभावस्य प्रतियोगिव्यधिकरणाभावस्य च सत्त्वात्। तदित्थं द्वित्वविशिष्टद्वित्वाश्रयतया घटकपालयोरयुतसिद्धत्वम्।

घटभूतलयोः नायुतसिद्धत्वम्, घटभूतलगतद्वित्वस्य द्वित्वविशिष्टत्वाभावात् । तयोः दूर-स्थितिदशायां सम्बन्धाभावस्य सत्त्वेन सन्निधिदशायामपि प्रतियोगिव्यधिकरणस्य तदभावस्य घटभूतलद्वयवत्कालावच्छेदेन तयोरसत्त्वात् ।

भूतलघटाभावयोरपि नायुतसिद्धत्वम् । भूतले घटसत्त्वदशायां भूतलघटाभावयोः सम्बन्धा-भावस्य सत्त्वेन भूतले घटासत्त्वदशायामपि प्रतियोगिव्यधिकरणतदभावस्य भूतलघटाभावद्वय-वत्काले तयोरसत्त्वेन भूतलघटाभावगतद्वित्वस्य द्वित्वविशिष्टत्वाभावेन तयोः उक्तसम्बन्धद्वयेन द्वित्वविशिष्टद्वित्वाश्रयत्वाभावात् ।

अथवाऽयुतसिद्धत्वम्

ययोः सतोः अविनश्यदवस्थमेकम् अपराश्रितमेवावतिष्ठते तत्त्वम् । अविनश्यदवस्थत्वं च स्वप्रतियोगित्व-स्वाव्यवहितपूर्वत्वोभयसम्बन्धेन ध्वंसविशिष्टत्वाभावः । घटो हि स्वनाशस्य अव्यहितपूर्वक्षणे विनश्यदवस्थः, तत्र तदीयध्वंसस्य स्वप्रतियोगित्व-स्वाव्यवहितपूर्वत्वोभयसम्बन्धेन विद्यमानतया ध्वंसविशिष्टत्वात्, स्वनाशस्य अव्यवहितपूर्वक्षणात् पूर्वक्षणेषु च अविनश्यदवस्थ-स्तदानीं तत्र स्वध्वंसाव्यवहितपूर्वत्वाभावेन उक्तसम्बन्धद्वयेन ध्वंसविशिष्टत्वाभावात् ।

अथवा स्वाश्रयकालपूर्वकालवृत्तित्वम् अविनश्यदवस्थत्वम् । घटः स्वध्वंसस्य अव्यवहित-पूर्वक्षणे न अविनश्यदवस्थः, तस्य घटाश्रयकालपूर्वत्वाभावेन तदानीं स्वाश्रयकालपूर्वकाल-वृत्तित्वाभावात् ।

कपालनाशेन विनश्यन् घटः कपालनाशोत्पत्तिक्षणे कपालमनाश्रित्यैवाऽवतिष्ठते । अतोऽ-विनश्यदवस्थस्य एकस्य अपराश्रिततयैवावतिष्ठमानत्वमुक्तम् । अविनश्यदवस्थत्वं घटे तदुत्पत्तेः पूर्वमपि वर्तते, तदानीं तस्यावस्थितेरेवाभावेन अपराश्रिततयैव अवस्थानं दुर्घटमिति ययोः सतोरित्युक्तम्, तथा च तदानीं कपालस्यैव सत्त्वं न घटस्येति ययोः सतोः मध्ये अनु-त्पन्नघटस्य ग्रहणासम्भवेन न तदपेक्षया दोषावसरः ।

उक्तलक्षणस्यानुगमः

द्वित्वविशिष्टद्वित्ववद्भावत्वम् । वैशिष्ट्यञ्च स्वतादात्म्य, स्वाश्रयवत्त्वोभयसम्बन्धेन । स्वाश्रयवत्ता स्ववृत्तित्व, स्वविशिष्टवृत्तित्वोभयसम्बन्धेन । स्ववैशिष्ट्यञ्च स्वाश्रयत्व, स्वशिष्टकालत्व-व्यापकत्वोभयसम्बन्धेन, काले स्ववैशिष्ट्यञ्च स्वाश्रत्व-स्वाश्रयकालपूर्वत्वोभयसम्बन्धेन, व्यापकत्वं कालिकसम्बन्धेन ।

तथा हि द्वित्वविशिष्टद्वित्वं स्वात्मकद्वित्वेन विशिष्टं घटकपालगतद्वित्वम्, तद्वान् भावः घटः कपालश्चेति तदुभयमयुतसिद्धम् । घटकपालगतं द्वित्वं स्वात्मकेन । द्वित्वेन कथं विशिष्टमिति चेदित्थम्—

घटकपालगतं द्वित्वं स्वात्मकेन द्वित्वेन विशिष्टं, तत्र तस्य तादात्म्येन स्वाश्रयवत्त्व-सम्बन्धेन च विद्यमानत्वात् । यथा स्वं द्वित्वं तदाश्रयो घटः, तद्वत्ता घटकपालगतद्वित्वेऽस्ति, द्वित्वस्य स्वाश्रये घटे वृत्तित्वात् स्वविशिष्टवृत्तित्वाच्च । तथा हि स्वं घटः तद्विशिष्टः कपालः, तस्मिन् घटस्य स्वाश्रयत्वं स्वविशिष्टाकालत्वव्यापकत्वोभयसम्बन्धेन विद्यमानत्वात्, कपाले घटस्य

स्वाश्रयत्वं स्पष्टम्, स्वविशिष्टकालत्वव्यापकत्वं चेत्थम्—स्वं घटः, तद्विशिष्टः कालो विनश्यत्ताकालातिरिक्तः सर्वो घटकालः, तत्र घटाश्रयत्वस्य घटाश्रयकालपूर्वत्वस्य च सत्वात् ।

**अत्रेवमवधेयम्**—काले स्ववैशिष्ट्यनियामकतया उक्तं स्वाश्रयत्वं स्वाश्रयावच्छेदेन कालिकसम्बन्धावच्छिन्नस्वाश्रयत्वरूपं बोध्यम् । अतः प्रलये घटस्यासत्त्वेऽपि न क्षतिः, तत्र स्वाश्रयघटावच्छेदेन कालिकसम्बन्धावच्छिन्नघटत्वाश्रयत्वस्याभावेन तस्य घटत्वविशिष्टकालत्वाभावात् । स्वाश्रयावच्छेदेनेत्युक्तौ प्रलयोऽपि घटत्वविशिष्टकालः स्यात् । तत्र च घटस्याभावेन घटघटत्वगतद्वित्वे द्वित्वविशिष्टत्वाभावाद् घटघटत्वयोरयुतसिद्धत्वं न स्यात् । भावत्वप्रवेशाद् घटाभावपटाभावयोर्न अयुसिद्धत्वापत्तिः ।

**अथवाऽयुतसिद्धत्वम्**

अपृथक्कालत्वम्, अपृथग्देशत्वम् अपृथक्स्वभावत्वं वा ।

तत्र अपृथक्कालत्वं नाम पृथक्कालवृत्तित्वम्, तत्पृथक्कालत्वं च तदभाववत्कालत्वम् । घटो हि कपालाभाववति काले न तिष्ठतीति स कपालापृथक्कालतया कपालेनायुतसिद्धः । यद्यपि कपालनाशाद् घटनाशस्थले कपालाभाववति कपालनाशोत्पत्तिक्षणे घटस्तिष्ठतीति घटे कपालाभाववत्कालवृत्तित्वस्यैव सम्पर्के तस्य कपालापृथक्कालत्वमनुपपन्नम्, तथापि कपालाभाववति काले स्वाश्रयावच्छेदेनवृत्तित्वरूपस्य कपालापृथक्कालत्वस्य विवक्षणे नोक्तदोषावसरः, कपालनाशोत्पत्तिकाले कपालस्यासत्त्वेन तत्र घटस्य स्वाश्रयावच्छेदेनावृत्तित्वात् । इत्थं च वस्त्वस्यापि घटापृथक्कालत्वं न प्रतिहन्यते, प्रलये घटत्वस्य सत्त्वेऽपि स्वाश्रयावच्छेदेनासत्त्वात् । सर्वेषां ब्रह्माण्डानां युगपत्खण्डप्रलयाभ्युपगमात् ।

ननु तथापि घटस्य घटत्वापृथक्कालत्वं नोपपद्यते । घटत्वाभाववतः कालस्याप्रसिद्धत्वादिति चेत्, न, स्वाभाववत्कालनिरूपितस्वाश्रयावच्छेद्यवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्वस्य तदपृथक्कालत्वरूपतया विवक्षितत्वात् । तथा च घटत्वाभाववतः कालस्याप्रसिद्धतया स्वाभावत्कालवृत्तित्वस्य घटत्वव्यधिकरणसम्बन्धतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाभावस्य घटे सत्वेन तस्य घटत्वापृथक्कालत्वं निराबाधम् ।

न चैवं केवलान्वयितया तदभावस्य पटादावपि सत्त्वेन पटादेरपि घटत्वापृथक्कालत्वापत्तिः स्यादिति वाच्यम्, आधारत्वाधेयत्वान्यतर, स्वाभाववत्कालवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वैतदुभयसम्बन्धेन तद्वत्त्वस्य तदपृथक्कालत्वरूपतया विवक्षितत्वात् । पटादौ घटत्वस्य द्वितीयसम्बन्धसत्त्वेऽपि आधारत्वाधेयत्वयोरन्यतरस्य तत्रासत्वेन उक्तोभयसम्बन्धेन घटत्ववत्त्वाभावेन घटत्वापृथक्कालत्वापत्यसम्भवात् ।

घटे घटत्वस्य प्रथमसम्बन्धोपपत्तये अन्यतरगर्भे आधारत्वस्य घटत्वे तत्सम्बन्धोपपत्तये अन्यतरगर्भे आधेयत्वस्य प्रवेशः ।

ननु गगनघटाभावयोः सम्बन्धे 'अपृथक्कालयोरसम्बन्धः समवायः' इति लक्षणस्यातिव्याप्तिः, उक्तापृथक्कालत्वस्य तयोरपि सत्त्वादिति चेन्न, उक्तापृथक्कालत्वकुक्षौ भावत्वस्यापि प्रवेशनीयत्वात् ।

न चैवमपि गगन-गगनत्वावच्छिन्नप्रतियोगितयोरपि भावत्वघटितोक्तापृथक्कालत्वस्य सत्त्वेन तयोः सम्बन्धेऽतिव्याप्तिरिति वाच्यम्, गगनत्वावच्छिन्नप्रतियोगित्वस्य गगनात्मकत्वे तयोराधाराधेयभावस्यानुपपत्या, गगनत्वात्मकत्वे गगनत्वस्य शब्दाश्रयत्वरूपतया अतिगौरवेण च गगनगतैकत्वरूपतया गगनगते तत्सम्बन्धे समवायत्वस्य सत्त्वेनेष्टापत्तेः ।

**अथवा अपृथग्देशत्वम् अयुतसिद्धत्वम्**

घटकपालयोरपृथग्देशत्वं च तादात्म्य, स्ववृत्त्यभावीयवृत्तित्वनिष्ठप्रतियोगितानिरूपितावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकत्वान्यतरसम्बन्धेन वस्तुविशिष्टत्वम् । अस्ति हि घटे स्वात्मकवस्तुविशिष्टत्वं तादात्म्येन, कपाले च घटे कपालनिष्ठवृत्तित्वाभावस्य सत्त्वेन द्वितीयसम्बन्धेन ।

अथवा अभावविशिष्टत्वमपृथग्देशत्वम्, वैशिष्टयञ्च स्वाश्रयत्व, स्वनिष्ठाभावीयप्रतियोगितानिरूपितोक्तावच्छेदकत्वान्यतरसम्बन्धेन । घटे कपालभिन्नवृत्त्वाभावस्याश्रयतायाः कपाले च तदीयप्रतियोगितानिरूपितपरम्परीयावच्छेदकतायाः सत्त्वेन तयोरभावविशिष्टतयाऽपृथग्देशत्वम् ।

न च घटघटत्वावच्छिन्नप्रतियोगितयोरपि उक्तापृथग्देशत्वसत्वेन तयोः सम्बन्धे समवायलक्षणातिव्याप्तिरिति वाच्यम्, घटत्वावच्छिन्नप्रतियोगिताया लाघवाद् घटत्वरूपतया घटतत्सम्बन्धे समवायत्वस्यैव सत्त्वेनेष्टापत्तेः ।

न चैवमपि तद्घटतद्घटत्वावच्छिन्नप्रतियोगितयोः सम्बन्धेऽतिव्याप्तिरिति वाच्यम्, तद्घटत्वावच्छिन्नप्रतियोगिताया अपि तद्घटानुयोगिकसम्बन्धेन घटत्वरूपतया तद्घटेन सह तत्सम्बन्धेऽपि समवायलक्षणस्येष्टत्वात् ।

**अथवा अपृथक्स्वभावत्वम् अयुतसिद्धत्वम्**

अत्र हि स्वभावोऽविनाभावः, स हि जातिव्यक्त्योः अपृथग्भूतः, तयोरेकां विना अन्यस्या असम्भवात् । नन्वेतद् अनित्यव्यक्तिस्थाने जातिव्यक्त्योः दुर्घटम्, घटाभावकाले प्रलये घटव्यक्तिं विनापि घटत्वजातेः सत्त्वात् । एवं तन्तुपटयोरपि नैतदुपपद्यते पटोत्पत्तेः पूर्वम्, तन्तूनां संयोगनाशोत्तरं च पटं विनापि तन्तूनां सद्भावादिति चेन्न, ययोः सतोः अविनाभावः—आधाराधेयभावेनैव वर्तनं तत्त्वस्य अपृथग्देशत्वरूपतया विवक्षितत्वात् । तथा हि घटघटत्वे यदा विद्येते, तदा ते आधाराधेयभावेनैव वर्तेते, न हि वर्तमानो घटो घटत्वं न धत्ते, न वा घटत्वं वर्तमानं घटं नाश्रयते । एवमेव यदा पटो विद्यते, तदा स तन्तूनाधारीकृत्यैव तिष्ठति, तन्तवोऽपि तं दधाना एव तिष्ठन्ति । नैषा स्थितिर्घटभूतलयोः, भूतलघटाभावयोर्वा, घटभूतलयोः सत्त्वेऽपि न नूनं तयोराधाराधेयभावः, घटस्यान्यत्राप्यवस्थितिसम्भवात् । भूतलघटाभावयोर्विद्यमानतादशायामपि घटाभावस्यान्यत्र वर्तनसम्भवात् ।

न च घटस्य सत्त्वदशायां कालघटयोः आधाराधेयभावेनैव वर्तनात् तयोः सम्बन्धे समवायलक्षणमतिगच्छेदिति वाच्यम्, लक्षणे सर्वाधारतानियामकसम्बन्धातिरिक्तत्वस्य विवक्षणीयत्वात् ।

**समवाये मानम्**

अनुमानमेव समवाये मूलभूतं मानम्, तच्च कार्यकारणभावाधाराधेयभावविशेष्यविशेषणभावादिमुखेन प्रवर्तते । तथा हि पटस्तन्तुषु जायते, कपालादिषु न जायते, तन्तुष्विव कपाला-

दिष्वपि पटोत्पत्तेर्वारणाय पटं प्रति तन्तूनां तादात्म्येन हेतुत्वं मन्यते, तथा चेदमनुमानं निष्प्रत्यूहं पदमादधाति 'तन्तुनिष्ठतादात्म्यसम्बन्धावच्छिन्नकारणतानिरूपितपटनिष्ठकार्यता किञ्चित्सम्बन्धावच्छिन्ना, कार्यतात्वात्, कालनिष्ठकारणतानिरूपितघटनिष्ठकालिकसम्बन्धावच्छिन्नकार्यतावत्। घटप्रभृतीनि सर्वाणि कार्याणि कालिकसम्बन्धेन काले जायन्ते, न किमपि कार्यं कालिकसम्बन्धेन कालभिन्ने जायते, न वा कालिकभिन्नेन केनचित् सम्बन्धेन सर्वाणि कार्याणि काले जायन्ते। अतः कालिकसम्बन्धेन कार्यसामान्यं प्रति तादात्म्यसम्बन्धेन कालो हेतुर्मन्यते, तदेवं निर्दिष्टदृष्टान्तस्य निर्विवादतया तत्र कार्यतात्वे किञ्चित्सम्बन्धावच्छिन्नत्वस्य गृहीतायाः व्याप्तेः बलादुक्तकार्यतात्मकपक्षे सिध्यत् किञ्चित्सम्बन्धावच्छिन्नत्वं सम्बन्धान्तरावच्छिन्नत्वस्य बाधेन समवायसम्बन्धावच्छिन्नत्वात्मकम् पर्यवस्यति।

एवं पटस्तन्तूनाश्रयते, न कपालादीन्, 'तन्तुषु पटो न कपालादिषु' इत्येवमेव प्रत्ययात्। अतः 'तन्तुनिष्ठाधारतानिरूपितपटनिष्ठाधेयता किञ्चित्सम्बन्धावच्छिन्ना, आधेयतात्वाद्, भूतलनिष्ठाधारतानिरूतघटनिष्ठसंयोगसम्बन्धावच्छिन्नाधेयतावत्, इत्यनुमानेन आधेयतायां सिध्यत् किञ्चित्सम्बन्धावच्छिन्नत्वम् अतिप्रसङ्गाद्यनापादकसम्बन्धान्तरावच्छिन्नत्वबाधेन समवायावच्छिन्नत्वरूपतया पर्यवस्यति।

उक्तवदेव 'अहं सुखी' इति ज्ञानीया अहमात्मनिष्ठविशेष्यतानिरूपितसुखनिष्ठप्रकारता किञ्चित्सम्बन्धावच्छिन्ना, प्रकारतात्वात्, पर्वतनिष्ठविशेष्यतानिरूपितधूमनिष्ठसंयोगसम्बन्धावच्छिन्नप्रकारतावद्, इत्यनुमानेनापि सिध्यत् किञ्चित्सम्बन्धावच्छिन्नत्वं सम्बन्धान्तरावच्छिन्नत्वबाधेन समवायावच्छिन्नत्वरूपं प्रतिफलति।

न च अवयवायवविभावेनाभिमतेषु तन्तुपटादिषु, धर्मधर्मिभावेनाभिमतेषु घटघटत्वादिषु घटरूपादिषु च तादात्म्यसम्बन्धस्य स्वरूपसम्बन्धस्य वा स्वीकारेणापि उक्तानुमानानां सुघटत्वेन तद्बलेन समवायसाधनं दुःस्वप्नकल्पमिति वाच्यम्, अभिन्ने हेतुहेतुमद्भावाभावेन आश्रयाश्रितभावाभावेन धर्मधर्मिभावाभावेन च उक्तद्वन्द्वयोस्तादात्म्याभ्युपगमासम्भवात्।

न हि कश्चित् पामरोऽपि एकमेव पदार्थं हेतुं कार्यं च मन्यते, समवेतस्याधारमाधेयं चाववुध्यते, एकमेव धर्मं धर्मिणं च स्वीकुरुते, कथं तर्हि कृतविद्यास्तथा स्वीकुर्युः। यदि एकस्मिन्नपि रूपभेदेन हेतुहेतुमद्भावाधाराधेयभावादीनि उपपाद्यत्वेनाभिमन्येरन्, तदा याभ्यां रूपाभ्यां भेदकल्पना ताभ्यां तत्र तादात्म्यस्य स्वीकारानर्हतया कश्चिदन्य एव सम्बन्धः शरणीकरणीयः स्यात्।

स्वरूपसम्बन्धेनापि समवायो नान्यथयितुं शक्यः, अवयविनां जात्यादिधर्माणां गुणादीनां च अनन्ततया तेषु सम्बन्धत्वकल्पनायां महागौरवात्।

**समवाय एकोऽनेको वा**

समवायः समवेतुमर्हतां समेषां पदार्थानामेक एव, पदार्थभेदेन भिन्नत्वे तु स्वरूपेणैव तेषां कृत्स्नापेक्षानिर्वाहसम्भवेन समवायकल्पनाया एवासम्भवात्। न चैवं पदार्थानां साङ्कर्यं दुष्परिहरं समवायस्यैकत्वे सर्वपदार्थानां समवायस्य सर्वत्र सत्त्वेन सम्बन्धसत्तायाः सम्बन्धिसत्तानियामकतया सर्वत्र सर्वपदार्था आपद्येरन्। तथा च द्रव्यगुणादीनां क्षितिजलादीनां रूपरसादीनां, गवाश्वादीनां देवनरादीनां, पशुमनुष्यादीनां स्त्रीपुरुषाणां च भेदो लुप्येत, इति चेन्न, तत्तत्प्रतियोगिकत्वविशिष्टसम्बन्धस्यैव तत्तदाश्रयताया नियामकत्वोपगमेन कथितापत्त्यसम्भवात्।

अयं भावः—न हि तस्य सम्बन्ध एव तदाश्रयताया नियामकः, तथा सति घटभूतलयोः संयोगस्यैकतया स यथा घटे तथा भूतलेऽपि, इति भूतले घटसंयोगस्येव घटे भूतलसंयोगस्य सत्त्वेन भूतले घटाश्रयताया इव घटे भूतलाश्रयताया आपत्तेः। तदीयसम्बन्धस्य तदाश्रयताया नियामकत्वमस्वीकृत्य तत्प्रतियोगिकत्वविशिष्टसम्बन्धस्य तदाश्रयताया नियामकत्वोपगमे तु नैष दोषः। **'भूतले घटस्य संयोगः सम्बन्धो न तु घटे भूतलस्य'** इत्याद्यनुभवेन घटभूतलसंयोगे घटप्रतियोगिकत्वस्यैव मान्यतया घटे भूतलप्रतियोगिकसंयोगस्याभावेन न तत्र भूतलाश्रयताऽऽपत्तिः।

तथा च यथा उक्तानुभवबलेन एकोऽपि घटभूतलसंयोगः भूतलानुयोगिकघटप्रतियोगिक एव, न घटानुयोगिकभूतलप्रतियोगिकः, तथैव **'द्रव्येषु द्रव्यत्वस्य समवायः सम्बन्धो न गुणादिषु'** इत्यनुभवबलेन समवाये द्रव्यानुयोगिकद्रव्यत्वप्रतियोगिकत्वमेव न गुणाद्यनुयोगिकद्रव्यत्वप्रतियोगिकत्वमिति गुणादिषु द्रव्यत्ववत्तानियामकसम्बन्धाभावेन द्रव्यत्वरहिततया एवमेव द्रव्यादीनां गुणत्वादिरहिततया न पदार्थसाङ्कर्यम्।

न च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं यतो घटभूतलयोः संयोग उक्तानुभवबलेन घटप्रतियोगिक एव न भूतलप्रतियोगिक इति भूतलप्रतियोगिकसंयोगस्य घटेऽभावेन न तस्य भूतलाश्रयाऽऽपत्तिः, परं समवायस्यैकतया यः समवायो द्रव्यत्वप्रतियोगिकः, स एव गुणत्वादिप्रतियोगिकोऽपि, अतो द्रव्ये द्रव्यत्वप्रतियोगिकसमवायस्येव गुणत्वादिप्रतियोगिकसमवायस्यापि सत्त्वेन द्रव्यस्य गुणत्वाद्यापत्तिः तुल्यन्यायेन गुणादीनां द्रव्यत्वापत्तिश्च दुर्निवारेति वाच्यम्, यत्र ययोर्द्रव्ययोरेक एव संयोगः परस्परप्रतियोग्यनुयोगिकः, तत्र स्वप्रतियोगिकसंयोगस्य स्वस्मिन्नपि सत्त्वेन स्वस्य स्वाश्रयत्वापत्तिवारणाय यत्सम्बन्धे यदनुयोगिकत्वावच्छेदेन यत्प्रतियोगिकत्वं तत्प्रतियोगिकतत्सम्बन्धस्तत्रैव तदाश्रयताया नियामक इति नियमस्याभ्युपेयतया पदार्थसाङ्कर्यापत्त्यसम्भवात्, समवाये द्रव्यानुयोगिकत्वावच्छेदेनैव द्रव्यत्वप्रतियोगिकत्वस्य गुणाद्यनुयोगिकत्वावच्छेदेनैव गुणत्वादिप्रतियोगिकत्वस्य सत्त्वेन गुणादिषु द्रव्यत्वाश्रयताया द्रव्येषु गुणत्वाद्याश्रयतायाश्चानापत्तेः।

**समवायः प्रत्यक्षोऽप्रत्यक्षो वा**

घटाकाशयोः संयोगस्य प्रत्यक्षत्ववारणाय न्यायमते सम्बन्धप्रत्यक्षे सम्बन्धिद्वयप्रत्यक्षं कारणं मन्यते, वैशेषिकमते च यावदाश्रयप्रत्यक्षं कारणं मन्यते। तथा च न्यायमते संसर्गतासम्बन्धेन प्रत्यक्षं प्रति स्वविषयानुयोगिकत्व, स्वविषयप्रतियोगिकत्वोभयसम्बन्धेन प्रत्यक्षं कारणम्। घटभूतलयोः प्रत्यक्षमुक्तसम्बन्धद्वयेन घटभूतलयोः संयोगे तिष्ठतीति तत्र घटवद् भूतलमिति प्रत्यक्षं संसर्गतासम्बन्धेन जायते। घटाकाशसंयोगस्थले च घट एव प्रत्यक्षो नत्वाकाशः, अतस्तत्र घटाकाशसंयोगे उक्तोभयसम्बन्धेन प्रत्यक्षस्याभावान्न तत्र संसर्गतासम्बन्धेन प्रत्यक्षापत्तिः।

नन्वेवमपि यः संयोगः परस्परप्रतियोग्यनुयोगिकः, तस्यैकसम्बन्धिमात्रप्रत्यक्षतोऽपि प्रत्यक्षापत्तिस्तत्र एकसम्बन्धिमात्रप्रत्यक्षस्यैवोक्तोभयसम्बन्धेन सत्वादिति चेन्न, स्वनिरूपितविषयतावत्त्वसम्बन्धेन सम्बन्धिप्रत्यक्षस्य कारणत्वोपगमेन दोषाभावात्, विषयतावत्ता च स्वाश्रयानुयोगिकत्व, स्वाश्रयविशिष्टप्रतियोगिकत्वोभयसम्बन्धेन। स्वाश्रयवैशिष्ट्यञ्च स्वभिन्नत्व, स्वनिरूपकप्रत्यक्षनिरूपितविषयतावत्त्योभयसम्बन्धेन। तथा चोक्तसंयोगस्य एकसम्बन्धिमात्रप्रत्यक्षतो न

प्रत्यक्षापत्तिः, तत्प्रत्यक्षस्य द्वितीयसम्बन्धेन तत्राभावात्। स्वस्मिन् स्वाश्रयवैशिष्ट्यस्य स्वभिन्नत्वाभावेन, स्वभिन्ने च तदप्रत्यक्षत्वे स्वनिरूपकप्रत्यक्षनिरूपितविषयत्वाभावेनाविद्यमानतया तत्संयोगप्रतियोगिनि स्वाश्रयविशिष्टत्वाभावात्।

न चैवं भिन्नाभ्यां घटभूतलप्रत्यक्षाभ्यां घटभूतलयोः संयोगस्य प्रत्यक्षं न स्यात्, घटप्रत्यक्षस्य भूतलप्रत्यक्षस्य चोक्तोभयसम्बन्धेन तयोः संयोगे सत्त्वादिति वाच्यम्, स्वविषयानुयोगिकत्वसम्बन्धेन स्वविषयप्रतियोगिकत्वसम्बन्धेन च प्रत्यक्षस्य पृथक् पृथक् कारणत्वास्वीकारेण दोषाभावात्।

किं वा स्वाश्रयानुयोगिकत्व, स्वाश्रयभिन्नप्रत्यक्षीयविषयतावत्प्रतियोगिकत्वोभयसम्बन्धेन स्वनिरूपितविषयतावत्त्वसम्बन्धेन प्रत्यक्षस्य कारणत्वाभ्युपगमेन दोषाभावात्।

एवं च रूपघटाद्योः समवायस्यापि प्रत्यक्षत्वमुपपद्यते तत्र रूपटादिप्रत्यक्षस्योक्तोभयसम्बन्धेन सत्त्वेन संसर्गतासम्बन्धेन तत्र प्रत्यक्षोत्पत्तौ बाधकाभावात्। तदित्त्थं **न्यायमते समवायः प्रत्यक्षः।**

**वैशेषिकमते** समवायो न प्रत्यक्षः, यतो हि तन्मते घटाकाशसंयोगादीनां प्रत्यक्षवारणाय सम्बन्धप्रत्यक्षे सम्बन्धस्य यावदाश्रयाणां प्रत्यक्षं कारणम्। तच्च स्वनिरूपितसंसर्गतात्वसम्बन्धेन प्रत्यक्षं प्रति विषयत्वसम्बन्धावच्छिन्नस्वाश्रयाश्रयत्वव्यापकत्वसम्बन्धावच्छिन्नस्ववृत्तित्वसम्बन्धेन प्रत्यक्षं कारणमित्येवं रूपम्। तथा च घटाकाशसंयोगनिष्ठसंसर्गतायां तदाश्रयस्य संयोगस्याश्रये आकाशे विषयतासम्बन्धेन प्रत्यक्षस्यासक्त्या तस्यां स्वाश्रयाश्रयत्वव्यापकत्वसम्बन्धावच्छिन्नवृत्तितासम्बन्धेन प्रत्यक्षस्यासत्त्वेन न तत्र स्वनिरूपितसंसर्गतात्वसम्बन्धेन प्रत्यक्षापत्तिर्भवितुमर्हा, इति फलतया घटाकाशसंयोगस्य न प्रत्यक्षम्।

ननु घटाकाशसंयोगादीनां प्रत्यक्षवारणाय न्यायमतोक्तकार्यकारणभावस्यैव लाघवात् स्वीकर्तुमुचितत्वेन वैशेषिकोक्तः कार्यकारणभावो न समीचीन इति चेन्न धटपटाकाशानां परस्परप्रतियोग्यनुयोगिकसंयोगाभ्युपगमे घटपटयोः प्रत्यक्षमात्रतो न्यायमते तत्संयोगस्य प्रत्यक्षत्वापत्तेः। वैशेषिकोक्तकार्यकारणभावे तु न तदापत्तिः, घटपटयोः प्रत्यक्षस्य उक्तसंयोगाश्रय आकाशे विषयतासम्बन्धेनासत्त्वेन तत्प्रत्यक्षे उक्तसंयोगनिष्ठसंसर्गतायाः स्वाश्रयाश्रयत्वव्यापकत्वसम्बन्धेनाविद्यमानतया तत्सम्बन्धावच्छिन्नस्ववृत्तित्वसम्बन्धेनोक्तप्रत्यक्षस्य तत्संयोगनिष्ठसंसर्गतायामसत्त्वेन तत्र स्वनिरुपितसंसर्गतात्वसम्बन्धेन प्रत्यक्षोत्पत्तेरापादयितुमशक्यत्वात्।

एवं च समवायस्यैकतया तन्निष्ठसंसर्गताया आश्रयस्याश्रये गगनादौ कस्यापि प्रत्यक्षस्य विषयतासम्बन्धेनासत्त्वेन तस्याः क्वापि प्रत्यक्षे स्वाश्रयाश्रयत्वव्यापकत्वसम्बन्धावच्छिन्नस्ववृत्तित्वसम्बन्धेन तत्संसर्गतायामसत्त्वेन न तत्र स्वनिरुपितसंसर्गतात्वसम्बन्धेन प्रत्यक्षोत्पत्तिः सम्भवेति **वैशेषिकमते** समवायोऽ**प्रत्यक्ष** एव।

उभयोः मतयोः समवायस्य प्रत्यक्षत्वाप्रत्यक्षत्वकृतविशेषादेव समवाये विप्रतिपन्नान् प्रति न्यायमते गुणक्रियादिविशिष्टबुद्धिविषयतया समवायानुमानम्, वैशेषिकमते च गुणक्रियादिविशिष्टप्रत्यक्षहेतुतया समवायानुमानम्। तथा हि न्यायमते गुणक्रियादिविशिष्टबुद्धिः, विशेष्यविशेषण-

सम्बन्धविषया, विशिष्टबुद्धित्वात्, **'दण्डी पुरुषः'** इतिविशिष्टबुद्धिवद् इत्याद्यनुमानप्रयोगः; वैशेषिकमते च गुणक्रियादिविशिष्टप्रत्यक्षप्रमा विशेष्यविशेषणसम्बन्धहेतुका, **'दण्डी पुरुषः'** इति प्रत्यक्षप्रमावदित्याद्यनुमानप्रयोगः ।

ननु वैशेषिकमते **'रूपी घटः'** इति प्रत्यक्षस्य समवायाविषयकत्वे तत्र रूपनिष्ठप्रकारतायां समवायसम्बन्धावच्छिन्नत्वस्यासत्त्वेन प्रकारतायां सम्बन्धावच्छिन्नत्वनियमभङ्गः **'समवायेन रूपाभाववान् घटः'** इति बुद्धौ तस्य प्रतिबन्धकत्वानुपपत्तिश्च, तत्प्रतिबन्धकतावच्छेदकस्य समवायसम्बन्धावच्छिन्नरूपत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकत्वस्य तत्रासत्त्वादिति चेन्न, गुरुमते शुक्तौ रजतव्यवहारप्रवर्तकज्ञानस्थाने 'इदमिति, रजतमिति' भिन्नज्ञानीयविषयतयोरपि निरूप्यनिरूपकभावमुपगम्य यथा इदमाकारज्ञानस्य रजतत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताकत्वं स्वीकृत्य इदमर्थे रजतार्थिप्रवृत्तिजनकत्वमुपपाद्यते, तथैव 'रूपी घटः' इति प्रत्यक्षीयरूपनिष्ठप्रकारतायां तत्प्रत्यक्षेऽभावसमानेनापि तन्निमित्तभूतेन समवायेनावच्छिन्नत्वमभ्युपगम्य तस्य घटे रूपाभावबुद्धेः प्रतिबन्धकत्वस्य प्रकारतायां सम्बन्धावच्छिन्नत्वनियमस्य चोपपादनसम्भवात् ।

न च **'रूपी घटः'** इति प्रत्यक्षान्यबुद्धिप्रकारतायां समवायावच्छिन्नत्वं समवायनिष्ठसंसर्गता निरूपितत्वम् उक्तप्रत्यक्षीयप्रकारतायां चान्यादृशं, तत्र समवायस्य संसर्गविधयाऽभानेन तादृशप्रकारतायां समवायनिष्ठसंसर्गतानिरूपितत्वस्यासम्भवात् । तथा च **'रूपी घटः'** इति प्रत्यक्षतदायतथाविधनिश्चियसाधारणं च प्रतिबन्धकत्वं न स्यादिति वाच्यम्, **'रूपी घटः'** इति प्रत्यक्षीयप्रकारतायाः सम्बन्धानवच्छिन्नत्वे समवायसम्बन्धान्यसम्बन्धानवच्छिन्नरूपत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन तदुभयबुद्धिसाधारणप्रतिबन्धकत्वस्य वक्तुं शक्यत्वात् ।

न च तथापि प्रकारतायां संसर्गतानिरूपितत्वनियमभङ्गप्रसङ्गोऽपरिहार्य एवेति वाच्यम्, वैशेषिकैः तन्नियमस्यानभ्युपगमात् ।

**समवायः स्वतः सम्बद्धः**

ननु रूपघटाद्योः सम्बन्धः समवायश्चेत् कल्प्यते तर्हि ताभ्यां सह तस्य सम्बन्धो नूनमभ्युपेयः, अन्यथा ताभ्यां स्वयमसम्बद्धः स तयोः सम्बन्धनं कथं कुर्यात्, न हि यः स्वयं येन असम्बद्धः, स कश्चिदन्यं तेन सम्बद्धं कर्तुं प्रभवति, अन्यथा ह्रदेन असम्बद्धोऽपि वह्नेः संयोगस्तेन वह्निमपि योजयेत् । स च सम्बन्धो यदि ततोऽन्यस्तदा तस्याप्यन्यसम्बन्धसापेक्षतया अन्यसम्बन्धस्यापि तस्येवान्यसम्बन्धसापेक्षतयाऽनवस्था स्यात् । यदि च समवायः सम्बन्धान्तरमनपेक्ष्य स्वयमेव सम्बन्धिभ्यां सम्बद्धस्तदा रूपघटाद्योः सम्बन्धिनोरपि तस्येव स्वयमेव मिथः सम्बद्धत्वसम्भवेन समवायो निरवकाश इति चेन्न, समवायस्य स्वग्राहकप्रमाणेन सम्बन्धिभ्यां स्वतः सम्बद्धतयैव सिद्धेः । यदि स रूपघटाद्यात्मकसम्बन्धिभ्यां सम्बन्धान्तरेणैव सम्बध्येत, असम्बद्धो वा भवेत्तदा प्रथमेऽनवस्थाऽऽपादकतया द्वितीये च तयोः सम्बन्धनेऽसमर्थतया स्वीयमस्तित्वमेव न लभेत, अतो यत्प्रमाणं समवायं साधयति, तत् तं स्वसम्बन्धिभ्यां स्वतः सम्बद्धमेव साधयति, अतस्तत्कल्पनायां नानवस्थाऽऽपत्तिर्न वा रूपघटाद्योः सम्बन्धकत्वानुपपत्तिः ।

न चैवं समवायस्येव रूपादेरपि स्वत एव घटादिसम्बद्धत्वं स्यादिति समवायकल्पना निष्प्रयोजनेतिवाच्यम्, यद् वस्तु धर्मिग्राहकप्रमाणेन यत्सम्बद्धतयैव सिध्यति, तस्यैव सम्बन्धान्तरं विना स्वतः सम्बद्धत्वस्वीकारात् । यच्च यत्सम्बद्धतयैव न सिध्यति, किन्तु स्वतन्त्रतया सिध्यति, तस्य सम्बन्धान्तरापेक्षयैव स्वसम्बन्धिसम्बद्धत्वकल्पनाया न्याय्यत्वात् । तथा च यथा ज्ञानस्य सविषयकत्वनियमेन तत् स्वसाधिकया 'घटं जानामि' इत्यादिप्रतीत्या घटसम्बद्धतयैव सिद्धतया सम्बन्धान्तरं विनैव घटसम्बद्धं भवति, तथैव समवायस्यापि स्वग्राहकप्रमाणेन रूपघटाद्यात्मक-सम्बन्धिसम्बद्धतयैव सिद्धतया सम्बन्धान्तरं विनैव सम्बन्धिसम्बद्धता युक्ता ।

तन्त्वादिः पटादिभिः, पटादिर्वा तन्त्वादिभिः सम्बद्ध एव स्वग्राहकप्रमाणेन न सिध्यति तन्तुपटादिभिः चक्षुषः साक्षात्सम्बन्धसम्भवेन मिथोऽसम्बद्धयोरपि तयोश्चक्षुषा ग्रहणसम्भवात् । अतस्तयोर्मिथः सम्बद्धत्वं घटभूतलयोरिव सम्बन्धान्तरामपेक्षयैव भवितुमर्हति, न स्वतः ।

घटाद्यभावोऽपि भूतलाद्यात्मना येन केनचिद् अधिकरणेन सम्बद्ध एव चक्षुषा गृह्यते तेन सह अधिकरणद्वारैव चक्षुषः सन्निकर्षसम्भवात् । अतः सोऽपि सम्बन्धान्तरमनपेक्ष्यैव स्वत एव स्वाधिकरणेन सम्बध्यते ।

ननु गुणादिकमपि द्रव्यद्वारैव चक्षुषा सन्निकृष्यतेऽतस्तस्यापि द्रव्यसम्बद्धतयैव ग्रहणेन तदर्थमपि समवायो नापेक्ष्येतेति चेन्न, परस्परासम्बद्धतया चक्षुषा सम्भवद्ग्रहणानां तन्तुपटादीनां सम्बन्धतया समवायसिद्धेरावश्यकतया तेनैव द्रव्येण गुणादीनां, व्यक्तिभिः जातीनां सम्बद्धत्वा-भ्युपगमस्य लाघवेन युक्तत्वात्, अन्यथा अनन्तगुणादिस्वरूपे सम्बन्धत्वकल्पनायां महागौरवं स्यादिति कृतमत्र लघौ निबन्धे विस्तारेण ।

# विश्ववारा भारतीया संस्कृतिः

प्रो० करुणापतित्रिपाठी
भू० पू० कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

विदितमेव तत्रभवतां श्रीमतां प्राचीनसंस्कृतिसमुपासकानां यत् भारतस्य पुरातनी संस्कृतिः वैदिकचिन्तनधाराऽऽधारभूता। सा निरन्तरं वैदिककालादारभ्याद्य यावत् परम्परानुसारिणी सत्यपि गत्वरतां परिपुष्णाति। जानन्त्येव विद्वांसः संस्कृत्या अस्याः प्रकृतिर्वर्तते यत् सा न स्थिरा, अपि तु निरन्तरं देशकालानुसारिणी गतिशीलतामाधृत्य पुरो धावति। तत्र या काचिद् गतिपरिपन्थिनी रूढिस्तामपहाय जीवनदायिनीं गत्वरीं भावनामादाय नदीधारेवाग्रे-सरति। अतः स्थूलरूपेण विभिन्ना दृश्यमानाऽपि साऽन्तःप्रेरणादृष्ट्याऽभिन्नैव। विस्तरेणात्र कथनस्याशयो यद् भारतीया संस्कृतिः सर्वदा गतिमती, न खलु कदापि निर्जीवजडतत्त्वानामिव गतिहीना, स्थिरा, एकरूपा च। तथा चोक्तमाथर्वणश्रुतौ—

> त्वज्जातास्त्वयि चरन्ति मर्त्याः,
> त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः।
> तवेमे पृथिवि पञ्च मानवाः,
> येभ्यो ज्योतिरमृतं मर्त्येभ्यः।
> उद्यन्त्सूर्यो रश्मिभिरातनोति[1]॥

संस्कृतशब्दस्य ऋग्वेदसंहितायाम्[2], यजुर्वेदसंहितायाम्[3], परवर्तिवाङ्मये च प्रयोगो दृश्यते। संस्कृतिशब्दस्य च सर्वतः प्राथमिकः प्रयोगः शुक्लयजुर्वेदसंहितायां दृष्टचरः। तद्यथा—

> अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम।
> सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रोऽग्निः[4]॥

एवमेव ऐतरेयब्राह्मणेऽपि संस्कृतिशब्दस्य व्यवहारोऽस्ति श्रेयसे कल्प्यते। तद्यथा—'आत्मसंस्कृतिर्वै शिल्पानि…[5]' इति।

शुक्लयजुर्वेदसंहितायां प्रयुक्तस्य संस्कृतिशब्दस्याधुनिकसंस्कृतिशब्दादभिन्नोऽर्थः। प्रथम-संस्कृतिशब्दस्य प्रयोगविषये शुक्लयजुर्वेदसंहिताभाष्यकारयोः—उव्वट-महीधरयोः मिथो निर्वचने

---

१. अथर्ववेदः—७।१५।  २. ऋ० सं० ५।७६।  ३. शु० य० ४।३४।
४. शु० य० ७।१४।  ५. ऐ० ब्रा० ६।५।१।

भेदोऽवलोक्यते। आचार्योव्वटमतेन 'संस्कृतिः' इति पदस्यात्र सत्कारोऽर्थः[1] महीधराचार्यमतेन संस्कारोऽर्थः[2]। आधुनिकसन्दर्भप्रयुज्यमानसंस्कृतिशब्दविषये पश्चाद् विचारयिष्यते।

संस्कृतिशब्दस्य व्युत्पत्तिस्तु पाणिनीयव्याकरणानुसारिणी—'सम्परिभ्यां करोतौ भूषणे[3]' इति सूत्रेण सुट् प्रत्ययपूर्विका क्रियते। तथा च व्याख्यायि भट्टोजिदीक्षितेन सिद्धान्त-कौमुद्याम्—'सम्परिभ्यां करोतौ भूषणे च सुट् स्यात्, भूषणेऽर्थे'[4] इति। संस्कार-संस्करण-शब्दावपि किलैतत्सूत्रद्वारैव व्युत्पद्येते। न्याय-मीमांसादिदर्शनेषु च संस्कारशब्दस्य विविधाः प्रवृत्ति-निमित्तभूता अर्था ऊरीकृताः।

एवं पूर्वोक्तपाणिनिसूत्रानुसारेण—संस्कृत-संस्कृतिसंस्कार-संस्करणप्रभृतिपदानां मूलभूता प्रकृतिः एकैव; प्रत्ययास्तु भिन्ना भिन्नाः। एतेनायाति यद् दार्शनिक-धार्मिक-आध्यात्मिक-आचारिकादिजीवनवर्तनधारायाः संस्कारेण यया परिष्कृतिः क्रियते, यया च मानवस्य पुरुषार्थ-चतुष्टयसम्बन्धि जीवनवर्तनं कालुष्यरहितं माङ्गलिकं च जायते, सा 'संस्कृतिः' इति।

साम्प्रतं संस्कृतिशब्दस्य सन्दर्भविशेषे यः प्रयोग आधुनिकीषु भाषासु आधुनिकेऽर्थे क्रियते, स शब्द आङ्ग्लभाषाप्रयुक्तस्य 'कल्चर' शब्दस्य भाषान्तररूपः, इति नास्त्यत्र सन्देहः। इत्थञ्चायाति यत् कल्चरशब्दापरपर्यायभूतो वर्तमानसंस्कृतिशब्दस्य प्रयोग इति प्रतिपादनं समीचीनतरम्।

परन्त्वत्रेदमवधेयम्—सम्प्रति लोके आङ्ग्लकल्चरशब्दार्थे प्रयुज्यमानस्य संस्कृति-शब्दस्य व्याख्यायां मिथो विवदन्ते वादरसिका विद्वांसः। एवम्भूतस्य तस्य परिभाषा, लक्षणं वा नाद्यापि अव्याप्त्यतिव्याप्त्यसम्भवदोषत्रयशून्यं परिदृश्यते। आङ्ग्लभाषीयकल्चरशब्दोऽपि कृषिविज्ञान-रसायनविज्ञान-चिकित्साविज्ञान-इतिहासपुरातत्त्व-राजनीतिप्रभृतिषु विविधेषु सन्दर्भेषु विभिन्नार्थबोधको दृश्यते[5]। आङ्ग्लकोशेषु विश्वकोशेषु च तस्यार्थविस्तरो द्रष्टव्यः।

ऐतिहासिक-धार्मिकादिसन्दर्भेषु या विविधा व्याख्याः 'कल्चर' शब्दस्य कृताः सन्ति, ताभ्यो द्वित्रा अधोनिर्दिश्यन्ते। केचन विद्वांसः प्रतिपादयन्ति यद् या खलु जीवनधारा देशे राष्ट्रे वा मानवानामन्तर्बहिश्च संस्करोति, परिष्करोति, अथ च जातीय-देशीय-राष्ट्रिय-विचाराचारान्

---

१. 'प्रथमा 'संस्कृतिः'। स प्रथमः सोमसत्कारः क्रियते······सा विश्ववारा संस्कृतिः'—(उव्वटभाष्यम्–शु० य० ७।१४)।

२. 'सा प्रथमा मुख्या संस्कृतिः सोमसंस्कारो यस्येन्द्रस्य क्रियते, इन्द्रार्थं क्रियत इत्यर्थः।···· सा विश्ववारा संस्कृतिः'—(महीधरभाष्यम्–शु० य० ७।१४)।

३. अष्टाध्यायी–६।१।१३७ : ४. तदेव–सिद्धान्तकौमुदी।

५. 'Whilst culture is concerned with every aspect of life—material, intellectual and spiritual—it should not be one-sided since the spiritual works and can only work through mind and body, its aim being spiritual development. Sir John woodraffe—(Is India Civilized ? P. 44).

परिव्याप्नोति, सा संस्कृतिरिति[1]। अन्ये च वदन्ति यद् बौद्धिक-नैतिक-धार्मिक-सामाजिक-भावनाः, परिष्कृता विचाराचाराश्च यया व्यक्तीक्रियन्ते, सा संस्कृतिः[2]। इतरेषां मतेन च भावनात्मकाक्रियात्मकापद्धत्योश्च द्वन्द्व-विरोधादिपरिहारपुरस्सरं मानवस्यान्तरङ्गबहिरङ्गकर्म-मनसोः सामञ्जस्यकारिणी मूलधारा संस्कृतिरेव[3]। अपरेषां मतेन च समाजगतज्ञान-विज्ञान-मानसबोध-सदाचारादीनां यया संश्लिष्टा अभियोजना विधीयते यया च समाजगतज्ञान-विज्ञान-विश्वासमूलादिमूला जीवनवर्तनशैली समन्विता भवति, सा शक्तिधारारूपा गत्वरी परम्परा संस्कृतिः। किं बहुनां इत्थमेव विभिन्नानि लक्षणानि परिभाषा वा शताधिका लक्ष्यन्ते। परन्तु सर्वत्र साक्षात्परम्परया प्रत्यक्षतः परोक्षतो वा प्रत्यभिज्ञायते यत् संस्कृतिर्भिन्नः पदार्थः, सभ्यता च भिन्नः पदार्थ इति।

सभ्यताया घनिष्ठतरः सम्बन्धो बाह्याचार-व्यवहारादिभिर्युज्यते, संस्कृतेश्चान्तरिक-बोध-विचार-संस्कार-परिष्कार-परम्परादिभिः समं भवति। सा च संस्कृतिर्गत्वरी, परिवर्तन-शालिनी, प्राणदायिनी, सत्त्वरूपा तत्त्वतः किलैकाऽपि बाह्यदेश-कालानुरूपानेकत्वधारिण्यखण्डा प्राणरूपधारैव[4]।

इत्थं सर्वेषां मुख्यानां संस्कृतिलक्षणानां समन्वयेन लक्षितुं शक्यते यद् याऽऽन्तरात्मक-मानसिकविचारधारा बाह्यजीवनप्रेरणादायिनी शक्तिरूपा धर्म-दर्शनेतिहास-कला-विज्ञानादि-सञ्चालिका, देशकालानुगामिनी विचाराचारसञ्चारिका राष्ट्रियचेतना बोधरूपा शक्तिः, सैव संस्कृतिः। तस्याश्च यथार्थतत्त्वावबोधार्थं बाह्यदृष्टेरपेक्षयाऽऽभ्यन्तरबोधचेतना मुख्यतरा। एवम्भूता चेतनैव मानवजातेः समग्रोत्कर्षविधायिनीत्वेन पुरस्क्रियते। संस्कृत्या खलु प्राकृतजीवने साम-ञ्जस्यस्थापनपुरस्सरं तत्राध्यात्मिकाः कलात्मकाश्च गुणा उद्भाव्यन्ते।

पूर्वं प्रतिपादितं यत् संस्कृति-सभ्यतयोर्मध्ये परस्परं महदन्तरम्। जानन्त्येव संस्कृतज्ञा यत् सभ्यशब्दस्य व्युत्पत्तिस्तु **'सभायां साधुः'** इति। सभ्यताशब्दस्य च व्युत्पत्तिः **'सभ्यानां भावः'** इति। एतेन सभ्यताया अर्थस्तु स्वकालीनसामाजिकशिष्टाचारादिरूप इति परिभाषितुं पार्यते। ततश्च सभ्यतायाः सम्बन्धो जीवनस्य बाह्यसामाजिकशिष्टाचार-विधि-निषेध प्रभृतिभि-र्विशेषरूपेण युज्यते। फलितार्थरूपेणात्र निर्द्धारितुं शक्यते यत् सभ्यतायां समकालिका बाह्य-सम्बन्धप्रचुराश्च गुणभूयस्त्वेन परिपुष्णन्ति।

उपरिष्टात् परिभाषितं यत् संस्कृतिः, सांस्कृतिकचेतनाधारा वा न कालविशेषप्रतिबद्धा, अपि तु सा सनातनी, चिरन्तना, पुरातना सत्यपि नवीना। अपि च सा बाह्यशिष्टाचाराद्यपेक्ष-याऽन्तःपरिष्कार-संस्कार-शालीनतादिभिः निकटतमा।

भारतीयसंस्कृतिर्यद्यपि धर्मार्थकाममोक्षपुरुषार्थचतुष्टयचेतनाधारासंश्लिष्टा सत्यपि मूलत आध्यात्मिकी, आत्मिकी वा। तत्र जीवने आवश्यकयोरर्थकामयोरुपरि शक्तिसन्तुलनरूपेणा-

---

१. म०म० गोपीनाथकविराजः, (भारतीय संस्कृति और साधना—पृ० २११)।
२. श्री दा० सातवलेकरः, भारतीय संस्कृति—पृ० २५।
३. डॉ० राधाकृष्णन्—(धर्म-तुलनात्मकदृष्टि में—पृ० ८८)।
४. द्रष्टव्यम्—संस्कृति संगम—पृ० १९—आचार्यक्षितिमोहनसेनकृतः।

निवार्यतो धर्मनियन्त्रणं परमावश्यकम् । यतो हि—'न जातु कामः कामानामुपभोगेन शाम्यति' इति दिशाऽर्थकामौ यथा निर्मर्यादौ न भूयास्ताम्, तदर्थं तयोरुपरि धर्ममर्यादा स्थापनीयेति । उक्तं च भगवता कृष्णेन श्रीमद्भगवद्गीतायाम्—

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात् सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥
क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति[1] ॥ इति ।

अर्थाद् विषयसङ्गानुध्यानेन क्रोध-सम्मोहकामानां परम्परा समुद्भवति, ततश्च स्मृतिभ्रंश-बुद्धिनाशौ जायेते । दुष्परिणामतश्च प्राणी विनाशमुपगच्छति । अतो धर्मनियन्त्रिताभ्याम्, सङ्गरहिताभ्याम्, कर्त्तव्यपालनायैव कृताभ्यां कामार्थाभ्यां व्यवहारेण मनुष्यश्चिरबुद्धित्वम्, स्थितधीत्वं चाप्नोति । धर्मश्चात्र न सङ्कुचितदृष्ट्या ग्राह्यम्; अपि तु धर्मलक्षणोपेतः शाश्वतिकः स्वधर्मो ग्राह्यः । शाश्वतिकश्च धर्मो यथा मनुसंहितायां निरूपितः—

धृतिः क्षमा दमोऽस्त्येयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्[2] ॥

स्व-स्वधर्माचरणे भगवता कृष्णेनापि निर्दिष्टम् । तद्यथा—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु[3] ॥

इत्थञ्च धर्मनियन्त्रितावर्थकामौ निःश्रेयसमार्गगामिनौ संस्कृतेराध्यात्मिकतामेव (आत्मिकतामेव) प्रकाशयतः ।

भारतीय संस्कृतेः, विशेषतश्च हिन्दूसंस्कृतेः प्ररोह ऋग्वैदिकसंस्कृतावुपलभ्यते । सा च संस्कृतिः कामाधुनिकपाश्चात्यविद्वद्भिः मूलार्यसंस्कृतिप्रभवेति मन्यते; परन्त्वत्र विडम्बनैषा वर्तते यद् मूलार्यसंस्कृतेर्वाङ्मयप्रमाणितं यादृशं सुसंश्लिष्टं संघटितञ्च रूपम्, ऋग्वेदसंहितायां लभ्यते, तादृशं स्वरूपमन्यत्र कुत्रचिदपि दृष्टिगोचरी न भवति ।

प्रसङ्गतश्चात्रेदमपि विचारकोटिमारोहति प्रश्नो यत् पुरातनपारसीयानां जेन्दावेस्ताख्य-धर्मग्रन्थस्य निर्माणकालो निःसंदिग्घरूपेण ऋग्वेदसंहिताकालतः पश्चाद्वर्ती[4] । अन्यत्र च प्राप्तावशेषैः, इतस्ततो विशृङ्खलितपुरातात्त्विकोपकरणैश्च मूलार्यसंस्कृतिकलेवरस्य खण्डिता प्रतिमा विनिर्मीयते । अतो मूलार्यसंस्कृतेः सुघटिता प्रतिमा ऋग्वेदसंहिता प्राप्ततत्त्वाधारभूता । ऋग्वेद-संहिता-ब्राह्मणारण्यकोपनिषत्सु उत्तरवर्तिवैदिकवाङ्मयेषु शनैः शनैः याज्ञिक-कर्मकाण्डीयसम्भावनोपेक्षया याज्ञिकाध्यात्मिकविचारधाराया विशेषः प्ररोहः समेधमानो दृश्यते ।

---

१. श्रीमद्भगवद्गीता–२।६२–६३ ।

२. मनुस्मृतिः–६।९२ । ३. श्रीमद्भगवद्गीता–१८।४५ ।

४. द्रष्टव्यम्—The history of Indian Literature P. 36–37—by A. weber,

अथर्ववेदसंहिताप्रामाण्येन प्रतिपादितुं प्रभवामो यद् आदिकालत एव भारतवर्षे नैगमिक-वैदिकेतरविचारपरम्पराः प्रचलिता आसन, यासु च आगमिक-तान्त्रिकक्रियापराः लोकसंस्कृति-मूलाः आदिवासिपार्वत्यवन्यजनजीवनवर्तनानुसारिण्यो भावनाधाराः प्रादुरभूवन्[२]।

एकादशोपनिषत्कालानन्तरञ्च विविधभारतीयास्तिक-नास्तिकदर्शनानां क्रमशः उद्भवो बभूव। जैन-बौद्ध-लोकायतिक-चार्वाकादीनामपि मतानि अस्मिन्नेव काले आत्मलाभमलभन्त; परन्तु सर्वत्र प्रत्यक्षतः परोक्षतो वा पूर्ववैदिकोत्तरवैदिकसांस्कृतिकचेतनायाः प्रगाढः प्रभावोऽनुसन्धातुं सुकरः। निदर्शनरूपेणात्र जैन,बौद्धादिदर्शनेषु सत्य-अहिंसा-दान-क्षमा-आर्जव-परिग्रह-प्रभृतीनाम्, चार्वाकदर्शने च कर्माचारशुद्धेश्च स्वरूपं निदर्शयितुं शक्यते। इत्थञ्च भारतीयसंस्कृतेः सर्वेषु क्षेत्रेषु, सर्वेषु कालेषु च वैदिकचेतनाप्रभावः प्रसारश्च नापलपितुं पार्यते।

आधुनिकसमाजशास्त्रीयैतिहासविद्भिर्विद्वद्भिः निरणायि यद् भारतभूमौ विदेशादागत्य नैका जातय इहाऽवसन्। तासु जातिषु तमिल (द्रविड़) जातिः प्रमुखाऽऽसीत, यस्याः संस्कृतिरपि काममतीव पुरातनी। एवमेवान्या जातयोऽपि भारतवर्षे निवसन्ति स्म। आधुनिकाभारतीया संस्कृतिः सर्वासां जातीनाम्, विचाराणाञ्च समन्वयभूता संश्लिष्टमूर्तिस्वरूपा च राराजते।

अत्रेदमवधेयम्—भारतीयपुराणकारैः ऋषिभिः वैदिकसंस्कृतित आरभ्य समन्वयात्मिकैका विशिष्टा विचित्रा च संस्कृतिः विनिर्मिता, या पौराणिकसंस्कृतिनाम्नाऽपि व्यपदेष्टुं शक्या। विषयेऽस्मिन् उपरिष्टाद् वक्ष्ये।

इदमस्मिन् विषये भणितिर्वर्तते यल्लोकसंस्कृतिचिन्तनपरा या धारा वैदिकवाङ्मये नाराशंसीगाथारूपेण प्रवहति, यस्याञ्च परवर्तिपौराणिककथाः समुल्लसन्ति, तासां मिथक-मूलिकानां कथानामुद्गमस्रोतः श्रुतिरेव। अत एव कथ्यते यत्, **'पुराणं हि पञ्चमो वेदः'** इति। गोपथब्राह्मणस्य पूर्वभागे उक्तं यत्—**'एवमिमे सर्वे वेदा निर्मिताः सकल्पाः, सरहस्याः, सब्राह्मणाः, सोपनिषत्काः, सेतिहासाः, सान्वाख्याताः, सपुराणाः'**[१] इति।

शतपथब्राह्मणेऽपि पदे पदे बहुषु स्थलेषु वेदैः सह प्राक्तनपुराणानां मिथो सम्बन्धो निभालितः। आरण्यकोपनिषत्सूत्रग्रन्थेषु चापि वेद-पुराणयोः सम्बन्ध उद्घोषितः। महाभारत-कारेण तु कण्ठतः प्रत्यपादि वेद-पुराणयोरन्योन्याश्रयसम्बन्धः। तथा ह्युक्तम्—

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।**
**बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति**[२] ॥ इति।

तत्रभवन्तो भारतीयेतिहासविदो जानन्त्येव यत् पौराणिकी शैली किलैका विशिष्टा जीवनदायिनी दृष्टिरस्ति। यया शैल्या मूलतो वैदिकचिन्तनधाराऽनुषङ्गतश्च परवर्तिजातीय-राष्ट्रीयविचारधाराः समन्वयात्मकरूपेण पौराणिकदृष्टिबोधे समाकलिताः सन्तीति। वैदिक्याः परम्परायाः, संस्कृतेश्च ज्ञानमन्तरा पौराणिकैतिहासिकसम्पृक्तसन्दर्भा न सम्यगभिज्ञातुं पार्यन्ते। अल्पश्रुताः पुरुषाः पुराणेतिहासानभिज्ञा मूलवैदिकभावनायास्तत्त्वावबोधं हीनाङ्गं कुर्वन्ति।

---

१. गोपथब्राह्मणम्—२।१०।   २. महाभारतम्—आ० प० १।२६७।

वेदार्थस्य सम्यक्परिज्ञानाय पौराणिकदृष्टिबोधः, पौराणिकसम्बन्धबोधश्च सापेक्षः। पौराणिकी दृष्टिर्मिथकदृष्टिसम्पृक्ता, ऐतिहासिकबोधपरिप्रेरिता च। सा दृष्टिः सर्वत्र श्रुतिसामरस्य-सम्पादिका, तदनुप्राणिता चोद्भासते। तथा च प्रोक्तं वैदिकमिथकपरम्पराणां पुराणेषु प्रसार-विषये ब्रह्माण्डपुराणे—

कर्मस्वविषयं प्राहुः सत्त्वस्थाः समदर्शिनः।
नामात्मञ्चभूतानां कृतानां च प्रपञ्चनाम्॥
वेदशब्देन पञ्चैते निर्ममे स महेश्वरः।
आर्षाणि चैव नामानि याश्च देवेषु सृष्टयः॥
शर्वर्यन्ते प्रसूयन्ते पुनस्तेभ्योऽददधात् प्रभुः।
इत्येषः कारणाद्भूतो लोकसर्गः स्वयंभुवः॥

द्यौः प्रधानं यस्य वेदा वदन्ति वियन्नाभिं चन्द्रसूर्यौ च नेत्रे।
दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता॥

एष वः कथितः पादः समासान्न तु विस्तरात्।
अनेनाद्येन पादेन पुराणं परिकीर्तितम्॥[1] इति।

इत्येवंरूपेण वैदिकीबोधदृष्टिः पुराणानां प्राणभूता। तत्र श्रमण (जैन-बौद्ध)–दृष्टिधाराऽपि वर्तते, तन्त्रागमचेतनाधारा अपि समन्विता भवन्ति।

अत्रापरमपि तथ्यमवधारणीयं वर्तते। बहुत्र पुराणशब्दप्रयोगविषये इतिहासशब्दस्य प्रयोगोऽपि प्रचलति। सामान्यत एतद् न विस्मर्तव्यं यद् इतिहास-पुराणं परस्परम् अत्यन्तं सश्लिष्टं सम्मिश्रितञ्चास्ति। प्रस्तुत सन्दर्भे तयोः कयाचिद् विभाजनरेखया पार्थक्यनिर्धारणमतीव सुदुष्करम्। यथा खलु वाल्मीकीयं रामायणम् एकतः आदिकाव्यम्, अपरतश्च पौराणिकप्रकृतिवद् अनेकाख्यानकसन्दर्भैश्चापि समुज्जृम्भितम्। तस्मात् तत्काव्यं तत्त्वतः प्राचीनभारतस्य भौगोलि-कैतिहासिकबोधैः सम्पृक्तमितिहासकाव्यमिति।

एवमेव महाभारतमपि समस्तपुराणसारभूतं सद् आदिपुराणम्, सर्वपुराणानां स्रोतः, पुराकालिकप्रागैतिहासिकयुगीनाख्यानवृत्तानां महासङ्कलनमप्यस्ति। सर्वविधानां सांस्कृतिक-धार्मिक-दार्शनिक–सामाजिक–राजनीतिक–आध्यात्मिक–प्राचीनभारतीयमर्यादाबोधानामाख्यानो–पाख्यानानां च समाहारभूतं महापुराणम्। परञ्च स ग्रन्थस्तत्त्वतः प्राचीनेतिहासबोधसम्पन्न-श्चापि विराजते। तस्मिन्नितिहासे केवलं भूपतीनाम्, देवानाम्, दैत्यानाम्, कौरव-पाण्डवानाञ्चै-तिहासात्मकं सङ्घर्षवर्णनं नास्ति; अपि तु समग्राया भारतीयाया दृष्टिपक्षाणां बृहत्प्रामाणिकश्चे-तिहासपक्षोऽपि समुल्लसति। अत एव साधिकारमुद्घोषितं महाभारतविषये—

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्[2]॥

---

१. ब्रह्माण्डपुराणम्—३।१।१३,१४,१५,२५,२८। २. महाभारतम्—१।६२।५३।

महाभारतात् पुराणानां भिन्ना स्थितिः। इतिहासवृत्तसमन्वितान्यपि, ऐतिहासिकराजवंशावलिनिर्देशकान्यपि तानि (पुराणानि) मुख्यतः पुराणान्येव। तेषां प्रतिपादनदृष्टिः पौराणिकी। मूलतश्च तानि पुराणानि पौराणिकबोधेन समुद्दीपितानि। तेष्वैतिहासिकवर्णनमैतिहासिको भागश्च प्रसङ्गप्राप्तः। यत्र खलु अतिप्राचीनमौखिकपरम्परातः समायातानां वृत्तकथानां वर्णनं समुपलभ्यते। येषु वर्णनेषु प्रागितिहासकालिकमूलकथानां सूत्रग्रहणबलेन मिथकदृष्टिसमुच्छलितानि, व्यास-शुक-सूत-वैशम्पायनादिमाध्यमेन कथासंवादरूपाणि व्यावहाराणि दृष्टिपथमायान्ति। तानि पुराणोक्तपुराणानि, उपोपपुराणानि च तत्त्वतः पुराणपुस्तकानि। अत एवोक्तं नारदपुराणे—

> अतः परं तु सूतेन शौनकादिभिरादरात्।
> पृष्टेन चोदिताः शश्वद्विष्णुधर्मोत्तराह्वयम्॥
> नानाधर्मकथाः पुण्या व्रतानि नियमा यमाः।
> धर्मशास्त्रं चार्थशास्त्रं वेदान्तं ज्यौतिषं तथा॥
> नानाविद्यास्तथा प्रोक्ताः सर्वलोकोपकारिकाः[1]। इति।

अन्यच्च—

> पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
> अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः[2]॥

एषु वर्णितानामुपाख्यानानां सत्यतासम्पृक्तत्वं नोद्देश्यम्; अपि तु तत्त्वबोधसिद्धान्तानां प्रौढया प्रतिष्ठापनमेव मूलमुद्देश्यम्। एतद्धयेव हि पुराणानां नवत्वम्। तथा चोक्तं महर्षिणा यास्केन—'पुराणं कस्मात्? पुरा नवं भवति[3]' इति।

**उपसंहारः**

निष्कर्षतश्चात्र एतदेव वक्तव्यमस्ति यत् खलु सङ्केतरूपेण पूर्वमेव निर्दिष्टम्। वर्तमाना हिन्दूनां भारतीया संस्कृतिः, न केवलं वैदिकी श्रौती वा संस्कृतिः। तत्र खलु प्राग्वैदिक-वैदिक-वैदिकसमकालीनेतरनिगमागमलोकसंस्कृतीनां समन्वितबोधदृष्टिः रूपायिता। संक्षेपेणेत्थं प्रतिपादयितुं शक्यते यद् निगमागम-निगमागमेतरलौकिकप्राचीनसंस्कृतीनाम्, ताभ्यश्च प्रवहत् समग्राध्यात्मिक-दार्शनिक-धार्मिक-सामाजिक-नैतिक-वैचारिक-विचाराचारसम्पृक्तशुक्लपक्षाणां विजयस्य, कृष्णपक्षाणां पराजयस्य च गाथास्तत्र सङ्कलिताः सन्तीति।

पुराणेषु समन्वयबोधात्मकसांस्कृतिकसमग्रतायाः संयोजनं समुपलभ्यते। वैदिककालीनभारते यानि वैदिक-वैदिकेतरास्था-धर्मभावना-पूजार्चना-विधि-विधानानि, आदिमजातीनां विश्वास-यन्त्र-तन्त्रादीनि चासन्, तानि सर्वाणि समन्वितरूपेण पुराणमुनिभिः सूत्रबद्धानि कृत्वा पुराणेषु परिणतानि।

एषा पौराणिकी समन्वयदृष्टिः हिन्दूसंस्कृतेः वर्तमानविकसितरूपस्य स्रोतोभूता। हिन्दूजीवनचर्यायाः सर्वा आस्तिक्यो मान्यताः प्रत्यक्षतः परोक्षतो वा पुराणमूलिकाः। यतः खलु

---

१. नारदपुराणम्—पूर्वभागे—९५।१७—२०। २. शिवपुराणम्—५।१।११।
३. निरुक्तम्—३।१९।२४।

पुराणवचनानि मित्रसम्मितोपदेशपराणि । अतः पौराणिकदृष्ट्यैव तानि बोद्धव्यानि । यदि तत्र वैज्ञानिकतर्कैः, ऐतिहासिकप्रमाणप्रमेयैश्च विश्लेषणं विधास्यते, तर्हि तत्र बह्व्यो विसंगतयः समापतेयुः । अत एव पौराणिकतत्त्वस्य परिज्ञानाय मिथक-प्रतीक-कथाख्यानप्रतिपादनशैल्यादीनां रहस्यानि यदा परिज्ञातानि भवेयुः, तदैव पौराणिकरूढोक्तीनां प्रतीकात्मककथानाञ्च यथार्थमभिज्ञानं सङ्घटेरन् ।

अन्ते च भारतीयसंस्कृतेः समन्वयभावनाविषये किञ्चिद् वक्तव्यमवशिष्यते । वैदिकानुष्ठान-श्रौतविधान-गाणपत्यादिपूजन-पुराणादिपाठानुष्ठानेषु च सर्वत्र पौराणिकविधीनां समन्वयो दृष्टिपथमायाति । पुराणेषु चाङ्गन्यासादिविधीनां बहुशः प्रतिपादनं दृष्टचरम् । श्रीमद्भागवतादिपुराणानां यदा साप्ताहिकपाठानुष्ठानं क्रियते, तदा तस्य समापने हवनादियाज्ञिकविधेः सम्पादनानन्तरं पूर्णत्वं सङ्घटते । एवमेव शतचण्डीपाठानुष्ठान-रुद्राभिषेक-सत्यनारायणव्रतकथा—उपनयन-विवाहादिसंस्कारेषु च सर्वत्र समन्वितरूपेण श्रुति-स्मृति-पुराणोक्तहवनादीनि अनिवार्यतः सम्पादनीयानि भवन्ति । तत्र श्रौत-वैदिक-आगमिक-तान्त्रिकादीनि कर्माणि सामञ्जस्यस्थापने उपादानकारणानि भवन्ति । अत एव सङ्कल्पादिषु वेद-स्मृतिपदप्रयोगसममेव पुराणपदस्याप्युच्चारणं कृत्वा काम्यकर्मप्रसङ्गानुसारं कथ्यते 'श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थम्' इति ।

काव्यप्रकाशकारेणाचार्यमम्मटेन काव्यनिर्माणस्य कारणानि किलेत्थमुद्घोषितानि—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे[1] ॥

काव्यकाराः शिवेतरक्षतयेऽपि काव्यं कुर्वन्ति, यशसे (नामप्रसिद्धये), अर्थकृते (अर्थलाभाय) चापि; किन्तु पुराणकारा मुनयो नार्थलाभमिच्छन्ति, न हि यशोकामा भवन्ति, तेषामुद्देश्यं तु लोकमङ्गलविधानमेव । नानाक्लेशजुषां जनानां कष्टनिवारणम्, अनेकानेकतान्त्रिक-स्मार्त-शैव-वैष्णव-जैन-बौद्धप्रभृतिसम्प्रदायगतविरोधजन्यसङ्घर्षोपशमनपूर्वकसमन्वयात्मकनैतिका-दर्शानां लोकहितभावनया पौराणिकशैलीमाध्यमेन च प्रतिष्ठापनं तेषां मुख्यमुद्देश्यमासीत् ।

अतो लोकक्लेशपीडाकातराः, लोककल्याणविधानातुराः, सङ्घर्षोपशमनकामनाकलिताः, समन्वयसामञ्जस्यपूर्णसौहार्दस्थापनोत्कचेतसः पुराणमुनयोऽस्माभिः सहस्रशः प्रणम्या समादरणीयाश्च सन्ति, येषां तपःपूतसारस्वतप्रयासेनैवंविधा सर्वसंग्राहिका विश्ववारा भारतीया संस्कृतिः साम्प्रतमपि चकास्तीति शम् ।

• • •

१. काव्यप्रकाशः—१।२ ।

# ब्रह्मसूत्राणां तात्पर्यविचारः

एस्० श्रीसुब्रह्मण्यशास्त्री, वाराणसी

❀ ❀ ❀

'अथातो ब्रह्मजिज्ञासा[1]' इत्यारभ्य 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्[2]' इत्यन्तैः सूत्रैः श्रीबादरायणाचार्यैः ग्रथिता वेदान्तपदवाच्यानामुपनिषदां तात्पर्यनिर्णयाय प्रवृत्ता शारीरकमीमांसा, ब्रह्ममीमांसेत्यादिशब्दैर्व्यवह्रियमाणा श्रीशङ्कराचार्यपादैः अद्वैतपरतया निरणायि। तत्र चार्वाचीनैरुद्भावितानां सन्देहानां निवृत्तये किञ्चिद्विचार्यते।

तत्र तावत् आदौ प्रथमसूत्रार्थ एव विचारपदवीमर्हति। सूत्रस्थं अथपदं सूत्राणां श्रुतितात्पर्यनिर्णायकत्वेन श्रुतिमूलकतया श्रुतौ ब्रह्मजिज्ञासायाः पूर्वं सम्पाद्यत्वेन यदुक्तं तदानन्तर्यपरं वाच्यम्। श्रुतौ च **'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्'** इत्यत्र परीक्ष्येत्यनेन मोक्षस्य नित्यत्वेन संसारस्य कृतकतया अनित्यत्वेन च परिभाव्य मोक्षस्य कृतेन कर्मणाऽनिष्पाद्यत्वं निश्चित्य ततो गुरुं आत्मविज्ञानाय गच्छेद् इत्युक्त्या नित्यानित्यवस्तुविवेकः सूचितः। निर्वेदमायादित्यनेन वैराग्यं सूचितम्। शान्तो दान्त उपरततितिक्षुः समाहितः श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्येदिति श्रुतिप्रतिपाद्यं शमादिषट्कमपि आनन्तर्यप्रतियोगि प्रतीयते।

अस्या मीमांसायाः फलं शास्त्रान्त्यपादे 'मुक्तः प्रतिज्ञानात्' इत्युक्तेर्मोक्ष इति प्रतीयते। उपायेच्छां प्रति फलेच्छायाः कारणत्वाद् मुमुक्षुत्वमपि पूर्वभाविसूचितम्। ततश्च साधनचतुष्टयानन्तर्यमाचार्यैरुक्तं श्रुतिमूलकमिति सिद्धम्। एतेन अथशब्दः कर्मविचारानन्तर्यपरः कर्मविचारानन्तरं कर्मणामल्पास्थिरफलकत्वं ज्ञात्वा तदनन्तरं ब्रह्मजिज्ञासा कार्येति व्याख्यानं श्रुतिमनादृत्य प्रवृत्तम्। कर्मविचारेण कर्मणामल्पास्थिरफलत्वनिर्णयश्च दुर्लभः। अकृतवेदान्तविचारस्य **'अपामसोमममृता अभूम'**, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादि वाक्यैः कर्मणामनन्तस्थिरफलकत्वनिर्णयात् ''तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यकृतो लोकः क्षीयन्ते'' **'प्लवा ह्येते अदृढा यज्ञरूपाः[3]'** इत्यादि वाक्यार्थविचारस्तु अधीतब्रह्मविचारशास्त्रस्य सुलभः, न तु प्रथमकाण्डविचारकाले। तस्य पूर्वं करणाभ्युपगमे स्पष्टः अन्योन्याश्रयः। एतेन शास्त्रैक्यस्यापि न प्रसक्तिः, साधनचतुष्टयस्य ब्रह्मचारिणोऽपि अकृतकर्मविचारस्य सम्भवात्।

अत एव पूर्वमीमांसायाम् **'अथातो धर्मजिज्ञासा[4]'** इति धर्मविचारमारभ्य **'चोदनालक्षणोऽर्थो धर्मः[5]'** इति धर्मे चोदना प्रमाणमित्युक्तम्। अत्र तु ब्रह्मविचारमुपक्रम्य **'जन्माद्यस्य यतः[6]'** इति ब्रह्मणो लक्षणमुक्त्वा तत्र प्रमाणं शास्त्रमिति शास्त्रयोनित्वसूत्रेण निरूप्य 'तत्तु

---

१. ब्र० सू० १।१।१। २. तदेव–४।४।२२। ३. छां० उ० ४।१।६।१।
४. जै० सू० १।१।१। ५. तत्रैव–१।१।२। ६. श्रीमद्भा० १।१।१।

**समन्वयात्'** इति सूत्रेण समन्वयादेव ब्रह्म शास्त्रार्थः, न तु विधिशेषत्वेन इति तुशब्देन सूचितम्। अतः स्पष्टमेव शास्त्रभेदः।

सूत्रे ब्रह्मशब्दस्य बृहबृहिवृद्धौ इति धातुपाठाद् बृहिधातोर्निष्पन्नस्य वृद्धतमं त्रिविधपरिच्छेदरहितं ब्रह्म अर्थः। **'ऋतं सत्यं परं ब्रह्म'** इति श्रुतेः ब्रह्मशब्दस्य शिवे **'नारायणपरं ब्रह्म'** इति श्रुतेः विष्णौ च रूढत्वात् कस्यात्र परिग्रह इति कलहे रूढयोः कलहे योगपरिग्रह इति जगद्वाचित्वादित्यधिकरणन्यायेन योगपरिग्रह एव युक्तः। तत्र हि **'यस्य वा एतत् कर्म स वै वेदितव्यः पुरुषः'** इत्यत्र कर्मशब्दस्य चलने धर्माधर्मरूपादृष्टे च रूढ्या कस्य परिग्रह इति विषये क्रियत इति कर्म इति योग आश्रितः। त्रिविधपरिच्छेदराहित्यं च सत्यज्ञानानन्दात्मके निर्गुणे असङ्गे अद्वितीये ब्रह्मण्येव सङ्गच्छते।

न च निर्गुणे ब्रह्मणि प्रमाणाभावः। **'अशब्दमस्पर्शमरूपमव्ययं यत्तद'''मग्राह्यमगोत्रमवर्णम् अस्थूलमनश्वह्रस्वमदीर्घं'** इत्यादि श्रुतेरेव प्रमाणत्वात्।

न च **'सर्वकामः सर्वगन्धः सर्वरसः सत्यकामः सत्यसङ्कल्पः'** इत्यादि श्रुत्या ब्रह्मणो गुणावगमात् सामान्यविशेषन्यायेन निर्गुणश्रुतीनां श्रुत्युक्तगुणभिन्नगुणराहित्यं वा हेयगुणराहित्यं वा अर्थो भवतु इति वाच्यम्, निर्गुणश्रुतीनामनन्यशेषत्वात् स्वार्थे तात्पर्यात्। सगुणश्रुतीनां **'शान्त उपासीत्'**, **'आत्मानमुपासीत[1]'** इति उपासनाविधिशेषत्वेन पठितत्वात् न सगुणनिर्गुणश्रुत्योः साम्यम्। उपासनं च कल्पितगुणेनापि सम्भवति **'वाचं धेनुमुपासीत[2]'** इत्यादिवत्।

ननु सूत्राणां निर्गुणब्रह्मपरत्वे प्रमाणाभाव इति चेन्न, **'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि[3]'** इति सूत्रस्य निर्गुणे प्रमाणत्वात्। आकारवत्त्वेन सर्वकामः सर्वगन्धः सर्वरसः इत्यादि श्रुत्या प्रतिपादितं ब्रह्म। अस्थूलमनण्वह्रस्वं इत्यादिश्रुत्या च अनाकारत्वेन इत्येवमुभयथापि ब्रह्मणः श्रुतिप्रतिपाद्यत्वेऽपि ब्रह्मणो न स्वतः साकारत्वं च विरोधात्। नापि उपाधितो ब्रह्मणः साकारत्वम्, उपाधिलब्धस्वभावस्य स्वाभाविकत्वाभावात्। अतः नोभयलिङ्गत्वं ब्रह्मणः, साकारत्वमुपासनार्थं निर्दिष्टम्। निराकारत्वं तु स्वत इति अत्र निर्णयात्। तदप्युक्तम् **'अरूपवदेव हि तत्प्रधानत्वात्[4]'** इति सूत्रेण अरूपवदनाकारमेव ब्रह्म। तत्प्रधानत्वात् **'अशब्दमस्पर्शमरूपमव्ययम्[5]'** तदेतद्ब्रह्म अपूर्वमनपरमनन्तरमबाह्यमयमात्मा सर्वानुभूः—इत्यादिशास्त्राणि ब्रह्मणः स्वप्राधान्यमुद्घोषयन्ति। **'आह च तन्मात्रम्'** इति च सूत्रं ब्रह्म चैतन्यमात्रस्वरूपमित्याह। अत एवान्ते **'चिति तन्मात्रम्[6]'** इति सूत्रम्।

एवं प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः इति सूत्रमपि निर्गुणब्रह्मणि प्रमाणम्। तथा हि **'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च'** इत्यारभ्य **'अथातो नेति नेति न ह्येतस्मादिति नेति अन्यत्परमस्ति'** इति मूर्तामूर्तब्राह्मणगतेन वाक्येन 'नेति नेति' इति पदाभ्यां इदं न इदं न इत्यर्थकाभ्यां प्रकृतं यद् इयत्ता परिच्छिन्नं मूर्तामूर्तात्मकं प्रपञ्चस्वरूपं तत् ब्रह्मणि निषिध्यते। ब्रह्म त्वन्यत्परमस्ति इति परिशिष्यते। अतः ब्रह्म निष्प्रपञ्चमिति सिद्धम्।

---

१. बृ० उ० १।४।७। २. बृ० उ० ५।८।१। ३. ब्र० सू० ३।२।११।
४. तदेव–३।२।१४। ५. क० उ० १।३।१५। ६. ब्र० सू० ४।४।६।

जिज्ञासापदेन तादृशब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इत्यर्थो गम्यते। यद्यपि प्रकृत्यर्थज्ञानोद्देशेन प्रत्ययार्थः सन् प्रत्ययलक्षितो विचारो विधीयेत, तदा एकार्थीभावभङ्गेन एकप्रसरताभङ्गदोषः स्यात्, तथापि ज्ञानसाधनत्वविशिष्टविचारो मोक्षोद्देशेनादौ विधीयते। ततः पाष्ठिकबोधवेलायां ज्ञानोद्देशेन विचारो विधीयत इति स्वीकारान्नायं दोषः। ज्ञानं ब्रह्मज्ञानम्, तस्य चाज्ञाननिवृत्तिरेव फलं भवितुमर्हति सर्वत्र तथैवानुभवात्। तथा च ब्रह्मज्ञानाद् ब्रह्माज्ञाननाशः फलम्, आत्मरूपः अज्ञाननाश एव ज्ञानत्वोपलक्षितो मोक्षः। तदुक्तं वार्तिके **'निवृत्तिरात्मा मोहस्य ज्ञानत्वेनोपलक्षितः'** इति।

प्राप्ताप्राप्तविवेकेन अज्ञानं बन्धः, तन्नाशो मोक्ष इति फलितम्। अज्ञानं च न स्वरूपतो दुःखोत्पादकम्, अतो न बन्धः सुषुप्तौ अज्ञानमनुभूयते दुखं च न दृश्यत इति सर्वसिद्धत्वात्।

परन्तु अज्ञानजन्योऽध्यास एव बन्धो दुःखस्य मूलकारणत्वात्। अत एव भाष्यकारैः भाष्यारम्भे अध्यासलक्षणस्वरूपं प्रमाणैरुपपाद्य **'अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते'** इत्युपसंहारः कृतः। आत्मैकत्वविद्या आत्मस्वरूपाज्ञानं नाशयति, तन्नाशे तन्मूलकाध्यासनाशः। ततस्तत्प्रयुक्तदुःखाद्यनुत्पाद इति भाष्यकाराभिप्रायः।

ननु ब्रह्मज्ञानात् कथं जीवगताध्यासरूपबन्धनिवृत्तिः? नहि शुक्तिज्ञानाद् रज्जुगतसर्पाध्यासनिवृत्तिरिति चेत्, न, अत एव जीवब्रह्मणोरैक्यं सूच्यते। तदित्थं जीवः ब्रह्माभिन्नः तज्ज्ञाननिवर्त्याध्यासाश्रयत्वाद् यथा शुक्त्यभिन्नः, इदमंशः इत्यनुमानम्। ब्रह्मविचारपरशास्त्रस्य शारीरकमीमांसेति नाम प्रसिद्धेरपि तयोरभेदः। शरीरे भवः शारीरः, यद्यपीश्वरोऽपि शरीरे भवति, तत्रापि जीवः शरीर एव भवति इति तस्य शारीरपदेनाभिधानमुक्तं भाष्यकारैः। **'अनुपपत्तेस्तु न शारीरः[1]'** इति सूत्रे ततश्च शारीरकस्य जीवस्य स्वरूपं तस्य पारमार्थिकं ब्रह्माभिन्नत्वं चात्र विचार्यत इति ग्रन्थस्य शारीरकमीमांसानामधेयसामञ्जस्यम्।

मतान्तरेषु तु प्रपञ्चशरीरकब्रह्मविचारपरत्वेन तन्नामोपपादने अनुपपत्तेस्तु न शारीर इति सूत्रविरोधः स्पष्टः। तत्र शारीरपदेन जीवाभिधानात्।

ब्रह्मणो जगदुपादानत्वं **'जन्माद्यस्य यतः[2]'** इति सूत्रेणाभिहितम्। तच्च ब्रह्मणः प्रपञ्चोत्पत्तिस्थितिलयेषु विवर्तोपादानत्वान्न विरुध्यते। परिणाम्युपादानत्वं खण्डयित्वा विवर्तोपादानत्वं सूत्रकारैरेव स्थापितम् कृत्स्नप्रसक्तिर्निरवयवत्वशब्दको वा। श्रुतेस्तु शब्दमूलत्वाद् आत्मनि चैवं विचित्राश्च हीति सूत्रैः। परिणामवादे, यदि कृत्स्नं ब्रह्मपरिणये न तदा तज्जिज्ञासानुपपत्तिः, प्रपञ्चदर्शनेन दृष्टत्वात् प्रपञ्चव्यतिरेकेण ब्रह्माभावप्रसङ्गश्च। यद्येकदेशेन तदा ब्रह्मणः सावयवत्वप्रसङ्गः 'निष्फलं निष्क्रियम्' इति शास्त्रविरोधश्च इति पूर्वपक्षे सिद्धान्तः 'श्रुतेस्तु' इति।

श्रुतेर्वाक्यमनुपपन्नस्य वचनं इत्यत आह—**'आत्मनि चैवं'** विचित्राश्च हीति। स्वप्ने जीवस्वरूपानुपमर्दनेन स्वाप्निकपदार्थाः सृज्यन्ते, ते च जीवे दृश्यमानत्वाज्जीवोपादानक एव, तद्वद्

---

१. ब्र० सू० १।२।३। २. श्रीमद्भा० १।१।१।

ब्रह्मणि मिथ्याभूतप्रपञ्चोपादानत्वमित्यर्थः । स्वाप्नप्रपञ्चमिथ्यात्वं च **'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्[1]'** इति सूत्रेणाभ्यधायि ।

विशिष्टाद्वैतिनस्तु प्रकृतिरेव प्रपञ्चोपादानं प्रकृतिविशिष्टे ईश्वरे उपादानत्वमुपचर्यंत इत्याहुः । तन्मते **'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'** इति सूत्रविरोधः, तदर्थश्च एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, येनाश्रुतं श्रुतं भवति इति प्रतिज्ञा उद्दालकस्य तस्योपरोधस्तन्मते गौणोपादानत्वेन सर्वज्ञानानुपपत्तेः **'मृत्पिण्डेन सर्वं मृन्मयं विज्ञानं स्यात्[2]'** इति दृष्टान्तः परिणामवादे सङ्गच्छते विशिष्टाद्वैते तु नोपपद्यते । विवर्तवादिसिद्धान्ते तु परिणामवादस्य दुरुपपादत्वेन असम्भवदुक्तिकत्वात् घटादयो मृद्विवर्ता एव । तदुक्तं भामत्यां **'न च मृदः शरावादयो भिन्नाः, मृद्घट इति प्रत्ययानुपपत्तेः, नापि अभिन्नाः, आकारभेदात्, नापि भिन्नाभिन्नाः विरोधात् । अत्र अनिर्वचनीया एव, तदुक्तं श्रुत्या मृत्तिकेत्येव सत्यम्'** इति ।

अत्र प्राधान्येन प्रतिपाद्या विषयाः–(१) जीवः, (२) ईश्वरः, (३) जीवेश्वरयोः सम्बन्धः, (४) जीवस्य संसारः, (५) संसारान्मोक्षः, (६) मोक्षोपायः, (७) प्रपञ्चस्वरूपम्, (८) प्रपञ्चस्य जीवेश्वरसम्बन्धः—इतीमे संक्षेपतः ।

**जीवः कीदृश इति विचारः**

स तावदुत्पत्तिविनाशरहितो नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्य इति सूत्रे आत्मा नोत्पद्यते सृष्टिप्रकरणेषु जीवसृष्टेरनुक्तेः, प्रत्युत अविक्रियस्यैव स्वसृष्टेषु प्राणिशरीरेषु प्रवेशोक्तेः **'तत्सृष्ट्वा तदेवानुप्राविशत्[3]'** इत्यादौ । अपि च न जीवो म्रियते इत्यादौ जीवस्य नाशाभावश्च श्रूयते । अनादिभावस्य नित्यत्वं अनुमानसिद्धम् । अनादित्वं च तस्य सद्यो जातस्य शिशोः क्षीरपानादिप्रवृत्तेरिष्टसाधनताज्ञानसाध्यत्वात् तस्य प्रकृतजन्मन्यभावात् जन्मान्तरीयसंस्कारोद्बोधादेवाङ्गीकरणीयत्वात्, एवं जन्मान्तरेष्विति तस्यानादिता ।

यत्तु **'यथाऽग्नेर्विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वं एत आत्मानो व्युच्चरन्ति'** इति श्रुतिवचनं तन्न जीवजन्मसूचकं विस्फुलिङ्गस्याग्निजन्यत्वाभावात्; अपितु अग्न्येकदेशत्वाद् एकदेशश्च अल्पोपाध्यवच्छिन्नोऽग्निरेवाकाशघटाकाशन्यायेन उपाध्युत्पत्तिपर्यंवसानम् ।

यत्तु—

> **बालाग्रशतभागस्य शतधा कल्पितस्य च ।**
> **भागो जीवस्य विज्ञेयः स चानन्त्याय कल्पते ॥**

इति श्रुतिः । अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके इति सूत्रं च तत्रोभयत्र अंश इव अंशः उपाध्यवच्छिन्नः इत्येवार्थः परमात्मनः निष्कलत्वश्रुत्या मुख्यांशाभावात् ।

अत एवोपाधेः ब्रह्मसाक्षात्कारेण निवृत्तौ ब्रह्मभावः समञ्जसः, अन्यथा मुख्यांशत्वे ब्रह्मणोऽनित्यत्वं जीवस्य विकारित्वं च प्रसज्येयाताम्, ये तु ब्रह्मचेतनाचेतनशरीरम्, अतः चेतनाचेतनविशिष्टब्रह्मणश्चेतनाचेतनब्रह्मणां वा एकदेशो जीवः समुदायैकदेशस्य समुदायांशत्वव्यवहारात्,

---

१. ब्र० सू० ३।१।२ ।
२. तदेव—१।४।२३.।
३. तै० उ० २।६।१ ।
४. बृ० उ० २।१।२० ।

इति व्याचक्षते, तन्मते अंशिसंबन्धविधुरस्यांशत्वापत्तिः, अंशस्य अत्यन्तभेदाद् न च जीवस्येश्वरनियम्यत्वेन तदंशत्वं भृत्यस्य यजमानांशत्वापत्तेः। सूत्रे अन्यथा चापीति अभेदव्यपदेशस्य ब्रह्मदाशा इत्यादिश्रुत्युदाहरणेन जीवानां ब्रह्माभेदसूचनस्य च विरोधापत्तेश्च।

स च जीवो विभुः, अणुत्वे सर्वशरीरव्यापि सुखाद्यनुपलब्धि प्रसंगात्। मध्यमपरिमाणत्वेऽनित्यतापत्तेश्च तत्त्वमसीत्यादिश्रुत्या ब्रह्माभेदेन स्वरूपतो विभुत्वाच्च **'नित्यः सर्वगतः स्थाणुः[1]'** इति भगवदुक्तेश्च।

अत्र उत्क्रान्त्यादिहेतुभिः सूत्रकारो जीवस्याणुत्वं इति पूर्वपक्षयित्वा तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवद् बुद्धिगुणसारत्वाद् जीवस्य परिच्छिन्नत्वं बुद्ध्युपाधिमवलम्ब्य उत्क्रान्त्याद्युपपत्तिः स्वतस्तु जीवोऽपरिच्छिन्नो विभुर्ब्रह्माभिन्नत्वाद् इत्याह। जीवस्य ब्रह्माभिन्नत्वं सूत्रकाराभिमतमित्येतच्छास्त्रदृष्ट्या तूपदेशो **'वामदेववत्[2]'**—इति सूत्रे मामेव विजानीहि इति इन्द्रकृतोपदेशस्य **'अहं मनुरभवं सूर्यश्च'** इति वामदेवगतसर्वात्मत्वानुभवदृष्टान्तोक्त्या स्पष्टं प्रतीयते। अपि च आत्मेति तूपगच्छन्ति ग्राहयन्ति च इति सूत्रे 'अहं' ब्रह्मास्मीत्येव ध्यातव्यत्वोक्त्या चावगम्यते।

जीवस्य ब्रह्मरूपत्वं च **'अहमेवेदं सर्वोऽस्मीति मन्यते'** **'अथायमशरीरो ब्रह्मैव तेज एव'** इति च श्रुतौ स्पष्टमुच्यते। तथा **'अथाकामयमानो योऽकामो निष्काम इत्युपक्रम्य न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति'** इति च।

**'अयमात्मा ब्रह्म[3]'**, **'तत्त्वमसीत्यादौ[4]'** बहुशोऽभेदः स्वयमेव श्रुतिर्वक्ति। अतो जीवो ब्रह्माभिन्नत्वाद् विभुरेव तस्याणुत्वव्यपदेशो मनउपाधिकपरिच्छेदवत्त्वादित्यङ्गीकार्यम्, तद्गुणसारत्वसूत्रैस्तच्छब्दः उत्क्रान्तिगत्यागतीनामित्यत्र उत्क्रान्तिर्जीवस्य यदुपाधिप्रयुक्ता; तस्य मनसो गुणाः सारो यस्य तत्त्वात् तद्व्यपदेश उत्क्रान्त्यादिव्यपदेश इति ऋज्वर्थे सम्भवति विज्ञानप्राधान्यात् तस्य विज्ञानमिति व्यपदेशः इत्यर्थकरणं निष्प्रयोजनं जीवस्य स्वयं ज्ञानरूपत्वस्य **'अत्रायं पुरुषः स्वयं ज्योतिर्भवति[5]'**, **'असुप्तः सुप्तानभिचाकशीति'**, **यद्वै तत्र पश्यति पश्यन् वै तत्र पश्यति विज्ञानघन एव'** इत्यादि श्रुतिसिद्धत्वात् स्वयमपि तन्मते ज्ञानरूपत्वस्याप्यङ्गीकाराच्च तथा च सूत्रवैयर्थ्यं तन्मते।

अपि च अणोः यद्यप्यवयवाभावः, तथापि घृतकाठिन्यविलयवत् तस्य नाशापत्तेः कृतहानाकृताभ्यागमप्रसंगान्न तस्याणुत्वम्, अपि च आधुनिकविज्ञानशास्त्रे अणोरपि विभजनं कृत्वा वैज्ञानिकैः अणुनाशः प्रत्यक्षं प्रदर्शितः। अतः अण्वात्मभावो न स्यात्स्यात्।

अपि च 'तद्गुणसारत्वात्तु' इति सूत्रे तुशब्दः पूर्वपक्षनिराकरणार्थं इति सर्वसम्मतम्। यथा—तत्तु समन्वयादित्यत्र। परे नु तत्सूत्रम् 'ननु यो विज्ञाने तिष्ठन्', विज्ञानं यज्ञं तनुते

---

१. श्रीमद्भगवद्गीता—२।१३।
२. ब्रह्मसूत्रम्—।
३. बृ० उ० १।३।
४. छां० उ० ३।८।१३।
५. छां० उ० ५।७।१।

इत्यादौ ज्ञानमेवात्मेति व्यपदेशो दृश्यते, कथं ज्ञानकर्तरि आत्मनि ज्ञानपदप्रयोग इत्याह तद्गुणसारत्वादिति। ज्ञानगुणसारत्वादात्मनो विज्ञानपदेन व्यपदेश इत्यर्थकं तद्गुणसारत्व-सूत्रमिति विवृण्वन्ति, इदं तु निरर्थकमेव। सुषुप्तिकाले गुणगुणिभेदं विना आत्मनः स्वरूपज्ञानेनैव प्रकाशात् 'अत्रायं पुरुषः स्वयं ज्योति[1]'रिति विज्ञानघन इति च श्रुत्या ज्ञानगुणं विना स्वयं प्रकाशरूपत्वबोधनाच्चास्य पूर्वपक्षस्यैवानुत्थानाद् ज्ञानस्य गुणत्वे आत्मनः स्वरूपतो जडत्वापत्तिश्च न्यायमतवद् इति चिन्तनीयम्? चितितन्मात्रेण तदात्मकत्वादित्यनेन ज्ञानरूपत्वोक्तेः तद्विरोधाच्च।

**आत्मनो ज्ञानरूपता**

आत्मा ज्ञानरूपो वा ज्ञानाश्रयो वेति विषये नैयायिका आत्मनो ज्ञानं गुणः, स च शरीरदेशस्थमनस्संयोगाद् आत्मनि जायते, स्वयमात्माज ड इत्याहुः।

प्राभाकरास्तु ज्ञानं गुण एव, तत्तु क्षणिकमपि स्वप्रकाशं स्वांशे संशयरहितत्वात्, न तु स्वेन प्रकाश्यत्वमेकस्य कर्तृकर्मभावापत्तेरित्यूचुः।

वेदान्तिनस्तु आत्मा ज्ञानस्वरूपः, तच्च ज्ञानं स्वप्रकाशं 'अत्रायं पुरुषः स्वयं ज्योतिः' इति श्रुतेः। स्वप्नावस्थामधिकृत्येदं वचनं प्रवृत्तम्। यद्यपि सर्वदा आत्मा स्वप्रकाशज्ञानरूपः, तथापि तस्य जाग्रति सूर्यादिप्रकाशसद्भावाद् इन्द्रियमनोभ्यां ज्ञानजननात् परप्रकाश इति भ्रमो जायते। स्वप्ने त्विन्द्रियाणामुपरमात् सूर्यादीनामात्मसम्बन्धविरहाद् मनसश्च प्रकाश्य विषयाकारेण परिणतत्वाच्च 'आत्मा स्वप्रकाशः' इति स्पष्टं बुध्यत इत्यर्थः। अवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वं स्वप्रकाशत्वम्।

'ज्ञोऽत एव' इति सूत्रं आत्मनो ज्ञानरूपत्वपरं प्रत्ययोऽनर्थकः, न तु ज्ञानाश्रयपरं 'अथ यो वेदेदं जिघ्राणीति स आत्मा तस्य गन्धाय घ्राणः' इत्यादि पर्यायेषु आत्मनः स्वयं ज्ञानरूपत्वसूचनात्। चितितन्मात्ररूपेण मुक्तात्मनो व्यवस्थापनाच्च चिद्रूपत्वं स्वाभाविकम्। (परे तु ज्ञोऽत एवेत्यस्य ज्ञानाश्रय इत्यर्थमुक्त्वा तद्गुणसारत्वसूत्रं विज्ञानगुणेन तस्य विज्ञानपदवाच्यत्वमुपपादयन्ति, तेषां चितितन्मात्रेणेति सूत्रविरोधो यो वेदेदं इत्यादि श्रुतिविरोधः स्वयंज्योतिरिति विज्ञानघन इति च श्रुतिविरोधश्च।)

जीवस्य कर्तृत्वभोक्तृत्वादिकं न स्वाभाविकम्, अपि तु मन उपाधिकृतमेव। कामस्संकल्प इत्यादि श्रुत्या कामादीनां मनोधर्मत्वात् कामजन्यकृतेरपि मानसत्वात्। यत्तु कामस्संकल्प इत्यादिकं मन एवेत्यस्य मनो निमित्तकं आत्मगतधर्मविशेष इति व्याख्यानम्, तत् कामादिकं मन एवेति तादात्म्याभिधानविरुद्धम्। नहि निमित्तनैमित्तिकयोस्तादात्म्यव्यवहारः, कुलालो घट इति व्यवहाराभावात्। कर्तृत्वादिरूपेणात्मनः परिणामे तस्या नित्यत्वपाताच्च। 'नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्[3]' इति गीता कर्तृत्वादिरहित आत्मा इति ज्ञानमेव तत्वज्ञानम्, विपरीतं तु मिथ्या ज्ञानमिति साटोपमुद्घोषयति।

---

१. छां० उ० ५।७।१। २. ब्र० सू० २।३।१८। ३. गीता—५।८।

न च कर्तृत्वं स्वरूपप्रयुक्तं न; अपि तु इन्द्रियविषयप्रयुक्तमिति व्याख्या साध्वी। इन्द्रियविषयप्रयुक्तत्वे तद्धर्म एव स्यात्, विषयाकृष्टात्मप्रयुक्तत्वस्यैवानुभवाद् विषयाणां केवलं वासनोद्बोधेन कर्तृत्वप्रवर्तकत्वात्।

अत एव **'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः[1]'** इति कठवल्लीवाक्यमात्मनः स्वयं न भोक्तृत्वम्; अपि तु शरीरेन्द्रियमनोविशिष्टस्य, स्वयं तु शुद्ध एवेत्याह।

अत एव च—

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।**
**अहङ्कारविमूढात्मा कर्ताहमिति मन्यते[2]॥**

इति भगवानाह। तथा—**'प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः[3]'** इति आत्मनः स्वयमकर्तृत्वे लिङ्गम्। जीवस्य ब्रह्मप्रतिबिम्बत्वे **'आभास एव च[4]'** इति सूत्रं तथा **'अत एव चोपमा सूर्यकादिवत्[5]'** इति सूत्रं च प्रमाणम्।

न च आभाससूत्रमद्वैतवादस्य हेत्वाभासत्वप्रतिपादकत्वोक्तिः केषाञ्चिद्युक्ता। यतो ब्रह्मसूत्रेषु यत्र यत्र पूर्वपक्षदूषणं दृश्यते, तत्रेतरेषां चानुपलब्धेः संबन्धानुपपत्तेर्विप्रतिषेधाच्चेत्यादौ विशिष्य दोषा एवोद्भाविता दृश्यन्ते, न क्वापि दोषविशेषमनुक्त्वा आभासपदप्रयोगः। अपि च श्रुतौ जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति इत्यादावाभासपदं प्रयुज्यते, तच्च **'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्'** इति श्रुतिवशात् प्रतिबिम्बरूप इति निश्चेतुं शक्यते। अपि च अत एव 'चोपमासूर्यकादिवत्' इति सूत्रकार एव जलसूर्यकोपमानं दत्वा प्रतिबिम्बवादं स्वहस्तयति। तद्वज्जीवो नभोमय इत्यपि विभोर्जीवस्य उत्क्रान्त्यादिकमुपाधिगमनप्रयुक्तम्, न स्वाभाविकमिति निर्णयः।

**ईश्वरस्वरूपम्**

ईश्वरस्यानुमानवेद्यत्वं न्यायमते। वेदान्तिनस्तु सर्वेऽपि ईश्वरस्य श्रुतिवेद्यत्वमेवोरीचक्रुः, अनुमानस्यासाधकत्वात्। दृष्टान्तबलेन जगतः ईश्वरनिर्मितत्वमनुमिमानस्य स ईश्वरः कुलालादिवद् असर्वज्ञो रागद्वेषादिमांश्च सिध्येत्, प्रासादादिवद् बहुकर्तृकत्वं च प्रपञ्चस्य भवेत्। अत ईश्वरः श्रुत्येकवेद्यः किमु वक्तव्यं यदा शरीरव्यतिरिक्तो जीवोऽपि श्रुत्येकवेद्यः सद्यो जातस्य क्षीरपानादौ प्रवृत्तेरपि स्वभाववादेनोपपादयितुं शक्या, नावश्यं जन्मान्तरीयेष्टसाधनतानुभवजन्यसंस्कारोद्बोधेन स्मृतिं सा कल्पयितुं समर्थेति बृहदारण्यकभाष्ये स्पष्टम्।

**'अथातो ब्रह्मजिज्ञासा'** इति सूत्रे ब्रह्मशब्देन शुद्धमेव विचार्यतयोपक्षिप्तमपि वेदान्तेषु उपासनानां बहुलमुपलब्धेस्तदेव गुणविशिष्टरूपेणापि विचारविषयः। अत एव **अन्तस्तद्धर्मोपदेशाद्** आकाशस्तल्लिङ्गाद् इत्याद्यधिकरणप्रवृत्तिरानन्दमयाधिकरणे, **अदृश्यत्वाधिकरणे**, द्युभ्वाद्यधिकरणे, अक्षराधिकरणादौ च निर्गुणविचारः प्रवर्त्यते।

---

१. क० उ० ३।४।  २. गीता–३।२७।  ३. १३।२९।
४. ब्र० सू० २।३।५०।  ५. तदेव–३।२।१८।

**प्रपञ्चमिथ्यात्वनिरूपणम्**

छान्दोग्यषष्ठे उद्दालकः पुत्रं श्वेतकेतुं प्रति यद्विज्ञानेन सर्वं विज्ञायते तदुपपादयितुं दृष्टान्तमाह **'यथा सोम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'**[1] इति। अत्रोपादानज्ञानेनोपादेयं सर्वं ज्ञातुं शक्यते। प्रपञ्चस्य उपादानं च ब्रह्म। तज्ज्ञाने न सर्वः प्रपञ्चो ज्ञायेत। उपादेया मृदादौ घटाद्याकारा मिथ्या उपादानभूत-मृदादिज्ञानेन तत्त्वतो ज्ञाता भवन्ति। आकारास्तु कल्पिता मिथ्याभूताः, तेषां ज्ञानमज्ञानमेव शुक्तिरजतज्ञानवत्। सत्यं तु मृदेव घटापेक्षया।

इत्युपपाद्य पुनः पृथिव्यादौ त्रिवृत्कृते त्रीणि रूपाण्येव सत्यमित्युक्त्वा तस्य क्व मूलं स्यात्। **'अद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छेत्'** इत्यादिना सर्वप्रपञ्चमूलं सद्ब्रह्माव-गन्तव्यमित्युपदिदेश। तेन सतो ज्ञानेन तत्कार्यभूतः प्रपञ्चो ज्ञातो भवतीति स्वप्रतिज्ञानिर्वाहः सज्ज्ञानस्य च प्रयोजनं च तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये इति मोक्ष एवेत्यपि निरधारयत्।

**'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'**[2] इति सूत्रे ब्रह्मण उपादानकारणत्वे हेतुः प्रतिज्ञा-दृष्टान्तयोरनुपरोधः। प्रतिज्ञा एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञा, दृष्टान्तो मृद्घटादि, ब्रह्मणः केवल-निमित्तत्वं वदतां द्वैतिनामिदं प्रतिकूलम्, तथा ब्रह्मसहचरितप्रकृतेरुपादानत्वेन ब्रह्मण उपादानत्वं गौणमिति वदतामपि इदमधिकरणं प्रतिकूलमेव।

ब्रह्मोपादेयं सर्वम्, तच्च **'यावद्विकारं तु विभागो लोकवत्'**[3] इति सूत्रे यावच्छब्देन यद्यद् विभक्तम्, तद् विकार इति व्याप्तिसूचनाद् भेदयुक्तं सर्वमेव ब्रह्मणो विकार इति सूचनाद् गम्यते। अतो निखिलः प्रपञ्चो विकारः। जीवस्तु ब्रह्माभिन्नत्वाद् ब्रह्मणो भेदरहितत्वाच्च न विकार इति ज्ञातव्यम्। कुतः? ब्रह्मणः **'असङ्गो ह्ययं पुरुषः'**[4] इति श्रुत्या भेदसंगस्यापि निरासात् प्रपञ्चमिथ्यात्वं च सूत्रे तदनन्यत्वमारम्भणशब्दादिभ्य इत्यस्मिन् प्रतिपाद्यते। तद-नन्यत्वं ब्रह्मव्यतिरेकेणाभाववाचारम्भणश्रुत्याऽवगम्यते इति तदर्थः।

न केवलमत्रापि तु कृत्स्नप्रसक्तिर्निरवयवत्वशब्दलोपो वा इत्याक्षेपसमाधानसूत्रे **'श्रुतेस्तु शब्दमूलत्वात्', 'आत्मनि चैवं विचित्राश्च'**[5] हीति द्वे। तत्र शब्दमूलं ब्रह्म यथा शब्दमवगन्तव्य-मित्युक्त्वा यथा स्वाप्नपदार्था विचित्रं भासमाना उपादानजीवस्वरूपोपमर्दं विना सृज्यन्ते, तथा ब्रह्मणि प्रपञ्चसृष्टिरित्युक्त्या च सिध्यति। स्वप्नसृष्टेर्मिथ्यात्वं च मायामात्रं तु कात्स्न्र्येनानभि-व्यक्तस्वरूपत्वादित्यत्र स्पष्टं सूत्रकारैरेवोच्यते—न च मायामात्रं विचित्रमेव न तु मिथ्येति व्याख्यातुं शक्यम्, जीवानामपि विचित्रयन्त्रादिनिर्मातृत्वदर्शनेन तेन जीवव्यावर्तनासम्भवात्। प्रकृतैतावत्त्वसूत्रे **'नेति नेति'** इति श्रुत्या प्रपञ्चनिषेधो निषेधावधिभूतं शुद्धं ब्रह्म च प्रागेवोक्तम्।

परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः इत्यधिकरणे गुणसूत्रं तथाऽन्यप्रतिषेधाद् इति। अत्र ब्रह्मणः परमुत्कृष्टं नास्तीत्येतदुपपादयितुं ब्रह्मव्यतिरिक्तमेव नास्ति, कुत उत्कृष्टप्रसक्तिः?

---

१. छां० उ० ६।१।४।
२. ब्र० सू० १।४।२३।
३. तदेव– ।
४. बृ० उ० ४।३।१५।
५. ब्र० सू० ।

तथा हि ब्रह्मभिन्नस्यैव प्रतिषेधो दृश्यते । **'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद', 'ब्रह्मैवेदं सर्वम्'**[1], **'आत्मैवेदं सर्वम्'**[2] इत्यादावेवकाराद् ब्रह्मव्यतिरिक्तस्याभावबोधनाद् मिथ्यात्वं सूच्यत इति सूत्रार्थः ।

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा मुण्डके । **'कस्मिन्नु भगवो विज्ञाते सर्वं विज्ञातं भवति'**[3] इति श्रुतं बृहदारण्यके मैत्रेयीब्राह्मणे । **'आत्मनो वा अरे दृष्टे श्रुते इदं सर्वं विदितम्'**[4] इति तत्र छान्दोग्यषष्ठ इवोपपादनं न दृश्यते **'पुरुष एवेदं ब्रह्म परामृतम्'** इति मुण्डके । **'इदं सर्वं यदयमात्मा'**[5] इति मैत्रेयीब्राह्मणे सर्वात्मकत्वेन तदुपपादनं दृश्यते । भगवद्गीतासु च **'यज्ज्ञात्वा नेह भूयोऽन्यद् ज्ञातव्यमवशिष्यते'**[6] इत्युपक्रम्य **'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय'**[7] इति तदुपपादयति भगवान् । ब्रह्मणः सर्वात्मकत्वं सर्वतादात्म्यं यतः सर्वस्योपादानं ब्रह्म । उपादानत्वं च कृत्स्नप्रसक्तिसूत्रे परिणाम्युपादानत्वनिराकरणेन विवर्तोपादानत्वस्थापनात् प्रपञ्चो मिथ्येति ज्ञायते ।

उपनिषत्सु सर्वत्र सृष्टिमुक्त्वा ब्रह्मणः स्वसृष्टशरीरेषु प्रवेश उच्यते, प्रवेशो न जीवसहितस्य **'तत्सृष्ट्वा तदेवानुप्राविशत्'**[8] । 'अनेन जीवेनात्मनानुप्रविश्य' सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते इत्यत्र प्रविश्येत्यध्याहारः अन्यथाऽभिधानानुपपत्तेः । स एतदेव सीमानं विदार्यैतया द्वारा प्रापद्यत इत्यादौ ब्रह्मण एव प्रवेशकथनात् तदेव जीवरूपेण व्यवहरति इति ज्ञायते । सृष्टिप्रकरणेषु कुत्रापि जीवसृष्टेरवचनाच्च ।

यत्तु **'यथाऽग्नेर्विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मात् सर्वे आत्मानो व्युच्चरन्ति'**[9] इति तु ब्रह्मण औपाधिकांश उपाध्यनुसारेणोत्पन्न इत्यर्थे पर्यवस्यति इत्युक्तमेव ।

**जीवब्रह्मैक्यम्**

प्रपञ्चमिथ्यात्वे व्यावहारिकप्रातिभासिकभेदे किं मूलम् ? सत्यं ज्ञानमनन्तं ब्रह्मेत्युक्तेः ब्रह्मैव सत्यं मृत्तिकेत्येव सत्यम्, एवं सदेव सत्यमित्युक्तप्रायम्, तत्र इति शब्दो व्यर्थं इत्येके । तत्र इतिशब्दः आद्यर्थः प्रकारार्थो वा मृत्तिकादिसत्यं घटे गृह्यमाणे मृत् मृदि गृह्यमाणे जलम् इति रीत्या सदेवसत्यमित्यर्थः । यद्वा मृत्त्वे न घटःसत्य इति । न च सत्ये द्वैविध्यं कथं ? एकस्यैव सत्यत्वाद् इति शङ्क्यम् । व्यावहारिकत्वं सति प्रमातरि अबाध्यत्वं प्रातिभासिकत्वं स्वज्ञानकारकमात्रे अबाध्यत्वं सर्वदा अबाध्यत्वं पारमार्थिकत्वम् इति त्रिष्वपि अबाध्यत्वांशसाम्येन स त्रिविधेति व्यवहारः । श्रुतिश्च **'सत्यं चानृतं च सत्यमभवत्'**[10] इति ।

अत्र प्रथमसत्यं व्यावहारिकम्, द्वितीयं प्रातीतिकम्, तृतीयं मुख्यम्—**'तत्त्वमसि', 'अहं ब्रह्मास्मि', 'अयमात्मा ब्रह्म'** इत्यादीनि महावाक्यान्यपि प्रमाणानि । अङ्गुष्ठमात्रः पुरुषो मध्य

---

१. नृ० उ० ७।५ ।
२. नृ० उ० ७।४ ।
३. बृ० ३।६।१ ।
४. बृ० उ० २।४।५ ।
५. तदेव—१।४।७ ।
६. गीता—७।२ ।
७. गीता—१०।८ ।
८. तै० उ० ८।६ ।
९. बृ० उ० ३।९।२४ ।
१०. तै० उ० ८।६ ।

आत्मनि तिष्ठति ईशानो भूतभव्यस्य—इति जीवाभेदनिर्देशः । एवं अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्··· ·······धैर्येण । तं विद्याच्छुक्रममृतं इति जीवं ब्रह्मविद्यादित्यपि प्रमाणम् । सूत्रपाठे तु (।) वक्तुरात्मोपदेशः मां विजानीहीत्यारभ्य आनन्दोऽजरोऽमृतः इत्युक्तेर्ब्रह्मैव वक्तुरात्मेति निर्देशः । 'अवस्थितेरिति काशकृत्स्नः[1]' इति सूत्रे ब्रह्मणो जीवरूपेणावस्थितेरित्यर्थात्—तयोरैक्यसिद्धिः । न च ब्रह्मणो जीवे अन्तर्यामिरूपेणावस्थितेरिति सूत्रव्याख्यानं युक्तम्, आधारत्वोक्तिप्रदेशेषु सूत्रकारैः **'स्थानादिव्यपदेशाच्च[2]' 'स्थित्यदनाभ्यां च[3]', 'य आत्मनि तिष्ठन्[4]'** इत्यादौ स्थितिशब्दप्रयोगाद् अत्रान्योऽर्थो विवक्षितः परमात्मन एव जीवात्मना अवस्थितेरित्यर्थः साधुः ।

अत एव पूर्वसूत्रे उत्क्रमिष्यत् एवं भावादित्यौडुलोमिः इत्युक्त्वा अवस्थितेरिति सूत्रारम्भः । एवं भावेनावस्थितेरित्यर्थे तात्पर्यं सूचयति । **'अधिकं तु भेदनिर्देशात्'** इत्यत्र आत्मा द्रष्टव्य इत्यादौ भेदेन निर्देशाद् ईशः अधिकः, उपाधिना, न त्वन्य इति तेन भेदो न सिध्यति ।

**'अतोऽनन्तेन तथा हि लिङ्गम्'** (३–२–२८) अतः स्वाभाविकत्वादभेदस्य अविद्याकृतत्वाच्च भेदस्य जीवोऽविद्यां हित्वा अनन्तेन परेण एकतां गच्छति । **'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति'** इत्यादिश्रुतेः **'व्यतिहारो विंशिषन्ति हीतरवत्'** (३-३-३७) अत्र त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि योऽसौ सोऽहं इति परस्परमभेदध्यानं विधीयते, तच्च वास्तवमभेदं सूचयति । न चात्र उपासनादि विधिरस्ति, केवलं परस्पराभेदचिन्तनं तेनाभेददाढ्यं च । **'अहं ब्रह्म'** इत्यवगमाद् जीवस्य अब्रह्मत्वव्यावृत्तिः । **'ब्रह्म अहम्'** इति ध्यानाद् ब्रह्मणः परोक्षत्वव्यावृत्तिश्च सिद्धचति । अनेनाप्यभेदः कण्ठोक्तः ।

**'आत्मेति तूपगच्छन्ति ग्राहयन्ति च'** (४–१–३) अनेन सूत्रेण ब्रह्म आत्मत्वेनोपगन्तव्यमिति कण्ठोक्तेस्तयोरभेदः ।

अविभागेन दृष्टत्वात् जीवस्य ईश्वराभेदेन दृष्टत्वाद् इदं सूत्रं **'संपद्याविर्भावः स्वेन शब्दात्[5]'** इति सूत्रेण जीवोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते इति श्रुतौ जीवः स्वस्वरूपेणाविर्भवति इत्युक्त्वा परं ज्योतिरुपसंपद्येत्यत्र परंज्योतिः संपत्तिः किं रूपेति विषये अभेदरूपा अभेदेनैव साक्षात्कृतत्वाद् इति स्पष्टं कथनाद् जीवब्रह्माभेदः शास्त्रार्थं इति सिद्धम् ।

**जीवन्मुक्तिः**

श्रुतौ **'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपद्यते'** इति सत्संपत्तौ मरणपर्यन्तं विलम्बकथनाद् जीवन्मुक्तिसिद्धिः । अपि च बृहदारण्यके (४-४-७) **'अथ मर्त्योऽमृतो भवति'** अत्र ब्रह्मसमश्नुते—इत्युक्त्वा तद्यथा हि निर्ल्वयनी मृता प्रत्यस्ता शयीत एवमेवदं शरीरे शेते ।

**'अथाऽयमशरीरोऽमृतः प्राणो ब्रह्मैव'** इति जीवन्मुक्तिः प्रत्यक्षं निर्दिश्यते । भगवद्गीतासु च स्थितप्रज्ञो भगवता निर्निष्टो जीवन्मुक्त एव । अन्यथा **'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः[6]'** इति भगवद्वचनं विरुध्येत, ज्ञाने सति सद्योदेहापातात् ।

---

१. ब्र० सू० १।४।२२ । २. तदेव–१।२।१४ । ३. तदेव–१।३।७ ।
४. तदेव— । ५. ब्र० सू० ४।४।१ । ६. गीता–४।३४ ।

'स एनान् ब्रह्म गमयति' इत्यत्र आचार्यैः उपासकाः कार्यब्रह्मलोकमेव गच्छन्ति, तस्यैव गमनसम्भवात्, न तु परं ब्रह्म तस्यात्रैव प्राप्यत्वाद् इति **'कार्यं बादरिरस्य गत्युपपत्तेः[1]'** इति सूत्रेण सिद्धान्तमुक्त्वा परं जैमिनिर्मुख्यत्वादिति मुख्यब्रह्मेति पूर्वपक्ष इति निर्णीतम् ।

विशिष्टाद्वैतिनस्तु मुख्यार्थत्वेन ब्रह्मशब्दस्य परमेव ब्रह्म **'स एनान् ब्रह्म गमयति'** इत्यत्र ब्रह्मशब्दार्थः परं जैमिनिर्मुख्यत्वादिति सूत्रकारोक्तेरित्याहुः; तत्त्वाकाशाधिकरणविरुद्धम् । तत्र अनन्यथासिद्धलिङ्गस्य श्रुत्यपेक्षया प्राबल्यस्वीकारात् प्रकृते च गतिकर्मत्वोक्तेः मुख्ये असम्भवेन तल्लिङ्गस्यानन्यथा सिद्धत्वम् । सूत्रे च तदधिगम उत्तरपूर्वाधयोरश्लेषविनाशौ तद्व्यपदेशात् । इतरस्याप्येवमसंश्लेषः पाते तु अनारब्धकार्ये एव तु पूर्वे तदवधेरिति सूत्रैः ज्ञानिनः प्रारब्धकर्मव्यतिरिक्तं नश्यतीत्युक्तत्वात् प्रारब्धमनुभवन् विद्वानवतिष्ठते—इत्युक्तेर्जीवन्मुक्तिसिद्धिः । पाते तु इति च विदेहमुक्तिः । एवं **'यावदधिकारमवस्थितिराधिकारिकाणाम्'** (३–३) इति सूत्रं ब्रह्मविदामिन्द्रयमादीनामाधिकारिकपुरुषाणामधिकारस्थितिपर्यन्तं जीवन्मुक्तरूपेणावस्थितिरित्युक्तेः जीवन्मुक्तिसिद्धिरिति शम् ।

● ● ●

---

१. ब्र० सू० ४।३।७ ।

# अध्यासस्वरूपं तन्निरासोपायाश्च

डॉ० रामप्रसादत्रिपाठी
व्याकरणविभागाध्यक्षचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀❀❀

स्वरूपसुखमभिलषन्तो दुःखाच्च बिभ्यतः समे प्राणिनोऽनुभूयन्ते। तत्र दुःखस्य हेतुः जननमरणाविच्छेदलक्षणा संसृतिः। सा चाध्यासमूलिका। अतोऽध्यासस्य स्वरूपं ज्ञात्वा तन्निरासोपायाश्च ज्ञातव्याः। ज्ञात्वा च तदनुतिष्ठतीति नियमेन ज्ञाने सत्येवोपायानुष्ठाने प्रवृत्तिः स्यात्, तत एव च स्वरूपसुखावाप्तिः स्यात्। निबन्धे चात्र चत्वारो भागाः सन्ति। अध्यासस्य लक्षणम्, भेदाः, साधनानि, निरासोपायाश्चेति।

**अध्यासस्य लक्षणम्**

तत्र चतुःसूत्रीभाष्यादावध्यासलक्षणम्—**'स्मृतिरूपः परत्र पूर्वदृष्टावभासः'** इति। अत्र परत्र पूर्वदृष्टावभास इत्यध्यासलक्षणम्। स्मृतिरूप इति उपलक्षणतया प्रदर्शनमात्रम्। रत्नप्रभाकारेणावभासपदस्य व्युत्पत्तिद्वयी कृता। अवभासनमवभासः, अवभास्यते इति अवभासः। तत्र प्रथमव्युत्पत्त्या शुक्तिरजतादिविषयकमविद्यावृत्तिरूपं ज्ञानं गृह्यते। द्वितीयव्युत्पत्त्या तु शुक्तिरजतादिकमाविद्यकं गृह्यते। तत्र प्रथमो ज्ञानाध्यासः, द्वितीयस्तु अर्थाध्यास इति। उक्तलक्षणे परत्र घटकपरपदेन भ्रमस्याधिष्ठानमुच्यते। तच्चाधिष्ठानं लौकिकसत्त्यं शुक्तिकादिरूपम्, पारमार्थिकसत्त्यं साक्षिचैतन्यरूपम्। अत एवोच्यते शिष्टैः—**'सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्ययः'** इति।

कैश्चिद् विद्वद्भिः अध्यासलक्षणं कृतम्—अधिष्ठानविषमसत्ताकोऽवभास इति। तदभाववति तत्प्रकारकोऽवभास इति। अर्थाध्यासस्य षड्भेदा भवन्ति। धर्माध्यासः, धर्मसहितस्य धर्मिणोऽध्यासः, सम्बन्धाध्यासः, सम्बन्धसहितस्य सम्बन्धिनोऽध्यासः, अन्यतराध्यासः, अन्योऽन्याध्यास इति। प्रकारान्तरेण ज्ञानाध्यासस्य द्वौ भेदौ। स्वरूपाध्यासः, सम्बन्धाध्यास इति। उक्तेषु षट्स्वध्यासभेदेषु प्रथमद्वितीयपञ्चमाः स्वरूपाध्यासेऽन्तर्भवन्ति। तृतीयः संसर्गाध्यासे, चतुर्थषष्ठौ संसर्गाध्यासे च तिष्ठतः। अध्यासस्थलेऽध्यस्तधर्मा अधिष्ठानधर्मान् आवृण्वन्ति। यथा आत्मनश्चत्वारि विशेषणानि—सत्, चित्, आनन्द, अद्वयेति। एतद् विपरीताश्चत्वार एवाध्यस्तधर्माः—अनृतत्वम्, जडत्वम्, दुःखरूपत्वम्, सद्वयत्वञ्चेति। एतेऽध्यस्तधर्मा आत्मधर्मान् सत्त्वादीन् आवृण्वन्ति इति। इयमेव चिदचिद्ग्रन्थिरुच्यते।

**उपर्युक्तानामध्यासानां भेदाः**

दृष्टान्ताश्च निम्नलिखिताः शास्त्रेषु दृश्यन्ते। तद्यथा—भेदभ्रमः, कर्तृत्वभ्रमः, सङ्गभ्रमः, विकारो ब्रह्मभिन्न इति भ्रमः, जगत्सत्यमिति भ्रम इति पञ्च भ्रमाः।

भेदकर्तृत्व-संसर्ग-विकृति-विश्व-सत्यता ।

विभ्रान्तयो निराकार्या दृष्टान्तैः पञ्चभिः क्रमात् ॥

बिम्बकप्रतिबिम्बोऽथ लोहितः स्फटिको मणिः ।

घटाकाशश्च विज्ञेयो रज्ज्वहिर्हेमकुण्डलम् ॥

आचार्यमण्डनमिश्रा विभ्रमविवेकग्रन्थे स्वकीये एवं वदन्ति—

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।

परीक्षकाणां विभ्रान्तो विवादात्मा विविच्यते ॥ इति ।

अत्रानिर्वचनीयख्यातिमादाय विभ्रमपञ्चकं सम्पद्यते ।

**अध्यासस्य साधनानि**

धर्मिणः सामान्यज्ञानम्, प्रमेयदोषः, प्रमातृदोष इति दोषत्रयम्, आरोप्यसजातीयवस्तुनः संस्कार एतत्सर्वं दण्डचक्रादिन्यायेनाध्यासे कारणम् । तार्किकचक्रवर्ती कश्चन धर्मिज्ञानमध्यासस्य कारणं न मन्यते, किन्तु धर्मिणा सह इन्द्रियसन्निकर्षम् । अन्यत् सर्वं पूर्वेण समानम् । इदं तु न युक्तम् । 'कुलालजनकोऽपरः' इत्युक्तरीत्या जन्येन ज्ञानेन जनकस्य इन्द्रियार्थसन्निकर्षस्यान्यथा-सिद्धत्वात् । उक्ते चक्रवर्तिमते इदमाकारा रजताकारा च मनोवृत्तिरेव भवति । तत्रेदमर्थेन सह चक्षुषः संयोगः सम्बन्धः, रजतेन सह तु ज्ञानलक्षणप्रत्यासत्तिलक्षणः संसर्गः । एतन्मतेऽपि मनोवृत्तिलक्षणो ज्ञानाध्यासः, अर्थाध्यासस्तु न व्यावहारिकसत्यस्यैव रजतस्य तत्र भानात् । इदञ्च नैयायिकवादानुसरणम् । धर्मिज्ञानमध्यासकारणमिति वादिनां मतत्रयम् । तथा हि—

(१) एकस्मिन् मते इदमाकारा वृत्तिरधिष्ठानज्ञानरूपा । तत्रैव रजताकारा अविद्या-वृत्तिश्चोत्पद्यते ।

(२) द्वितीयमते धर्मिज्ञानरूपा इदमाकारा मनोवृत्तिर्भवति, अनिर्वचनीयं रजतम्, तत्र इदन्तायाः संसर्गोऽनिर्वचनीयः । रजताकाराऽविद्यावृत्तिश्चानिर्वचनीया उत्पद्यते ।

(३) तृतीयमते धर्मिज्ञानरूपा इदमाकारा मनोवृत्तिरेव भवति, न तु रजताकाराऽ-विद्यावृत्तिः । रजतं तु तत्र अनिर्वचनीयमुत्पद्यते, इदन्ताया रजते संसर्गोऽप्यनिर्वचनीय एवोत्पद्यते । इदञ्च द्वयं साक्षिण्यध्यस्तं साक्षिभास्यम् इति नास्ति रजताकाराऽविद्यावृत्त्यपेक्षा । अत्र मते केवलमर्थाध्यास एव भवति, न ज्ञानाध्यासः ।

इदञ्च मतत्रयमपि समीचीनम् । तदुक्तम्—

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।

सा सेह प्रक्रिया साध्वी विपरीता ततोऽन्यथा ॥ इति ।

यत्तु कैश्चिदुच्यते—तृतीयमते वृत्तेरभावात्संस्काराभावे स्मृतिर्नोपपद्यते इति, तन्न युक्तम् । साक्ष्यभिव्यञ्जिकाया इदमाकाराया मनोवृत्तेरेव संस्कारजनकत्वसम्भवात् । तृतीयमते इदं पदार्थस्य रजते तादात्म्यमनिर्वचनीयमुत्पद्यते इत्यस्यापि स्वीकारात् ।

(१) अध्यस्ताधिष्ठानयोः सादृश्यं प्रमेयदोषः। तच्च **'इदं रजतम्'** इत्यादिस्थले चाकचिक्यादिरूपम्। **'सन् घटः'** इत्यादौ कल्पिताकल्पितसाधारणं सत्त्वादिरूपं सादृश्यम् **'अहं गौरः'** इत्यादौ कोशपञ्चके आत्मत्वभ्रमे सापेक्षानपेक्षसाधारणमान्तरत्वं सादृश्यम्।

(२) अन्तःकरणगतः प्रारब्धः कर्मसंस्कारः प्रमातृदोषः। अन्तःकरणावच्छिन्नचैतन्यस्य प्रमातृत्वाद् विशेषणधर्मस्य विशिष्टे उपचारः।

(३) प्रमाणदोषः—रजतादिभ्रमस्थले चक्षुरादिगतः काचकामलादिर्दोषः। अनात्मन्यात्मभ्रमस्थले अन्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य प्रमाणगताविद्यैव दोषः।

वेदान्तदर्शने यत्र तत्रान्यशास्त्रेष्वपि अध्यासस्येमान्युदाहरणानि प्रसिद्धानि—प्रतिबिम्बः, स्वप्नः, माया, गन्धर्वनगरम्, शुक्तिरजतम्, मरुमरीचितोयम्, मनोराज्यमिति।

**अध्यासनिरासोपायाः**

तत्र **पूर्वमीमांसा** वेदापौरुषेयत्वरक्षार्थमीश्वरमपह्नुवाना सृष्टिप्रलयौ न मन्यते। उत्तरमीमांसा तु ब्रह्मणः शक्तिभूतां मायां प्रकृतिपदवाच्यां जगतः परिणाम्युपादानं मन्यते। सांख्ययोगावपि प्रकृतेरेव परिणामं जगन्मन्येते। प्रमाणशास्त्रानुयायिनस्त्वारम्भवादिनः परमाणूनेव द्व्यणुकादिद्वारा जगत उपादानकारणत्वेन मन्यन्ते। ईश्वरं तु निमित्तकारणमिति।

एवं **चोत्तरमीमांसा मते** स्थूलसूक्ष्मप्रपञ्चोपहितं सगुणं ब्रह्म तदनुपहितंतु निर्गुणमिति स्पष्टं प्रतीयते। परमाणवो जगदुपादानकारणमिति नये तु नेदं प्रतीयते। किन्तु जगत्कर्तृत्वेन धृत्यादिना च भगवाननुमीयते। उत्तरमीमांसानयेऽविद्योपादानकस्य जगतो मृषात्वेन ब्रह्मणि कल्पितत्वेन विचारेणाधिष्ठानसाक्षात्कारे सति अविद्यानिवृत्त्या मुक्तिरिति।

**सांख्ययोगनये** तु प्रकृतेः सत्यत्वेन जगतोऽपि सत्यत्वात्, **'तदा द्रष्टुः स्वरूपेऽवस्थानम्'**[1], **'वृत्तिसारूप्यमितरत्र'**[2] इति सूत्रद्वयोक्तरीत्या चित्तवृत्तिनिरोधरूपेण योगेन प्रकृतितः पुरुषस्य भेदसाक्षात्कारेण कैवल्यमिति कैवल्यभेदः। अत एव आत्मा द्रष्टव्यः, प्रकृतितो विवेक्तव्य इति सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्राः। उत्तरमीमांसा नये तु सगुणस्य ब्रह्मण उपासनया प्राप्तिः, निर्गुणस्य तु विचारेण इति विवेकः। सगुणस्य ब्रह्मणोऽहंग्रहोपासनायामपि भेदग्रहो न निवर्तते। इदन्तु सर्वेषां मतम्—**'यद् अज्ञानाद् बन्धः, ज्ञानात्तु कैवल्यम्'** इति।

तत्र ज्ञानस्वरूपे परं विवादः—**'षोडशपदार्थानां तत्त्वज्ञानान्मोक्षः'** इति **नैयायिकवैशेषिकौ**। प्रकृतिपुरुषयोर्भेदज्ञानान्मोक्ष इति **सांख्ययोगौ**। जीवब्रह्मणोरभेदज्ञानान्मोक्ष **इत्युत्तरमीमांसका** इति। यत् किञ्चन जगति भासते तत्सर्वं ब्रह्मभासैव भासते, वेदादिरूपं शास्त्रञ्च ब्रह्मणो ज्ञापकत्वाद् योनिः इति द्वयमपि—**'शास्त्रयोनित्वात्'**[3] इति सूत्रेणोक्तं व्याख्यातञ्च तथैव श्रीशङ्करभगवत्पादैः। ब्रह्मणश्च प्रत्यक्षं तत्त्वमस्यादिमहावाक्येभ्य एव भवति, **'तं त्वौपनिषदं पुरुषं पृच्छामि'** इति श्रुतौ ब्रह्मण औपनिषदत्वोक्तेः। उपनिषदा गृह्यते औपनिषदः पुरुषः इति हि व्युत्पत्तिः। यद्यपि पुराणादिस्मृतिशास्त्राणि उपासनाभेदान् प्रतिपादयन्ति।

---

१. योगसूत्रम्–१।३।　२. तदेव–१।४।　३. ब्र० सू० १।१।३।

ब्रह्मस्वरूपं भिन्नं भिन्नं वर्णयन्ति, तथापि निरुपाधिकं विज्ञेयमेकमेव ब्रह्म। मनुष्यो यदा सर्वा अज्ञानभूमिका ज्ञानभूमिकाभिस्तावतीभिरेवातिक्रम्य तुरीयावस्थां प्राप्तो भवति, तदैव निजं सर्वपरिच्छेदातीतं रूपं लभ्यते।

उपनिषद्रूपं शास्त्रं वेदस्य शिरोभागः। उपनिषदां प्रवृत्तिर्द्विधा भवति। विधिमुखेन, निषेधमुखेन च। तत्र निषेधमुखेन प्रवृत्तिः—अर्थात् आदेशो नेति नेति। विधिमुखेन प्रवृत्तिः—'सत्यं ज्ञानमानन्दं ब्रह्मेति'। कश्चिद् भाग्यवान् एव महापुरुषो ब्रह्मज्ञानस्य परां काष्ठां प्राप्य ब्रह्मनिष्ठो भवति।

वेदे त्रीणि काण्डानि सन्ति—कर्मकाण्डम्, उपासनाकाण्डम्, ज्ञानकाण्डञ्चेति। तत्र कर्मकाण्डं बहुलम्, तत्तत्फलार्थिनां तदधिकारिणां बाहुल्यात्। तदपेक्षया उपासनाकाण्डं न्यूनम्, उपासनाधिकारिणां न्यूनत्वात्। तदपेक्षया ज्ञानकाण्डं न्यूनम्, तदधिकारिणां पुरुषधौरेयाणां तदपेक्षया न्यूनत्वात्। वेदस्य सम्यक् पर्यालोचनया विज्ञायते यदसौ प्रवृत्तिमार्गनिवृत्तिमार्गयोः प्रविभक्तः। तत्र निवृत्तिविषया अत्यल्पा उपलभ्यन्ते, प्रवृत्तिमार्गविषयाः कर्मसाध्या बाहुल्येन उपलभ्यन्ते। अस्य मार्गद्वयस्य अवलम्बनेनोभयविधा गतिः कर्मकृतो यथायथं सिद्धा भवति। यावद् उपास्योपासकभावसम्बन्धो वर्तते, तावद् द्वैतभानं न निवर्तते। द्वैतभाने सति सगुणं ब्रह्म उपास्यं भवति। कर्मणा फलकामस्य तत्तत्फलं सिद्ध्यति, निष्कामस्य तु चित्तशुद्धिर्भवति। यद्यपि उपासनाऽपि कर्मैव, तथापि सा मानसं कर्म।

तथा हि उपासना द्विविधा—भेदग्रहवती, अभेदग्रहवती चेति। तत्र द्वितीयोपासनायां जीवो ब्रह्मैक्यमनुभवति इति। निम्नश्रेणिका उपासना चित्तविक्षेपं दूरीकृत्य स्वोत्पादित-भक्तिद्वारा चित्तं पुनाति। उच्चकोटिका तु उपासना ब्रह्मसान्निध्यं प्राप्य परां भक्तिं प्रकटीकरोतीति।

इह घोरे कलियुगे समस्तोपायसारभूता भगवद्भक्तिरेव अध्यासस्याशेषतो निरासे सामर्थ्यं दधाना चकास्तीति भगवान् विश्वनाथस्तादृशभक्तिप्रदानेनानुग्रहं विदध्यात् सर्वेषु भक्तजनेषु। इति शम्।



# वैशेषिकदर्शनसमीक्षा

श्रीकेदारनाथत्रिपाठी
दर्शनविभागाध्यक्षः,
काशीहिन्दूविश्वविद्यालये

'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इति। कश्यपवंशजातेन योगविभूतिमता परमतपस्विना उञ्छवृत्त्या कणभक्षणाश्रितजीवनेनान्वर्थाभिधानेन महर्षिकणादेन रचितमिदं वैशेषिकदर्शनं जगति पदार्थविद्याया मूलस्रोतोभूतं भारतीयं पदार्थशास्त्रमिति विश्रूयते लोके। उक्तं हि प्रशस्तपादेन भाष्यादौ—

योगाचारविभूत्या यस्तोषयित्वा महेश्वरम्।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः॥ इति।

यद्यप्यं मुनिः कदा कुत्र जनुरधत्तेति नाद्यावधि सम्यङ् निर्णयो जातस्तथापि मिथिला-प्रदेशे महर्षेः कश्यपस्य कुलेऽभूदिति किंवदन्ती श्रूयते विदुषाम्।

कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत्।
गोतमेन तथा न्यायः सांख्यन्तु कपिलेन वै॥

इति पद्मपुराणवचनादतिप्राक्तनत्वमस्य प्रमीयते। कणादगौतमयोरपि कणादस्यैव प्राचीनतरत्वं केचिदनुमन्यन्ते। तेषामनुसारेण ख्रीस्ताब्दारम्भात् चतुःशतवर्षेभ्यः पूर्वं जातो गौतमः, कणादस्तु ततः सार्धपञ्चशतवर्षेभ्यः पूर्वं जात इति।

वैशेषिकसूत्रभाष्यकर्तुर्महर्षेः प्रशस्तपादाचार्यस्याविर्भावस्तु वैक्रमाब्दद्वितीयशतकेऽभूदिति ऐतिहासिका मन्यन्ते। केचित्तु 'प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः। पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदयः॥' इति भाष्योक्तिव्याख्यानावसरे वैक्रमैकादशशतकाब्दे बङ्गदेशोद्भवेन भट्ट-श्रीश्रीधराचार्येण न्यायकन्दलीग्रन्थारम्भे 'अभिमतदेवतां शास्त्रस्य च प्रणेतारं गुरुं श्लोकस्य पूर्वार्धेन नमस्यति-प्रणम्येति। कर्मारम्भे हि देवता गुरवश्च नमस्क्रियन्त इति शिष्टाचारोऽयमिति लेखात्, किरणावल्यामुदयनाचार्येण चास्यैव मङ्गलश्लोकस्य व्याख्यानावसरे—शास्त्रारम्भे सदाचार-परिप्राप्त्या कायवाङ्मनोभिः कृतं परापरगुरुनमस्कारं शिष्यान् शिक्षयितुमादौ निबध्नाति प्रणम्येतीति लेखाच्च प्रशस्तपादाचार्यो महर्षेः कणादस्य शिष्यस्तत्समानकालीनश्चेत्यनुमिन्वन्ति।

प्रशस्तपादस्यापि ऋषित्वादेतत्कृतं भाष्यमार्षमिति मन्यते विद्वद्भिः। ऋषित्वञ्चास्य गोत्रप्रवरनिर्णयग्रन्थेषु समुल्लेखात् 'प्रवरैर्ये समाख्याता ऋषयस्ते इति श्रुतिः। तत्पुत्रपौत्रनप्तारः ऋषिपुत्रा इति स्मृताः॥' इति वचनानुसारमनुमन्यते। अत एव विश्वनाथपञ्चाननेन 'प्राणादिरि-त्युक्तमाकरे' इति वदता प्रशस्पादभाष्यमाकरत्वेन स्वीकृतम्। अयमेव हि निबन्धकाराणां सम्प्रदायो यदार्षग्रन्थानेवाकरत्वेन प्रमाणयन्ति।

देशविचारे तु न्यायवैशेषिकयोरार्षग्रन्थानां पठनपाठनप्रचारस्य व्याख्यादिनिर्माण-सम्प्रदायस्य च प्रायो मिथिलादेश एव वङ्गापेक्षया पूर्वकाले सद्भावेन प्रशस्तपादस्य प्रादुर्भावो मिथिलायामेव सम्भाव्यते ।

**वैशेषिकदर्शनसम्बन्धिनो ग्रन्थाः**

प्रशस्तपादभाष्यस्योपरि श्रीमदुदयनाचार्यस्य किरणावलीव्याख्या बुद्धिनिरूपणान्ता समुपलभ्यते । वर्धमानोपाध्यायैर्नियमत उदयनाचार्यग्रन्थानां व्याख्यानादयमाचार्यो मैथिल इति विश्वस्यते । किरणावल्या उपरि प्रकाशाभिधाना व्याख्या श्रीवर्धमानोपाध्यायस्य वर्तते । अयं हि मिथिलादेशे दरभङ्गामण्डलान्तर्गते करिजनग्रामे नव्यन्यायप्रवर्तकस्य तत्त्वचिन्तामणिकर्तु-र्गङ्गेशोपाध्यायस्यात्मज इति प्रसिद्धमेव । किरणावलीप्रकाशस्य चतुःसहस्रश्लोकात्मिका प्रकाशिकाख्या व्याख्या भगीरथठक्कुरेण मेघठक्कुरापराभिधानेन मैथिलेन विदुषा रचिता समुपलभ्यते ।

प्रकाशस्योपरि व्याख्यान्तरभूता वासुदेवसार्वभौमशिष्यस्य प्रसिद्धनैयायिकस्य वङ्गदेशो-द्भवस्य श्रीरघुनाथशिरोमणेर्विवृतिरुपलभ्यते । विवृतेरुपरि च मथुरानाथतर्कवागीशेन रहस्यनाम्नी व्याख्या, विश्वनाथभट्टाचार्याणां न्यायपञ्चाननानां सहोदरेण रुद्रभट्टाचार्येण च विवृतिभाव-प्रकाशिका व्याख्या रचिता । इत्येवं वैशेषिकदर्शनभाष्यस्य साक्षात् परम्पराप्राप्ता नैका व्याख्याः समुपलभ्यन्ते प्रकाशमागताः ।

किन्तु सूत्राणामुपरि केवलमेकैव व्याख्या श्रीशङ्करमिश्रकृतोपस्काराभिधाना प्रकाशिता दृष्टिगोचरतामायाति । भारद्वाजकृतान्यापि काचिद् वृत्तिरासीत्; परन्तु सा नोपलभ्यतेऽधुना । सम्भाव्यते मिथिलासंस्कृतविद्यापीठतः प्रकाशिता वैशेषिकसूत्रवृत्तिरेव सा भवेत् । शङ्करमिश्रो हि कन्दलीकारात् श्रीश्रीधराचार्यात् पश्चाद् विक्रमस्य चतुर्दश्यां शताब्द्यां वर्तमानो न्याय-वेदान्तादिशास्त्रपारङ्गतो विदुषामग्रगण्यो मिथिलायामभूदित्यस्ति समेषां निर्णयः । एतदति-रिक्ता न्यायलीलावती, व्योमवती, सूक्तिः, सेतुनामानो वैशेषिकदर्शनस्य व्याख्याग्रन्थाः सन्ति । एतावत्येवाल्पीयसी ग्रन्थसम्पत्तिर्वैशेषिकदर्शनस्येदानीमुपलब्धा ।

एतस्याः स्थितेः केनापि कारणेन भाव्यम् । तच्च कारणमिदमेव प्रतीयते यन्न्याय-वैशेषिकयोः प्रायः सिद्धान्तैक्येन परवर्तिनो विद्वान्सो वैशेषिकमपि न्याय एव गतार्थयन्तो वैशेषिकदर्शने स्वातन्त्र्येण निजलेखनीं न प्रावर्तयन्निति । एतत्प्रभावादेव भाषापरिच्छेदादीनां भूयसां मिश्रग्रन्थानां रचनाः समजायन्त ।

**न्यायवैशेषिकयोः समानतन्त्रत्वम्**

न्यायवैशेषिकयोः सिद्धान्तसाम्यादेवोभयदर्शने मिथः समानतन्त्रतया प्रसिद्धे स्तः । तथा चाह स्म भगवान् वात्स्यायनः प्रतितन्त्रसिद्धान्तनिरूपणप्रसङ्गे—'समानतन्त्रसिद्धः परतन्त्रसिद्धः प्रतितन्त्रसिद्धान्तः'[1] इति न्यायसूत्रभाष्ये—'पुरुषकर्मादिनिमित्तो भूतसर्गः, कर्महेतवो दोषाः प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतनाः, असदुत्पद्यते, उत्पन्नं निरुध्यते इति योगानाम्' (वैशेषिकाणा-मित्यर्थः) इति । अर्थादेते न्यायसिद्धान्ताः स्वसमानतन्त्रे वैशेषिकेऽपि सिद्धाः सन्ति । अतः प्रति-

---

१. न्यायसूत्रम्–१।१।२९ ।

तन्त्रसिद्धान्ता उच्यते। जयन्तभट्टोऽपि स्पष्टमाह न्यायमञ्जर्याम्—'**यथास्माकमीश्वरेच्छाप्रेरितपरमाणुनिर्मितानि पृथिव्यादीनि समानतन्त्रे कणव्रतमते तथैव सिद्धानि**[1]' इति।

एवमीश्वराभ्युपगमे 'तद्वचनादाम्नायस्य प्रामाण्यम् (वै० द० १।१।३), 'संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्' (२।१।१८) इति वैशेषिकसूत्रवत् 'ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्, तत्कारितत्वादहेतुः' (४।१।१९–२१) इति न्यायसूत्रे ईश्वरं साधयतः। मोक्षस्वरूपमप्युभयत्र समानम्। तथा च न्यायसूत्रम्—"तदत्यन्तविमोक्षोऽपवर्गः" (१।१।२२), 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' (१।१।२) इति। वैशेषिकसूत्रञ्च—'**तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः**[2]' इति। अयं सूत्रार्थः—तत्त्वज्ञानेन मिथ्याज्ञानादिनाशे सति पूर्वशरीरेण सहात्मनः सम्बन्धनाशे पुनर्देहान्तराप्राप्त्याऽऽत्यन्तिकः पुनर्दुःखानुत्पादलक्षणो मोक्ष इति। न्यायदर्शने यान्यात्मनो लिङ्गानीच्छाद्वेषसुखदुःखज्ञानान्युक्तानि, तान्येव वैशेषिकेऽपीति नात्मसम्बन्धेऽप्यनयोर्भेदः कश्चित्। हेत्वाभासा अपि पञ्च न्यायोक्ताः वैशेषिकसूत्रे चकारात् सङ्गृहीताः। प्रतिज्ञादयो गौतमसूत्रोक्ताः पञ्चावयवा एव वैशेषिके प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायसंज्ञाभिरुक्ताः। एवं शब्दानित्यत्ववादः परमाणुकारणवादश्चोभयत्रापि समानौ स्तः।

अयथार्थज्ञानभेदा यद्यपि न्याये संशयविपर्ययतर्करूपत्रयः, वैशेषिके च संशयविपर्ययानध्यवसायस्वप्नलक्षणाश्चत्वारः सन्ति; तथापि न्यायोक्ततर्कस्य वैशेषिके विपर्ययशब्देन प्रतिपादनात्, वैशेषिकोक्तानध्यवसायस्य निर्णयाभावरूपस्य संशयेऽन्तर्भावात्, स्वप्नस्य च विपर्ययेऽन्तर्भावात् नाविद्याभेदेऽप्यनयोर्वस्तुतो विरोधः। एवं पदार्थानां षोडशत्वसप्तत्वप्रयुक्तोऽपि नानयोर्विरोधः, नव्यैः सप्तस्वेव षोडशानामन्तर्भावस्य बहुत्र प्रतिपादनात्।

इत्थञ्चायं भूयान् सिद्धान्तसाम्यातिशय एव हेतुर्येन वैशेषिके स्वातन्त्र्येण विदुषां निबन्धा नाभूवन्, स्वातन्त्र्येण वैशेषिकग्रन्थसम्पत्तिश्चाल्पीयसी दृश्यत इति। अपरमिदमपि कारणं यदाध्यात्मप्रधाना भारतीयमनीषिणोऽध्यात्मतत्त्वनिरूपणोपयोगिप्रमाणप्रधानं न्यायशास्त्रमेव भृशमाश्रितवन्तो भौतिकपदार्थनिरूपणप्रधानाद् वैशेषिकदर्शनाच्चोदासीनभावमभजन्त। यद्यपि अस्यापि शास्त्रस्य मुख्यं प्रयोजनं निःश्रेयससाधनमेवास्ति। अत एव '**अथातो धर्मं व्याख्यास्यामः**[3]', '**यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः**[4]', '**तद्वचनादाम्नायस्य प्रामाण्यम्**[5]', '**धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्**[6]' इति सूत्रैः शास्त्रारम्भं चकार सूत्रकारः। अत्रायमभिप्रायो यत् पदार्थतत्त्वज्ञानमन्तरा तद्विवेकेनात्मतत्त्वज्ञानमपि मोक्षसाधनभूतं सर्वथा दुस्सम्पादमिति। किन्तु कालान्तरेऽस्मादेवौदासीन्यात् पाश्चात्त्या भौतिकविज्ञानेऽस्मत्तोऽग्रेसराः सञ्जाता वयञ्च तेषां पश्चाद्गामिनोऽद्याभूमेति।

तथाप्यस्माकं पदार्थविद्याया बहुदूरपर्यन्तकृतपदार्थतत्त्वविवेचनायास्ते सर्वथाऽनृणिनो न सन्ति पाश्चात्त्यवैज्ञानिका इत्यत्र नास्ति कश्चित् सन्देहः। अधुनातनसाधनानां तदानीमभावेऽपि

---

१. न्यायमञ्जरी–१।१।२९। २. वै० सू० ५।२।२८।
३. वै० सू० १।१।१। ४. तदेव–१।१।२। ५. तदेव–१।१।३। ६. तदेव–१।१।४।

योगविभूत्यैव महर्षिः कणादः समस्तपदार्थान् तद्धर्मांश्च साक्षात्कृतवानिति भारतीयानां दृढो विश्वासः। यथा चाहस्म भाष्यकारः—'योगाचारविभूत्या यस्तोषयित्वा महेश्वरम्। चक्रे वैशेषिकं शास्त्रम्....'इति।

**वैशेषिकाभिमतपदार्थाः**

शास्त्रेऽस्मिन् सर्वेऽपि जगत्पदार्था भेदतो धर्मतश्च निरूपिता वर्तन्ते। किन्त्वतिविस्तृतानामुच्चावचानां विविधपदार्थानां कात्स्न्र्येन ज्ञानं सर्वथा दुर्लभमिति वर्गीकृत्य ते प्रदर्शिताः। यथा—संसारस्य सर्वे भावपदार्था द्रव्यगुणकर्मसामान्यविशेषसमवायात्मकेषु वर्गेषु विभक्ताः सन्ति। अभावोऽपि सप्तमपदार्थः कणादमुनेरभिमतोऽस्ति। यद्यपि चतुर्थसूत्रे द्रव्यादिवदयं साक्षान्नोक्तः, प्रशस्तपादभाष्यमपि समवायनिरूपणान्तमेव सत् समाप्तिमभजत्, तथापि अभावस्य प्रतियोगिनिरूपणाधीननिरूपणतया द्रव्यादिषु निरूपितेषु स स्वयमेव निरूपितः स्यादित्याचार्याभिमतं न त्वितरदर्शनवत्तुच्छोऽभावः। अत एव विशेष्यविशेषणभावाख्यप्रत्यासत्याऽभावप्रत्यक्षं निरुरूपयिषुः सूत्रकारो नवमाध्यायस्य प्रथमाह्निके—**'क्रियागुणव्यपदेशाभावात् प्रागसत्**[1]**'** इति सूत्रेण प्रागभावं **'सदसत्**[2]**'** इति सूत्रेण ध्वंसं **'सच्चासत्**[3]**'** इति सूत्रेणान्योन्याभावं **'यच्चान्यदसतस्तदसत्**[4]**'** इति सूत्रेण चात्यन्ताभावं न्यरूपयत्। अत एव च भाष्यकारोऽपि **'अभावोऽप्यनुमानमेव'** इत्यादिवाक्येनाभावात्मकप्रमेयस्यानुमानप्रमाणगम्यत्वमाह। यद्यभावपदार्थो न स्यात्, घटाभाववद्भूतलम्, घटो भविष्यति, घटो ध्वस्तः, घटो न पट इत्याद्यनुभवाः कथमुपपद्येरन्। पदार्थानां परस्परं भेदज्ञानं (विवेकज्ञानं) जडपदार्थेभ्यश्चात्मनो विवेकज्ञानञ्च कथन्तरां जायेताम्?

**वैशेषिक इति संज्ञायाः कारणम्**

अस्य दर्शनस्य वैशेषिक इति संज्ञाविधानस्य कारणं विशेषपदार्थनिरूपणमेवेति। पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसाधिगम इति सूत्रकाराणामाघोषणमस्ति। सर्वे हि पदार्थाः सामान्यात्मका विशेषात्मकाश्च भवन्ति, अतस्तेषामुभयात्मकतया ज्ञानमेव तत्त्वज्ञानं भवितुमर्हति; किन्तु सामान्यात्मकतया ज्ञानं तत्त्वज्ञानं भवदपि साक्षान्मोक्षहेतुभूतविवेकज्ञानात्मकं भवितुं नार्हति। विवेकज्ञानात्मकन्तु तदेव ज्ञानं भविष्यति, यद् विशेषात्मकतया ज्ञानं स्यात्।

मानवानां सामान्याभिमुख्यां ज्ञानप्रवृत्तौ सत्यामात्मा पृथिव्यादिवद् द्रव्यमिति वा इतरभावपदार्थवद् भाव इति वा ज्ञायेत। तथाविधं ज्ञानञ्च पांसुलपादानां हालिकानामपि समस्त्येवेति तेऽपि शुकवामदेवादिवन्मुक्ता मन्येरन्, व्यर्थ एव च शास्त्राणां मोक्षोपदेशायासः सम्पद्येत। तस्माद् विशेषात्मकतयाऽऽत्मतत्त्वज्ञानमेव विवेकज्ञानं भवितुमर्हतीति तदर्थमेव शास्त्राणां समेषां समुद्योगः। तत्र च वैशेषिकाणां विशेषपदार्थज्ञानं महदुपकरोतीति विशेषाख्यपदार्थनिरूपणवैशेष्यादेव वस्तुतोऽस्य दर्शनस्य वैशेषिक इत्यन्वर्था संज्ञा समजायत।

---

१. वै० सू० ९।१।१। २. तदेव–९।१।२।
३. तदेव–९।१।४। ४. तदेव–९।१।५।

**द्वित्वाद्युत्पत्तौ पाकजरूपाद्युत्पत्तौ विभागजविभागे चास्य शास्त्रस्य वैशिष्ट्यम्**

एवमन्यान्यपि कानिचिदस्य दर्शनस्य वैशिष्टयानि सन्ति । तथा चाभाणकः—"द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे । यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः" ॥ इति । अर्थात् उक्तस्थलत्रये हि वैशेषिकाणां विशेषाभिनिवेश इति । तत्र द्वित्वविषये मीमांसका मन्यन्ते—यदा घटद्वयमेकत्र मिथः सन्निधानं प्राप्नोति, तदानीमेव तत्र द्वित्वसंख्योत्पद्यते । पश्चादिन्द्रियसंनिकर्षानन्तरम् "अयमेकोऽयमेकः" इत्यपेक्षाबुद्धया द्वित्वं ज्ञायते । तथा चापेक्षा-बुद्धिर्द्वित्वस्य व्यञ्जिका न तूत्पादिका । यदा तु तद्घटद्वयं मिथो वियुक्तं भवति, तदा द्वित्वस्य नाश इति ।

वैशेषिकास्तु तेषामुक्तिमिमामनङ्गीकुर्वाणा इन्द्रियसन्निकर्षाभावेऽपि घटद्वयसन्निधान-मात्राद् उत्पद्यमानाया अज्ञाताया द्वित्वादिसंख्याया अभ्युपगमो निरर्थक इति मन्वाना अपेक्षा-बुद्धिरेव द्वित्वादिसंख्यानामुत्पादिकेति वदन्ति ।

एवं पाकजप्रक्रियामाश्रित्य न्यायदर्शनादपि वैशेषिकस्य वैशिष्टयं वरीवर्ति । पिठर-पाकवादिनो नैयायिका आपाके निक्षिप्तमामघटं सम्पूर्णमेव पच्यमानं मन्यन्ते; किन्तु पिलुपाक-वादिनो वैशेषिका मन्यन्ते—परमाणव एव स्वतन्त्राः पच्यन्ते, तत्रैव पूर्वरूपनाशाग्रिमरूपाद्युत्पत्ती, ततश्च कारणगुणप्रक्रमेण पुनरवयविनि रूपाद्युत्पद्यत इति ।

एवं नैयायिका विभागजविभागं न मन्यन्ते । वैशेषिकास्तु विभागाज्जायमानं विभागान्तरं मन्यन्त इति । तत्र वैशेषिकनये विभागस्त्रिविधः—अन्यतरकर्मजः, उभयकर्मजो विभागजश्चेति। तत्र विभागजविभागो यथा—कपालद्वयस्य परस्परं विभागात् कपालाकाशयोरपि विभागो जायते । यथा वाऽङ्गुलितरुविभागाद्धस्ततरुविभागोऽपि जायत इति ।

एवं सूक्ष्मेक्षिकया वेगाख्यसंस्कारेऽपि वैशेषिकमतं न्यायमताद् भिद्यमानं दृश्यते । तथा हि युगपत् प्रक्षिप्तयोर्नाराचयोरयुगपत् पातः कर्मजनकवेगस्य तीव्रत्वमन्दत्वे विना न स्यात् । किञ्चित् कर्माल्पदेशावच्छेदेनेति शरपातस्यायौगपद्यमुपपद्यते । तादृशश्च कर्मवैचित्र्यं वेगाधीनमिति वेगगते एव तीव्रत्वमन्दत्वे स्तः । स चायं वेग एक एव शरादौ यावत्पतनमनुवर्तते इति वैशेषिक-सिद्धान्तः । नैयायिकानान्तु मतमस्ति यत् सन्तानरूपेणाप्युत्पद्यते कर्मणा वेगः, पुनर्वेगेन कर्मेति । एतेषां विस्तरस्तु तत्तद्ग्रन्थेभ्य एवानुसन्धेय इति नेह प्रतन्यते ।

**शब्दस्य प्रमाणान्तरत्वाभावः**

एवं नवमाध्यायस्य प्रथमाह्निके प्रत्यक्षं निरूप्य द्विपीयेऽनुमाननिरूपणावसरे 'एतेन शाब्दं व्याख्यातम्' इति सूत्रेण शाब्दज्ञानस्यापि लैङ्गिकज्ञान एवान्तर्भावमुपपाद्य नैयायिकाभिमतं शब्दस्य प्रमाणान्तरत्वं महर्षिकणादेन निराकृतमित्ययमप्यत्र विशेषः । तदुक्तं भाष्ये—'शब्दादी-नामप्यनुमान एवान्तर्भावः समानविधित्वात् । यथा प्रसिद्धसमयस्यासंदिग्धलिङ्गदर्शनप्रसिध्य-नुस्मरणाभ्यामतीन्द्रियेऽर्थे भवत्यनुमानमेवं शब्दादिभ्योऽपीति । अनुमानप्रकारश्च—एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकांक्षादिमत्त्वे सति तत्स्मारकत्वाद् गामभ्याजेति पदकदम्बवद् इति । अनुमानसमानविधित्वञ्च शब्दस्य निपुणमुपपादितमुदयनाचार्येण किरणावल्यामिति नात्र प्रतन्यते ।

न चानेन प्रसङ्गेन वेदस्यापि शब्दसमूहस्याप्रामाण्यमापादितं सूत्रभाष्याभ्यामिति शङ्कनीयम्, 'तद्वचनादाम्नायस्य प्रामाण्यम्[1]' इति सूत्रतद्भाष्याभ्यां तत्प्रामाण्यस्य स्वातन्त्र्येण साधितत्वात् । अत्रेदं तात्पर्यम्—शब्दस्य प्रमाणान्तरत्वमात्रं निराक्रियते वैशेषिकैर्न तु प्रमाणत्वमपि ।

**आद्य चतुःसूत्र्यां परस्परविरोधपरिहारः**

वैशेषिकदर्शनोपरि कृतं प्रशस्तपादभाष्यं वैशेषिकशास्त्राभिप्रायवर्णनमात्रमस्ति, नत्वक्षरशः सूत्राणि व्याख्यातानि भाष्ये । उदयनाचार्यकृता किरणावल्यपि भाष्यमेव व्याचष्टे । अतोऽत्र सूत्राण्यनुसृत्य कञ्चिद् विचारमुपस्थापयामः ।

तत्र शास्त्रारम्भे **'अथातो धर्मं व्याख्यास्यामः'** इति प्रतिज्ञासूत्रम् । अस्मिन् सूत्रे धर्मपदेन सप्रयोजनं यदुद्दिष्टं भवेत्, तदेव **'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः'** इति सूत्रेण कृतलक्षणं भवेत्, तस्यैव प्रतिपादनेन **'तद्वचनादाम्नायस्य प्रामाण्यम्'** इति सूत्रेण वेदप्रामाण्यं संसाधितं भवेत् । अतोऽत्र स्वरसतो जिज्ञासेयमुदेति यदेषु सूत्रेषु धर्मपदेन किं विवक्षितम् ? किञ्च **'धर्मविशेषप्रसूतात्'** इति चतुर्थसूत्रे धर्मपदेन विवक्षितम् ? कथञ्च द्वितीयसूत्रे धर्मस्य निःश्रेयसमिति पूर्वविरुद्धं प्रतिपादितम् इति ?

**अत्रोच्यते**—प्रशस्तपादभाष्यारम्भमङ्गलश्लोके **'पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदयः'** इति प्रतिज्ञावचनस्य **'अथातो धर्मं व्याख्यास्यामः'** इति सौत्रप्रतिज्ञावचनच्छायारूपतया यो धर्मो भाष्ये गृहीतः, स एव सूत्राभिप्रेत इति निश्चेतुं शक्यते । तथा च भाष्ये पदार्थानां द्रव्यादीनां ये धर्माः साधर्म्यवैधर्म्यरूपास्त एव सूत्रेऽपि प्रवचनार्थं प्रतिज्ञाताः सूत्रकारेणेति मन्तव्यम् । एवं सति 'अथातो धर्मं व्याख्यास्यामः' इत्यस्यायमर्थः—पदार्थानां साधर्म्यवैधर्म्यरूपं धर्मं प्रतिपादयिष्याम इति । अयमेवार्थः किरणावल्या अप्यनुमतः ।

द्वितीये **'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः'** इति सूत्रे पदार्थानां साधर्म्यवैधर्म्यरूपो धर्मो न गृहीतः; किन्तु ईश्वरोपदेशरूपा ये वेदास्तत्प्रतिपादितो यो धर्मः, स एवात्र सूत्रे गृहीतः । स च धर्मस्तत्त्वज्ञानोत्पादनद्वारा निःश्रेयसहेतुर्न साक्षात् । अत एव **"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"** इति सूत्रेऽभ्युदयद्वारकं निःश्रेयसमभ्युदयनिःश्रेयसमिति मध्यमपदलोपिसमासः । अभ्युदयश्च तत्त्वज्ञानम् । तथा चायं द्वितीयसूत्रार्थः—यतो (निवृत्तिलक्षणाद् धर्मात्) पदार्थतत्त्वज्ञानद्वारा निःश्रेयसं सिद्ध्यति, स एव धर्म इति ।

अत्रायं निष्कर्षोऽदर्शि श्रीमदुदयनाचार्येण किरणावल्याम्—काणादशास्त्रेण सोपपत्तिकं पदार्थान् विविच्य श्रुतीस्मृतीतिहासपुराणोपदिष्टयोगविधिना दीर्घकालादनैरन्तर्यसेवितान्निवृत्तिलक्षणाद्धर्मादेव तत्त्वज्ञानमुत्पद्यते, यतोऽपवृज्यते (अपवर्गं प्राप्नोति) । न ह्युपपत्त्या विना विवेकः, न च विवेचनाद् विना उपदेशमात्रेणाश्रद्धामलक्षालनम्, न च तेन विना शङ्काशूकस्य त्यागः, न च तमन्तरेण निवर्तको धर्मः, न तेन विना दृढभूमिविभ्रमसमुन्मूलनसमर्थस्तत्त्वसाक्षात्कार इति ।

**'तद्वचनादाम्नायस्य प्रामाण्यम्'** इति तृतीयसूत्रेऽपि तत्पदेन सन्निहितस्य धर्मस्यैव ग्रहणाद् धर्मप्रतिपादनादाम्नायस्य प्रामाण्यमिति सूत्रार्थः सम्पद्यते । अथवा तदितिपदमनुपक्रान्तमपि प्रसिद्धतयेश्वरं परामृशति । यथा **'तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः[1]'** इति न्यायसूत्रे

---

१. वै० सू०—१।१।३ ।

तच्छब्देनानुपक्रान्तोऽपि वेदः परामृश्यते, तद्वत् । तथा च सूत्रार्थः—ईश्वरेण प्रणयनाद् वेदस्य प्रामाण्यमिति । अस्मिन् तृतीयसूत्रे वेदप्रामाण्यव्यवस्थापनप्रयासेनापि विज्ञायते यत् द्वितीयसूत्रे धर्मपदेन वेदप्रतिपादित एव धर्मोऽभिप्रेतः सूत्रकारस्येति ।

अत एव च 'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्' इति चतुर्थसूत्रेऽपि धर्मविशेषपदेन वेदोक्त एव धर्मो गृहीत इति मन्तव्यम् । तथा च द्वितीयतृतीयसूत्रैकवाक्यतापन्नस्य चतुर्थसूत्रस्यायमर्थः—ईश्वरोक्तत्वेन प्रमाणभूतवेदप्रतिपादितस्य रागादिनिवृत्तिलक्षणधर्मस्य सविधिसेवनाद् द्रव्यादिपदार्थानां साधर्म्य-वैधर्म्यात्मकतत्त्वज्ञानमुत्पद्यते, ततश्चानाद्यविद्योन्मूलनद्वाराऽऽत्मतत्त्वसाक्षात्कारान् निःश्रेयसं भवतीति । अयमाशयः—धर्मो हि न साक्षादभ्युदयनिःश्रेयसयोरुभयोः कारणम्; किन्तु अभ्युदयं प्रति साक्षात्कारणम्, निःश्रेयसं प्रति च परम्परया कारणमिति सिद्धान्तः । तदुक्तं भाष्ये—'तच्चेश्वरनोदनाभिव्यक्ताद्धर्मादिवेति । तच्चेति पदं पूर्वभाष्योक्ततत्त्वज्ञानार्थकम् ।

किन्त्विदानीमपीयमाशङ्काऽवशिष्यत एव यत् कथमादिमे प्रतिज्ञासूत्रे धर्मपदेन साधर्म्य-वैधर्म्यरूपो धर्मो गृहीतः ? परत्र द्वितीयतृतीयचतुर्थसूत्रेषु च वेदोक्तो धर्मो (निवृत्तिलक्षणो) गृह्यत इति ? यतो हि प्रतिज्ञातमेव लक्ष्यते, तदेव च परीक्ष्यत इत्यस्ति शास्त्रकाराणां सरणिरिति ।

**अत्रायं समाधिः**—यद्यपि चतुर्णां सूत्राणां मिथः संवादसम्पादनाय प्रथमसूत्रेऽपि धर्म-पदेन वेदोक्तो धर्म एव ग्रहीतुं शक्यते । न चैवं प्रतिज्ञाविरोधः पदार्थधर्माणां साधर्म्यवैधर्म्याणा-मिह शास्त्रे प्रतिपादनादिति वाच्यम्, षष्ठाध्यायस्य प्रथमद्वितीयपादयोर्वेदोक्तधर्माणां प्रतिपादनेन सूत्रकाराणां स्वप्रतिज्ञानुरोधस्यापि दर्शनात् । तथापि नेदं शास्त्रं धर्मशास्त्रम् येन वेदोक्तधर्म-व्याख्यानप्रतिज्ञानं सङ्गतं स्यात्, किन्तु पदार्थशास्त्रमिदम् । अतः पदार्थधर्मा एव साधर्म्यवैधर्म्य-रूपा व्याख्येयत्वेनेह प्रतिज्ञातव्या महर्षिणेति समुचितम् । द्वितीयतृतीयचतुर्थसूत्रेषु वेदतदुपदिष्ट-धर्मयोश्चर्चा तु अस्यापि शास्त्रस्य तत्त्वज्ञानद्वारा निःश्रेयसप्राप्तिरेव मुख्यं प्रयोजनमिति जिज्ञासु-प्रवृत्त्युपयोगिप्रयोजनरूपानुबन्धदिदर्शयिषयैव कृता परमकारुणिकेन मुनिनेति न कश्चिद् विरोधः । अतोऽत्र शास्त्रे प्राधान्येन पदार्था एव साधर्म्यवैधर्म्याभ्यां निरूपिताः । षष्ठाध्याये धर्माधर्म-निरूपणन्तु संसारमूलकारणभूतात्मगुणवर्णनप्रसङ्गेनैवेति विभावयामः ।

**सुवर्णस्य तैजसत्वम्**

दर्शनेऽस्मिन् द्रव्यादीनां यथास्थानं क्रियमाणं सूक्ष्मविवेचनं कणादमुनेः साक्षात्कृतसर्व-वस्तुत्वं योगविभूतिमत्त्वं च गमयति । गुणा यद्यपि सप्तदशैव कण्ठत उक्ताः, तथापि चकाराद् अवशिष्टानपि गुरुत्व-द्रवत्व-स्नेह-संस्कार-धर्माधर्मशब्दान् समुच्चिनोति सूत्रकारो, भाष्ये तेषामपि नामोल्लेखात् । पुनश्च केषां पदार्थानां कैः पदार्थैः सह कीदृशं साधर्म्यं वैधर्म्यं वेति यथाप्रतिज्ञं निपुणमुपावर्णि महर्षिणा ।

सुवर्णस्य तैजसत्वं यद्यपि काणादसूत्रे नोक्तम्; तथापि तैजसविषयाणां चातुर्विध्यं प्रति-पादयता भाष्यकारेण सुवर्णस्याकरजतेजसि गणना कृता । तथोक्तम्—'आकरजञ्च सुवर्णादि' इति । सुवर्णस्य तेजोद्रव्यत्वेऽपि तत्र रसाद्युपलब्धिः पार्थिवभागोपष्टम्भाद्भवति । तदुक्तं भाष्ये—

'तत्र संयुक्तसमवायाद्रसाद्युपलब्धिरिति'। यद्यप्युष्णस्पर्शाद्यननुभवेन सुवर्णस्य तैजसत्वं न हृदयं स्पृशति, तथापि महता समारम्भेण परवर्तिनः पदार्थशास्त्रिणोऽनुमानद्वारैतत् साधयन्ति।

तथाहि—सुवर्णं तैजसम्, असति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वाद्, यन्नैवं तन्नैवम्, यथा पृथिवीति। अधुनातनविज्ञानेनापि परीक्षणीयोऽयं सुवर्णस्य तैजसत्वसिद्धान्त इति मन्ये। यतो हि—'अग्नेरपत्यं प्रथमं हिरण्यम्' इत्यागमान्यथानुपपत्तिरपि सुवर्णस्य तैजसत्वेऽनुकूलस्तर्को विराजत इति।

**अभावोऽतिरिक्तपदार्थः शक्तिसादृश्ये तु षट्पदार्थान्तर्गते**

पूर्वोत्तरमीमांसका हि अभावस्याधिकरणरूपत्वमङ्गीकृत्य तस्यातिरिक्तपदार्थत्वं निषेधन्ति। वैशेषिके तु अभावः सप्तमपदार्थ इति स्वीकृतः। युक्तयश्चात्र व्याख्याग्रन्थेभ्य एवानुसन्धेयाः। एवं मीमांसकाः शक्तिसादृश्ये पृथक् पदार्थतया वर्णयन्ति; किन्तु वैशेषिका एष्वेव षट्पदार्थेषु ते अन्तर्भावयन्ति युक्तिराशिभिरिति नेह तत्प्रसङ्गो विशद्यते।

**तमसोऽतिरिक्तद्रव्यत्वखण्डनम्**

इतरे दार्शनिका अन्धकारमतिरिक्तं दशमद्रव्यमामनन्ति। वैशेषिकाणान्तु तेजोऽभावरूपं तम इति मतमतीव रञ्जयति विद्वच्चेतांसि। तदुक्तम् महर्षिणा—'द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तम' इति। अयमर्थः—द्रव्यनिष्पत्तिस्तावत् स्पर्शवद्द्रव्याधीना, न च तमसि कश्चित् स्पर्शोऽनुभूयते। न च तत्रानुद्भूत एव स्पर्शः, उद्भूतरूपवत उद्भूतस्पर्शवत्त्वनियमात्। न च पृथिव्यामेवायं नियमः, तमस्तु ततो भिन्नं दशमं द्रव्यमिति वाच्यम्, द्रव्यान्तरत्वे नीलरूपानधिकरणत्वप्रसङ्गात्। नीलरूपस्य गुरुत्वव्याप्तत्वेन रसगन्धव्याप्तत्वेन च नीलरूपवति तमसि रसगन्धगुरुत्वानां प्रतीतिप्रसङ्गात्। तस्मात्तमो न द्रव्यम्, किन्तु तेजोऽभाव एवेति वैशेषिकमतमेव चारु।

**पृथिवीजलयोरेव गुरुत्वं न तु वायावपि**

'गुरुत्वं जलभूम्योः पतनकर्मकारणम्' इति भाष्यानुसारं गुरुणी द्वे रसवतीति वचनानुसारञ्च पृथिवीजलयोरेव गुरुत्वं भवतीति वैशेषिकमतम्। आधुनिकास्तु वैज्ञानिका वायावपि गुरुत्वं प्रयोगेण साधयन्ति; परन्तु वायावनुभूयमानं गुरुत्वं जलीयानां पार्थिवानां वा परमाणूनां तत्रानुप्रवेशादेव प्रतीयत इति ते कथं न मन्यन्त इति वयं न विद्मः?

**कर्मसम्बन्धिनः सूक्ष्मविचाराः**

यद्यपि वैशेषिकदर्शनस्य सर्वोऽपि पदार्थविचारश्चमत्करोति विद्वच्चेतांसि; तथापि कर्मविचारस्त्वाधुनिकानां तकनीकीपण्डितानामप्यन्तःकरणान्यावर्जयति, तेषां भूयसा साहाय्यमप्याचरतीति नात्रास्त्यणीयानपि सन्देहावसरः।

वैशेषिकदर्शनस्य पञ्चमाध्याये कर्मणां सूक्ष्मपरीक्षा कृता वीक्ष्यते। तत्र प्रथमाह्निके प्रयत्ननिष्पाद्यकर्माणि परीक्षितानि, द्वितीये च नोदनादिनिष्पाद्यानां कर्मणां विचारः कृतो वर्तते। यथा—मुसलोद्यमननिपातनावस्थायां यथा यथा कर्म जायते, तत्सर्वं निपुणमुपापादि सूत्रकारेण। तत्र पूर्वमात्मसंयोगप्रयत्नाभ्यां हस्ते कर्म जायते, कर्मवद्धस्तसंयोगाच्च मुसले कर्म जायते; किन्तूलूखलाभिहतस्य मुसलस्याकस्माद् यदुत्पतनं जायते, तत्र वर्तमानोऽपि हस्तसंयोगो न कारणम्, अन्यथासिद्धत्वात्, अपितूलूखलाभिघात एवासमवायिकारणम्।

एवं मुसलेन सहोत्पतति हस्ते यत्कर्म, तत्रापि न पूर्ववत् प्रयत्नवदात्मसंयोगः कारणम्, किन्तूलूखलाभिघातेन मुसले जायमानो यो वेगाख्यसंस्कारः, तत्सहिताद्धस्तमुसलसंयोगादेव हस्तस्योत्पतनं भवति। अवशो हि हस्तो मुसलेन सहोत्पततीति। एवं तदानीं जायमानं सम्पूर्णे शरीरे शरीरावयवान्तरे वा कर्म वेगवन्मुसलसंयुक्तहस्तसंयोगादेव भवतीति। नूनमनयैव प्रक्रिययाऽधुनातनसंयन्त्रेषु सर्वाणि यन्त्राणि सञ्चाल्यन्तेऽभियन्त्रिभिः।

क्वचिदात्मप्रयत्नमन्तराऽपि कर्म जायते, यथा वृक्षात् फलस्य पतनं प्रयत्नाभावेऽपि गुरुत्वाद् भवति। प्रसुप्तस्य मूर्छितस्य वा जनस्य देहे यच्चलनं दृश्यते, तद्वायुकृतम्, न तु तत्रात्मप्रयत्नो हेतुः।

तस्कराभिमुखं यत्कांस्यादिगमनं भवति, यच्च चुम्बकलोहाभिमुखं सूच्यभिसर्पणं भवति, तत्र तस्कराद्यदृष्टमेव निमित्तं तथा कांस्यादिभिः सहादृष्टवत्तस्कराद्यात्मसंयोगोऽसमवायिकारणम्। एवं बाणे आद्यं कर्म नोदनादुत्तरोत्तरञ्च कर्म वेगाद्भवति। यत्तु युगपत् प्रक्षिप्तयोर्नाराचयोरेकस्य तीव्रो वेगोऽपरस्य तु मन्दः, तत्र नोदनयोस्तीव्रत्वमन्दत्वे एव निमित्तम्।

एवं भूमिष्ठानामपां यदोर्ध्वं गमनं भवति, तदैव वृष्टिर्भवति, नान्यथा। तच्चोर्ध्वगमनं कथं भवति? इत्यत्राह महर्षिः कणादः—'नाड्यो वायुसंयोगादारोहणम्[1]' (अ० ५ आ० २ सू० ५) इति, अर्थात् सूर्यरश्मय एवाप आरोहयन्ति। क्वचित् 'नाड्यवायुसंयोगादिति पाठो वर्तते। तत्रायमर्थो यद् नाडी सम्बन्धी यो वायुसंयोगस्तस्मादारोहणं जलादीनां भवतीति। अयं नाडीशब्दोऽधुनोपयुज्यमानलोहरबरादि नलिकाद्यर्थेऽपि वर्तते, यदाश्रयेण दूरदूरतरं जलादीनि प्रहीयन्तेऽभियन्तृभिः।

यच्च भूकम्पादिकं जायते, तत्र न नोदनाभिघातौ हेतुः; किन्तु तेन भूकम्पादिना येषां दुःखं सुखं वा भवति, अदृष्टवत्तदात्मसंयोगस्तत्रासमवायिकारणम्, भूः समवायिकारणमदृष्टञ्च निमित्तकारणं भवति।

एवं मूले निषिक्तानामपां वृक्षाभ्यन्तरेण विटपादिषु यदभिसर्पणं भवति, तन्न नोदनाभिघाताभ्यां भवति, न वाऽऽदित्यरश्मिभिर्भवति। यद्यादित्यरश्मयस्ता अप ऊर्ध्वं नयेयुस्तदा ता आपो मेघो भूत्वा वृष्टिहेतव एव भवेयुर्न पुनः पत्रकाण्डफलपुष्पादिवृद्धिहेतवस्स्युः। अतस्तत्रापि अदृष्टमेव हेतुः। एवमेवाग्नेरूर्ध्वगमनं वायोश्च तिर्यग्गमनमदृष्टकारितमेव। यद्येषु कानिचिद् दृष्टानि कारणानि स्युः, तर्हि तानि दर्शयितव्यान्यापतन्तीदानीन्तनैर्वैज्ञानिकैः।

**वैशेषिकदर्शनस्य सर्वोपजीव्यत्वम्**

अन्ते चेदमेव निवेदयन् निबन्धमिममुपसंहारामि यन्महर्षिकणादेन वैशेषिकदर्शनं प्रणीय महदुपकृतं संसारस्याध्यात्मिकानां वैज्ञानिकजगतश्चेति नात्र सन्देहलेशोऽपि। यदिदं शास्त्रं नाभविष्यत्, तदा सांख्यवेदान्तादिदर्शनशास्त्राणि नाञ्जस्येन विवेकज्ञानमुत्पादयितुं प्राभविष्यन्। इदमेव दर्शनं भौतिकपदार्थरहस्यं तथोद्घाट्य प्रदर्शयति, यथानायासमेव जडतत्त्वेभ्यो विवेकेनात्मतत्त्वं साक्षात्क्रियते, निःश्रेयसं चाधिगम्यत इति। वैज्ञानिकानान्तु परमोपजीव्यभूतमिदं दर्शनम्, यत्सोपानमारुह्य त एतावतीमभ्युन्नतिकोटिमाटीकन्त।

---

१. वै० सू० ५।५।

उपसंहारः

एतत्समानतन्त्रभूतं गौतमीयं न्यायदर्शनं प्रमाणशास्त्रत्वेन विद्वत्सु व्यपदिश्यमानमास्ते, इदञ्च काणादशास्त्रं प्रमेयशास्त्रत्वेनेत्युभे अपि शास्त्रे मिथः सङ्गत्य सर्वेषां शास्त्राणामुपकुरुतः; तथापि कणादस्यैव प्राधान्येनोपकारत्वमुररीकृत्य **'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्'** इत्यैकमत्येन विदुषां हार्दोद्गारः

अतो वर्तमाने वैज्ञानिके युगे पाणिनीयशास्त्रवत् काणादशास्त्रमप्यनिवार्याध्ययनाध्यापन-विषयतया स्वीकाराय प्रयतनीयं प्राच्यविद्योत्कर्षकामैः। एवं सूत्रकारेण येषु येषु पदार्थेष्वदृष्ट-कारितत्वमदृष्टप्रयोजनकत्वं वा प्रतिपादितम्, ते ते पदार्था नवीनदृष्ट्या परीक्षणीया भारतीयवैज्ञा-निकैरिति निवेदयितुमिच्छामः। सौभाग्यात् स्वतन्त्रं भारतमद्य विज्ञानक्षेत्रेऽपि अत्युन्नतदेशान्तर-वदेव प्रगतिपथमनिशं सासरीतीति महदानन्दविषय इति शम्।



# वयाकरणानां शब्दाद्वैतम्

पं० केदारनाथ ओझा, सम्मानितप्राध्यापकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

तत्र शक्त्याश्रयनिरूपणप्रसङ्गेन प्रलय-सृष्टि-मायापुरुषप्रादुर्भावपरमेश्वरसिसृक्षामायावृत्ति-वर्णनानन्तरं ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते, इदमेव शक्तितत्त्वम्, तस्य बिन्दोरचिदंशो बीजम्, चिदचिन्मिश्रोंऽशो नादः, चिदंशो बिन्दुरिति, अचिच्छब्देन शब्दार्थोभयसंस्काररूपाऽविद्योच्यते। तस्माद्बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते, एतज्जगदुपादानमेव रवपराऽऽदिशब्दैर्व्यवह्रियते। तद्यथा—

> बिन्दोस्तस्माद्भिद्यमानाद् रवोऽव्यक्तात्मकोऽभवत्।
> स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते[1]॥ इति।

एतत्सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेनाभिव्यज्यते। ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपवनसंस्कारः। तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठया निष्पन्दं परा वाग् इत्युच्यते। तदुक्तं हरिणा—

> अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
> विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[2]॥ इति।

एतावता शब्दब्रह्मस्वरूपवर्णनं विहितम्। अस्यैव नाम परा, रवः, नाद इत्युक्तम्। नादस्य ज्ञानप्रधानता स्फुटमुक्ता। मायोपाधिकं ब्रह्मचैतन्यमीश्वरः, अव्यक्तबिन्दूपाधिकं ब्रह्मचैतन्यं हिरण्यगर्भप्रभृतिनामान्तरम्। नादपरावागुपाधिकं ब्रह्मचैतन्यं शब्दब्रह्मेति निष्कर्षः प्रतिभाति। तच्च स्वरूपप्रतिष्ठं निष्पन्दमिति मूले वर्णितम्। ईश्वरेऽपि उपधेयांशे चैतन्ये क्रिया न भवति। मायावृत्तिरूपाऽध्यस्ता परमेश्वरस्य सर्जनक्रिया। तथैव शब्दब्रह्मण्यपि चैतन्यांशे न क्रिया, किन्तु मूलाधारस्थेन संस्कृतेन पवनेन संस्कृते नादांशाचिदंशे परिणामक्रिया जायते। तया चाध्यस्तया सस्पन्दं शब्दब्रह्म सृजतीति व्यवहारः।

नादस्योपाधेः सादित्वे परिणामित्वेऽपि उपधेयचैतन्यांशमादाय वाक्यपदीयम् **'अनादिनिधनम् अक्षरम्'** इत्यादिविशेषणं सङ्गमनीयम्। मायां प्रवाहरूपेणानादिं मन्यमानः प्रादुरभावयद् नोदपादयत्। प्रादुर्भावप्रयोजकः प्राणिनां कर्मणां परिपाककालः। न त्वीश्वरस्य ब्रह्मणो वा सिसृक्षा, अत एवाबुद्धिपूर्विकेति वर्णितम्, अव्यक्तादेव सृष्टेरारम्भः।

**'एकोऽहं बहु स्यां प्रजायेय[3]'** इति श्रुतिवर्णिता सिसृक्षाऽपि न साक्षात्परमेश्वरे, अपि तु अध्यस्ता मायावृत्तिः। तथा च वेदान्तरीत्याऽत्रापि दर्शने कार्याणामुपादानात्मकत्वेऽपि उपादानस्य

---

१. वा० प० पृ० । २. वा० प० १।१। ३. बृ० उ० ४।४।२२।

कार्यात्मकत्वाभावेन शब्दब्रह्मणो जायमानाः शब्दार्थौ अन्तःकरणद्वारा ज्ञानानि च कार्यात्मकाः शब्दात्मकाः सुखेन भवन्तु; परं प्राग्विद्यमाना ब्रह्मेश्वरमायाऽव्यक्तपदार्थे न शब्दब्रह्मोपादानकाः, न शब्दात्मकाः शब्दत्वावच्छिन्नप्रतियोगिताकस्य शब्दो नेति भेदस्य ब्रह्मप्रभृतिषु जागरूकत्वात् कथं तादृशभेदाभावरूपं शब्दाद्वैतं प्रतितिष्ठतीति प्रश्नः ?

तदुत्तरमपि ग्रन्थे वर्णितं विशेषजिज्ञासुभिर्ग्रन्थाध्ययनेन लभ्यम्, अत्र सूचनामात्रं पर्याप्तम्, न ग्रन्थोद्धरणेन लेखवृद्धि रोचये ।

ग्रन्थे शब्दशब्दार्थज्ञानानां लौकिका बहुधा व्यवहारा उपन्यस्ताः तादृशाबाधितव्यवहाराणामन्यथाऽनुपपत्त्या शब्दतदर्थज्ञानानां परस्परम् आध्यासिकं तादात्म्यं साधितम् । एवम् अन्यविधशब्दार्थसम्बन्धानां खण्डनं विधाय वाच्यवाचकभावसम्बन्धस्य स्थापनम्, तस्य नियामकतया आध्यासिकतादात्म्यस्य साधनम् । तादृशाध्यासे सम्बन्धे तादात्म्ये च बहूनि महाभाष्य-प्रपञ्चसार-हरिकारिकाप्रभृतीनि प्रमाणानि उपन्यस्तानि व्याख्यातानि च ।

तथा च तादृशं तादात्म्यं ब्रह्मेश्वरमायाऽव्यक्तेष्वपि शब्दप्रयोगाद् जागर्ति । तेन शब्दोनेति भेदः कुत्रापि वोपलभ्यत इति सर्वत्र तादृशभेदाभावरूपस्य शब्दाद्वैतस्यैव प्रतिष्ठानम् । किमुत तत्त्वमसीत्यादि महावाक्यानां लक्षणादिनाऽखण्डार्थबोधकानां शुद्धब्रह्मप्रतिपादकतया ब्रह्मणा सह आध्यासिकं तादात्म्यमिति मूले लिखितम् । तेन सर्वमुपपादितं वर्तते । व्यवहारदशायां शब्देन व्यवहाराद् ब्रह्मणः शब्दत्वमिष्यते नापद्यते, परमार्थदशायां त्वध्यासस्य निवृत्त्या तादात्म्यनिवृत्तेरनिष्टं शब्दत्वं नापद्यते । यथा च हरिकारिकायां विवर्तस्तथैवास्यापि सिद्धान्तः । अर्थपदेन तत्र ततःपरं सृष्टानां शब्दतदर्थज्ञानानां समेषां ग्रहणं बोध्यम् । तदात्म्यस्य भेदसहिष्णुतयाऽध्यासिकतया च बहवो व्यवहारानुपपत्तयः कार्यानुपपत्तयश्च समाहिताः सन्ति ।

एवमेवेतः प्राग् हरिकारिकानुसारं शब्दशब्दार्थसम्बन्धनिरूपणावसरे—

> क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम् ।
> प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत् परा ॥ इति ।

श्रुतिश्च—

> सूक्ष्मामर्थेनाविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम् ।
> तामन्ये विदुरन्यामिव च नानारूपामात्मनि सन्निविष्टाम् ॥

इत्युदाहृतं व्याख्यातञ्च ।

एतदनन्तरमपि तत्रैव महाभारत-हरिकारिका-हरिवंशप्रभृतीनि प्रमाणान्युपन्यस्तानि । तदाधारेण मम 'भाषाया अनादित्वम्' लेखः प्रकाशितः पुनरपि हिन्दीसहितः प्रकाश्यमानो वर्तते ।

तथैवाग्रे बौद्धपदार्थनिरूपणानन्तरम् ओंकारप्रणवरूपपरावाङ्निरूपणाय श्रीमद्भागवतद्वादशस्कन्धस्य कतिपयपद्यान्युद्धृतानि समन्वयश्च नीतानि । यथा—

> समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।
> हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥
> ततोऽभूत् त्रिवृदोंकारो योऽव्यक्तप्रभवः स्वराट् ।
> यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥

कोऽसौ परमात्मा ? तत्राह—

श्रृणोति य इमं स्फोटं सुप्ते कर्णे च शून्यदृक् ।
येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥
स्वधाम्नो ब्रह्मणः साक्षाद् वाचकः परमात्मनः ।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥
तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह ।
जायन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ।
ततोऽक्षरसमाम्नायमसृजद् भगवानजः ।
अन्तःस्थोष्मस्वरस्पर्शदीर्घह्रस्वादिलक्षणम् ॥
तेनासौ चतुरो वेदान् चतुर्भिर्वदनैर्विभुः ।
सव्याहृतिकान् सोङ्कारान् चातुर्होत्रविवक्षया[1] ॥ इति ।

एवं नानाशास्त्रसमन्वयसौरभमिदं दर्शनम् ।

प्रत्यभिज्ञादर्शनस्याधुना कियतांशेन भूयान् प्रचारो दृश्यते दर्शनान्तरतुलनात्मकदृष्ट्या सूक्ष्मं विश्लेषणन्तु आधुनिकानां लेखेऽवलोकितं भवति; परं साधारणसाहित्यविदां निबन्धे चर्चा आयाति, अतोऽत्र वर्णितदर्शने प्रत्यभिज्ञादर्शनाद्विभेदः सूच्यते । शाङ्करवेदान्तादिभेदस्तु मम प्रकाशिते 'शिवब्रह्माद्वैतविमर्शः' लेखे वर्णितो वर्तते । सोऽत्राप्यनुसन्धीयताम् । इदमपि शब्दाद्वैत-दर्शनम् । मायास्वरूपेऽनिर्वचनीयोत्पादे च शाङ्करदर्शनं विरुन्धदपि भिन्नं सर्वं सिद्धान्तमुपपादयति, परमार्थदशायां शुद्धप्रकाशचैतन्यं संरक्षदन्येषां मिथ्यात्वमुद्घोषयति, कथमपि अध्यासं विना शब्दत्वम् अहमुन्मेषं धर्मांश्च न सहते, तथा चास्मादपि शब्दाद्वैतदर्शनाद्विरोधः पाठकैरवधेयः ।

यथा प्रत्यभिज्ञादर्शने शिवस्य विमर्शशक्तिरभिधीयते, ज्ञानप्रक्रियायामपि विमर्शो व्यवह्रियते विशेषज्ञानरूपस्य विमर्शस्य लक्षणं प्रायो मयाऽपि नोपलब्धम्; परं तद्दर्शन-ग्रन्थानामध्ययनेन मनसि एवं संस्कारो यच्च ज्ञानप्रक्रियायां व्यापृतान्तःकरणं प्रमाण-द्वारा विषयं स्पृशति, तेन प्रमाणविषयसम्पर्केण ज्ञानं जायते, तस्य ज्ञानस्याधिकतयाऽवभासशब्देन व्यवहारः, तस्यावभासस्य ज्ञानस्य आत्मना सम्पर्क आत्मन्युपसंहाररूपो विमर्शो गीयते । यथा नैया-यिकादिनाऽनुव्यवसायादिना सम्पाद्यते सर्वस्मिन् दर्शने एतादृशं ज्ञानं परं विमर्शनामवविमर्ति । नामैव नूतनम् । ये तु अन्यदर्शनप्रक्रियाज्ञानशून्यास्तेषां कृते वस्तु नूतनम् । रसगङ्गाधरे रसास्वादज्ञानं प्रायो विमर्शरूपमेवोपपादितम् । विमर्शो नाम विना आत्मचैतन्यान्तःकरणवृत्तिभ्यां सर्वं निर्वाहितम् । शिवस्य प्रत्यभिज्ञां विमर्शं वा तदेकोऽवशिष्टः शिवः केवलोऽहम् इत्यादिदश-श्लोकी श्रीशङ्कराचार्यभगवतः सम्यङ् निर्वाहयति, परं सा न साम्प्रतं तादृशी प्रसिद्धिमुपगता ।

किञ्च विमर्शो वृत्तिरित्यपि केषुचित्पण्डितेषु प्रचलतीति प्रतिभाति । प्रायः षोडशेभ्यो वर्षेभ्यः प्रागयदाऽहं 'स्थायिभावो न रसः, विमर्शो रसः' इत्यभिनवगुप्तोक्ति कश्चिद्विवृणोतु आधु-निकप्रचलितालङ्कारिकग्रन्थरसप्रक्रियया समन्वयञ्च नयतु, इति समीहया विषयममुं पत्रिका-

१. श्रीमद्भागवतम्—१२।६।३७–४७ ।

लेखेन पत्रेण परिचितेषु प्रचारयन्नासम्, तदा साम्प्रतिकपण्डितप्रकाण्डकाशीस्थश्रीरेवाप्रसाद-द्विवेदिकार्डपत्रे **'वृत्तिरेवेति प्रतिभाति'** इत्यासीदिति स्मरामि। अस्मिन् विषयेऽपि मम लेखः **'आचार्याभिनवगुप्तस्य रसस्वरूपम्'** चिरात्संस्कृतरत्नाकरे प्रकाशितः। पुनरपि हिन्दीसहितस्य प्रकाशनाय रक्षितं व॰ते। शब्दस्य प्रकाश-प्रकाशकः स्वयंज्योतिरादिशब्देन वर्णनं साधु आयाति। हरिकारिकायाम् अत्र मञ्जूषायामपि विद्यते, तथापि ब्रह्मचैतन्येन वास्तवं तादात्म्यं नार्हति, शब्दस्य श्रोत्रेन्द्रियेण ग्राह्यत्वाद् दृश्यकोटिप्रवेशात्।

परावाचोऽपि मूलाधारस्थसंस्कृतपवनसहकारेण संयतमनसा ग्रहणं वर्णितमेव। अत्रापि ग्रन्थे परमेश्वरस्य **'एकोऽहं बहु स्यां प्रजायेय'**[१] इति सिसृक्षा वर्णिता, सा मायावृत्तिरेव विमर्शाकारा अहमुल्लेखिनी, प्रत्यभिज्ञादर्शने मायासम्बन्धात् प्राग्विद्यावस्थायां सदाशिवस्वरूपे अहमुल्लेखं विरुणद्धि। शारीरकस्याध्यासभाष्यं समुद्धृत्य अध्यस्य = मिथुनीकृत्ये यस्यानन्तरम् अध्यासस्वरूपे अहमुल्लेखं प्रदर्शयति।

हरिकारिकायामपि—

> **सैषा संसारिणां संज्ञा बहिरन्तश्च विद्यते।**
> **तन्मात्रामव्यतिक्रान्तं चैतन्यं सर्वप्राणिषु**[१]॥

इति संसारिणां संज्ञा उक्ता, नेश्वराणाम्, तन्मात्राया अव्यतिक्रमः सर्वजातिषु जातेषु प्राणिषु वा उक्ता न सृष्टेः प्राक्तनेषु स्रष्टृषु। परावाच एवं संज्ञारूपेण वर्णनं सम्यक्, अनेन जीवेनात्मनानुप्रविश्य **'नामरूपे व्याकरवाणि'**[३] इत्यादि। श्रुत्यापि नामरूपयोः सहैव सृष्टिः, शब्देन आकारेण च वस्तुस्वरूपं पूर्यते इति मञ्जूषायामपि समुपपादितम्।

शब्दार्थोभयरूपायाः परावाचोऽभावे पूर्णस्य वस्तु स्वरूपस्य ज्ञानमेव न स्यात्, केवलेन आकारेण शब्देन वा ज्ञानं न वस्तुज्ञानम्, तद्भिन्नं वस्त्वविषयकञ्च ज्ञानमकिञ्चित्करम्, न पुरुषोपभोगाय कल्पते, अन्तःसंज्ञा स्वरूपपरिचय ऊहापोहादिकं कर्तव्यनिश्चयादिकञ्च। बहिःसंज्ञा बहिरवभासो विमर्शादिः प्रवृत्त्यादिश्च। सर्वप्राणिनाम् आत्मचैतन्यम् अध्यस्तां तन्मात्रामुपाधिं वा न व्यतिक्रामति, अर्थात्सर्वप्राणिनाम् आत्मचैतन्यं शब्दब्रह्मरूपम्।

एवम्—

> **वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।**
> **न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥**

शब्दार्थज्ञानरूपेण परिणमनशीलपरावाग्रूपान्तःकरणसमुत्थस्य अवबोधस्य विषयावभासस्य आसृष्टिप्रलयं स्थायिनी, ततः शाश्वती वाग्रूपता शब्दानुविद्धता तादात्म्यविशेष्यविशेषणभावापन्नवाच्यवाचकविषयिता उत्क्रामेत्, न स्यात्, तर्हि प्रकाशो विषयावभासो न प्रकाशेत्, न पूर्णविषयस्वरूपं प्रदर्शयेत्। वस्तुस्वरूपस्य शब्दस्याप्रकाशात्। हि यतः सा वाग्रूपता प्रत्यवमर्शिनी पूर्णविषयस्वरूपनिश्चयजनिका।

हरिकारिका प्राचीनतमा विस्तीर्णा विप्रकीर्णा बहुविषयपूर्णा च स्वकालिकदार्शनिकभाषया लिखिता बहुभिरादृता स्ववासनानुसारं व्याख्याता बहुषु ग्रन्थेपूपलभ्यते, ग्रन्थप्रारम्भ एव शब्दस्य श्रुतिस्मृतिप्रभृतीनाञ्च प्रामाण्योपपादनाय नैकविधः प्रयासः प्रतीयते।

---

२. वा० प० १।१२६। ३. छा० उ० ६।३।२। ४. वा० प० १।१२४।

तथापि बौद्धैः शब्दस्य प्रामाण्यखण्डनाय तदीयाः कतिपयकारिकाः संयोज्यन्ते । बहुविधाध्ययनसूचनार्थं बौद्धानां ग्रन्थानुद्धरन्तो बौद्धेतरे वैदिकाः पण्डिता अपि तैर्वञ्चिता भवन्ति, व्यापकसिद्धान्तपरिचयं विना एवं भवेदेव । एषमः ३४ वर्षीयसारस्वतसुषमायां महापण्डितस्यैकः सुन्दरो लेखो **'वाक्यार्थस्य प्रतिभारूपत्वम्'** प्रकाशितः, तत्र तत्त्वसंग्रहटीकाकारकमलशीलस्य ममोद्वेगकरं कारिकाव्याख्यानमुद्धृतम् । तत्र शब्दस्य प्रामाण्यखण्डनाय वृक्षादिशब्दानां स्वार्थैः सह साक्षात्सम्बन्धो नास्तीत्युक्तं वर्तते । शब्दप्रमाणवादिभिः शब्दार्थयोः साक्षादेव सम्बन्ध आश्रीयते । क्वचिद् बहुभिः शब्दैर्लम्बमानवाक्येन सम्बन्धस्य प्रतिपादने सम्बन्धस्य परम्परात्वं न कल्पनीयम् । तस्य क्रियाप्रतीत्यनुकूला प्रज्ञेत्यादि प्रतिपादनं शीर्षकं विरुणद्धि । कारिकायां शब्दोऽपि न तादृशः । केवलं शब्दप्रामाण्यखण्डनवासनैव तत्र प्रयोजिका । अतः परं जीर्णं शीर्णं कम्पमानकायं रुग्णं मुक्ताबिन्दुविभूषिताभ्यां नयनाभ्यां साक्षात्कारेऽप्यविश्वसन्तं मां यो हि एतादृशे संक्षिप्तेऽपि कष्टसाध्ये लेखे प्रावर्तयत्, तं संसूच्य तदुपरि समासेन स्वीयं मानसं विचारं प्रदर्श्य विस्तरेणाध्ययनाय विचाराय लेखनाय च अन्यान् समर्थान् मनीषिणोऽर्थयित्वा च लेखममुं समापयितुं समीहे ।

उत्तरप्रदेशसंस्कृत-अकादमीसंस्थाया १९७९-८० वर्षीयायां स्मरिकायां **'शब्दाद्वैतविमर्शः'** नामा लेखः प्रकाशितो वर्तते । स च संयतमनसां गभीराशयानां मितभाषितालेखकताभ्यां विश्रुतानां विश्वविद्वद्विदितवैदुष्याणां मम परिचितानां प्रत्ययपात्राणां स्वर्गीयश्रीसुब्रह्मण्य-अय्यर-महोदयानां करकमलयोः प्रायोऽन्तिमेन प्रयासेन प्राप्तकलेवरः । हरिकारिकायाः सारो दुग्धं शब्दाद्वैतदर्शनम्, दोग्धाऽपि प्रत्यभिज्ञादर्शनस्य प्रसिद्ध आचार्यः श्रीमान् अभिनवगुप्तपादाचार्यः । वागम्भृणीप्रभृतिश्रुतयस्तत्समर्थयन्ति, वाक्यपदीयस्योपलभ्यमानाः सर्वाष्टीका अनुमोदन्ते, भास्कररायप्रभृतय आचार्यग्रन्थव्याख्यातारस्तद्विकासयन्ति, जगदुपादानभूतं ब्रह्मचैतन्यम् अन्यदर्शनप्रसिद्धं तद्वाग्रूपमिति अस्य दर्शनस्य विशेषः । वाचश्चैतन्यस्य चैकरूपता समीहिता, यथाब्रह्माद्वैतं तथा शब्दाद्वैतम्, तद्दार्शनिकविचारचतुरैर्विशेषजिज्ञासुभिरवश्यमध्येयं मननीयञ्च तदध्ययनेन हतभाग्यस्य मम दुरदृष्टभोगोऽजागः ।

हरिकारिकाव्याकरणग्रन्थः । सूत्राणां वार्तिकानां महाभाष्यस्य च तात्पर्यं वैयवहारिकभाषाविज्ञानदिशा विशदयति भाष्यादन्तरं सर्वैर्व्याख्यातृभिः कैयटादिभिः प्रायः सर्वत्र हरिकारिका समुद्ध्रियते । तादृशेषु नैकशास्त्रप्रसिद्धविद्वान् दार्शनिकः श्रीनागोजिभट्टमहोदयः स्वीये ग्रन्थे पदे पदे हरिकारिकां समनुगमयति । तत्किं वैयाकरणानां शब्दाद्वैतम् एभिः प्रत्यभिज्ञादर्शनवासनावासितान्तःकरणैराचार्यैः प्रदत्तमेव । अन्यादृशं वेति चिन्ता मनो नात्यजत्, यदि तादृगेव तदा नागोजिभट्टस्य तदीयसिद्धान्तमञ्जूषायाः का दशा ? याभ्यां जगदुपादानं शुद्धं ब्रह्मचैतन्यं प्रकाशैकशरीरं न कदाचिद्विकुरुते । अन्यत्सर्वमैश्वर्यादिकं मायिकम् इत्युद्घोष्यते ।

इत्थं द्विविधं शब्दाद्वैतम्—परस्परविरुद्धं हरिकारिका एकैव एकदा कथं प्रसूते, जातयोरपि अनयोः कतरद्वैयाकरणानामुपादेयम् इति नाना विधाऽपि मम चिन्ता एकमेव वैयाकरणानां शब्दाद्वैतं प्रसूते; तस्य सिद्धान्तमञ्जूषासञ्चितै रत्नैः शोभितलघुकायोऽपि लिखितः ।

एकस्या हरिकारिकायाः कुत्र परिशीलनं सम्यगिति प्रश्ने उभयोरेवेत्येवोत्तरम् । विभिन्नसहकारिसमवधानान्मार्गभेदः फलभेदश्च । **'सर्वे सर्वार्थवाचकाः'** प्रकरणवासनादिसहकृता नियन्त्रिता-नियतमर्थं प्रकाशयन्तीत्यध्यस्यां मञ्जूषायां सिद्धान्तरत्नमेकं विदितं विदुषां श्रीनागोजिभट्टस्य महाभाष्यपरिशीलनम् । व्यवहारस्य अध्यासस्य न्यायस्य दर्शनस्य च वाक्यानि संचिनोति, समन्वयान्यथानुपपत्त्या ज्ञापयति, पारम्परिकश्च ध्वननेनावबुध्यते ।

प्रपञ्चसारः शुद्धमेकं ब्रह्मचैतन्यं सदन्यच्च सर्वं मायिकं मिथ्येति प्रचारयत्येव, ब्रह्मसूत्र-भाष्यभामतीटीकाप्रटीकादीनां संयोजनं समन्वयश्चात्र लभ्यत एवं श्रुतिस्मृतिपुराणादयः उदाह्रियन्ते व्याख्यायन्त एव एषां सहचरी तु हरिकारिका मञ्जूषासञ्चितमेव सिद्धान्तरत्नं शब्दा-द्वैतं प्रसूते । प्रत्यभिज्ञादर्शनं त्वर्धनारीश्वरोपासकं रसिकं शिवविमर्शशक्त्योः कदापि विरहं न सहते, तेषां शिवः सर्वदा सर्वशक्तिसम्पन्नः, तादृशानां कृते कारिका हरिकारिका तु सर्वदा सर्वव्यवहारकारकमेव शब्दाद्वैतं करोतीति किमधिकेन ?

एतावतैव परिश्रान्तोऽतःपरं शब्दाद्वैतविमर्शस्य चतस्रः प्रतिज्ञाऽत्र प्रदर्श्य विश्राम-माश्रयिष्यामि ।

(१) यदिदं जगतो मूलकारणं ब्रह्म तच्छब्दतत्त्वमित्यादौ प्रतिज्ञायते ।

(२) इदं शब्दतत्त्वं ब्रह्मैकमभिन्नश्च । तथापि सन्त्यस्य बह्व्यः शक्तयो याभिस्तद्भिन्नमिव प्रतीयते । तस्य शक्तिभ्योऽपृथक्त्वेऽपि पृथक्त्वेन वर्तते ।

(३) ब्रह्मणोऽव्याहितभेदां कालशक्तिमुपस्थिता जन्मादयः षड्विकारा भावभेदस्य योनयो भवन्ति ।

(४) अस्यैकस्य सर्वबीजस्य ब्रह्मणोऽनुभूयमानेयं भोक्तृभोक्तव्यभोगरूपेण स्थिति-व्यवहारव्यवस्था प्रवर्तते, ब्रह्मशब्दतत्त्वमिति वेदागमसिद्धमिदं तत्त्वम् ।

प्रायः सर्वं वैयाकरणानां शब्दाद्वैते वर्णितं वर्तते । सत्यं क्रियाशक्तिप्रधानाया इत्यादि-कारिकाया वर्णितं शब्दब्रह्मशब्दार्थोभयजगन्मूलकारणम्, तदादाय सर्वाणि वेदागमवचनानि समन्वयं भजन्ते । शुद्धं प्रकाशरूपमेव मायोपाधिकमीश्वरो भवति । तथा परावागुपहितं शब्द-ब्रह्मापि ब्रह्मैव । सृष्टेः कारणं प्राणिनामुपयोगजनकं कर्म शब्दार्थोभयसंस्काररूपाऽविद्या च तानि च प्रवाहरूपेणानादीनि बीजानि भवन्ति । ब्रह्मचैतन्यस्य बीजत्वं नोच्यते, उपाध्युपधेययोर-ध्यस्ताधिष्ठानयोश्चाभेदव्यवहारः प्रसिद्ध एव । अन्यच्च यद् हरिकारिकया वर्णितं तत्तथैवात्रापि ग्रन्थे वर्तते इति शुभम् ।



# वैयाकरणमते सायुज्यम्

डॉ० महाप्रभुलालगोस्वामी
आचार्योऽध्यक्षश्च, दर्शनविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

कस्यापि शास्त्रस्याचार्यस्य प्रतिपाद्यविषयनिरूपणार्थमाचार्यस्य तात्पर्यविषयीभूतार्थ-प्रकाशनमावश्यकम्। तात्पर्यविषयीभूत एवार्थस्तद् ग्रन्थस्य प्रतिपाद्यविषयो भवति। भारतीया-चार्यसम्मतस्तात्पर्यविषयीभूतार्थनिर्णायकोपायश्च—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति।

परम्पराप्राप्तेयमुक्तिस्सकलदार्शनिकसम्मता। षड्विधेषु तात्पर्यनिर्णायकहेतुषु प्रथम उपक्रमः, उपक्रमश्च ग्रन्थस्याद्यो भागोऽवसानभागश्च उपसंहारः। उपक्रमोपसंहारादिनाद्यन्तभाग-योरेकार्थपर्यवसायित्वं लक्ष्यते। उपक्रमोपसंहारयोर्यस्मिन्नेकस्मिनेवार्थे पर्यवसानं जायते, स एवार्थस्तद्ग्रन्थस्य प्रतिपाद्यो विषयो भवति। अत एवाभियुक्तैस्स्वीकृतम्—'येन चोपक्रम्यते येन चोपसंह्रियते स एव शब्दार्थः'। गणितेऽपि प्रतिज्ञोपसंहारयोरेकार्थपर्यवसायित्वं सुस्पष्टमङ्गी-कृतम्। न्यायशास्त्रीयपरार्थानुमानप्रक्रियायां न्यायवाक्ये प्रयोगे प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयववाक्यानि स्वीकृतानि। पञ्चावयववाक्येषु प्रतिज्ञावाक्यमेवोपक्रमवाक्यम्, निगमन-वाक्यञ्चोपसंहारवाक्यम्। अत्रोभयोरेकार्थपर्यवसायित्वमावश्यकम्। उक्तं न्यायसूत्रे 'हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनम् निगमनम्'। (न्यायसू० १।१।३९) साध्यत्वेन निर्देशः प्रतिज्ञासिद्धत्वेन च निर्देशो निगमनम्। साध्यस्य सिद्ध्यर्थमेव दृष्टान्तादीनां मध्ये प्रदर्शनं भवति। तात्पर्यनिर्णाय-केषु द्वितीयोपायोऽभ्यासः, सिद्धार्थस्य पुनः पुनः कीर्त्तनम्भवति, न त्वतात्पर्यविषयीभूतस्यार्थस्य बहुधोल्लेखः सम्भाव्यते। तात्पर्यनिर्णयार्थं तृतीय उपायः अर्थवादः। स्तुतेर्निन्दाया वा बोधकं वाक्यमर्थवादो निन्दाप्रतिपादकं वाक्यं निन्दार्थवादः। स्तुत्यर्थप्रतिपादकञ्च वाक्यं प्रशंसार्थ-वादः। अभिप्रेतार्थस्यैव ग्रन्थे स्तुतिर्भवति निषेधार्थस्य च निन्दा। स्तूयमान एवार्थः विधीयमानः स एव च प्रतिपाद्योऽर्थः। इमे प्रदर्शितास्तात्पर्यविषयीभूतार्थनिर्णायका उपायाः शब्दनिष्ठाः। चतुर्थस्तात्पर्यनिर्णायकोपायोऽपूर्वताख्यः। येन वाक्येन यस्यार्थस्य प्रतिपादनं जायते, तस्यार्थस्य तद्वाक्यार्थज्ञानात्पूर्वं प्रमाणान्तरेण ज्ञातत्वम्। अज्ञातार्थज्ञापकवाक्यमेवापूर्वार्थकम्। अज्ञात-विषयांश एव तात्पर्यविषयीभूतोऽर्थः, ज्ञातज्ञापकञ्च वाक्यमनुवादमात्रम्। तात्पर्यनिर्णायकेषु पञ्चमं साधनं फलम्। फलञ्च प्रयोजनवत्त्वम्। प्रयोजनवदर्थप्रतिपादकं वाक्यमेव सफलं वाक्यम्। निष्प्रयोजनार्थप्रतिपादकञ्च वाक्यं निष्फलम्। तात्पर्यनिर्णायकेषु षष्ठ उपाय

उपपत्तिः । प्रमाणान्तरावाधितार्थप्रतिपादकं वाक्यमुपपत्तिश्च प्रमात्वसम्पादकोपाया । अज्ञाता-बाधितप्रयोजनवदर्थविषयकं ज्ञानमेव प्रमाणम् ।

एतत्तु सत्यं यच्चरमतात्पर्यविषयीभूतोऽर्थोऽवान्तरतात्पर्यविषयीभूतश्चार्थः । प्रदर्शित-षड्विधतात्पर्यविषयीभूतार्थनिर्णायकहेतूनां यस्मिन्नर्थे समन्वयस्स एव चरमपरमतात्पर्य-विषयीभूतोऽर्थः ।

शब्दतत्त्ववेत्तारो वैयाकरणाः समस्तमर्थजातं शब्दविवर्तं मन्यन्ते । वाक्यपदीयस्योपक्रम-वाक्येन भर्तृहरिः स्फुटमभिधत्ते—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः[1] ॥ इति

उपसंहारे चोक्तम्—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते[2] ॥
तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तिस्तत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते ॥ इति ।

अन्तिमे न श्लोकेन फलमपि प्रदर्शितं भवति । अग्रे च एतस्यैव समर्थनमुपपत्तिश्च प्रदर्शिता । अभ्यासोऽर्थवादश्च बहुधा तस्मिन्नेव ग्रन्थे विवेचिते ।

वाक्यपदीयस्य तृतीयकाण्डेऽप्युक्तम्—इत्थञ्चात्राद्वयनये परमार्थसत्ये सैव जातिर्महा-सत्ताख्या परब्रह्मस्वभावा तस्या एव गोत्वादिजातिभेदेन विवर्ते व्यवहार इत्याह—

सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः[3] ॥ इति

एतस्याः कारिकायाव्याख्याने हेलाराजः कथयति—'स्वसम्बन्धिभिर्भिद्यमानोपचरितभेदा गवाश्वादिषु सत्तैव महासामान्यमेव जातिर्गोत्वाश्वत्वादिका अपरसामान्यं नान्या परमार्थभिन्ना सा विद्यते । यथा गोः सत्ता गोत्वं....' तस्यामेव च गवादिभेदभिन्नायां सत्ताख्यायां जातौ सर्वे गवादय....वाचकत्वेन व्यवस्थिताः[4] । वाक्यपदीयप्रारम्भे पुण्यराजोऽपि "एकस्य तत्वादप्रच्युतस्य भेदानुकारेणासत्याविभक्तान्यरूपोपग्राहिता विवर्तः स्वप्नविपयप्रतिभासनात्" स्फुटमभिधत्ते ।

शब्दतत्त्वविदो वैयाकरणा अद्वैतवादिन इत्यत्र नास्ति दार्शनिकानां विप्रतिपत्तिः । मीमांसायां प्रभाकरः प्रथमाध्यायस्थप्रथमपादस्य पञ्चमाधिकरणे शब्दविवर्तवादस्यालोचनावसरे तत्र भवतां वैयाकरणानां विवर्तवादम् अङ्गीकृत्यैव तत्खण्डनं व्यधात् । तथा हि—'यद्यपि शब्दानां क्षणिकत्वात्स्थेम्नातदुपलब्ध्यभावान्नार्थप्रत्ययो सम्भवति, तथापि तत्स्मृत्यनुगृहीता वर्णा

---

१. वाक्य० १।१ ।
२. वाक्य० १।१३०–१३१ ।
३. वाक्य० ३।३३ ।
४. हेला० ३।३३ ।

अवगमं करिष्यन्ति । परन्तु स्मृतिः सर्वविषयैका न भवितुमर्हतीति प्रत्येकवर्णविषया स्यात्, यतः उपलब्ध्याः संस्कारः क्रियते, संस्काराच्च स्मृतिरित्युपलब्धिर्वेदकैकवर्णविषया स्यात् । संस्कारात्स्मृतिरिति स्मृतेः सर्ववर्णविषयत्वम् । नापि प्रत्येकवर्णविषयाभ्यः स्मृतिभ्यः संस्कारयौगपद्येन युगपद्भाविनीभ्योऽर्थप्रतीतिर्यतः क्रमविपर्यययाद्विपरीतसंस्कारवशात् विपरीतस्मृतिः स्यादतोऽकामेनापि शब्दविद्भिरङ्गीकृतः शब्दतत्त्वमेवार्थरूपेण विवर्तत इति पन्थाः समाश्रयणीय एव ।

**शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।**
**समारम्भस्तु भावानामनादि ब्रह्मशाश्वतम् ।।**

स च वर्णपदाभिव्यङ्ग्यः स्फोटात्मक एव विद्यत इति वर्णात्मकशब्देन सह गवादीनांमर्थानां शब्दरूपतास्वीकारोऽपि प्रत्यक्षविरोधो नापतति । इदानीमेष सन्देहः समापतति यत् श्रोत्रादिव्यापारमनपेक्ष्य विवर्तवादिनाप्यवगतिर्वक्तव्या । परं भिन्नयोरेव शब्दार्थयोराकारं समर्पयन्तीयं प्रतीतिरिति न विवर्तः सम्भवति । यदि श्रोत्रादिव्यापारमनपेक्ष्य प्रतीतिः स्यात्तदा विवर्तः सम्भवति, न चैतादृशीं स्थितिर्न विवर्त उपपन्नो भवति । "पारमार्थिकोऽभेद एव शब्दानां वर्तते, परन्तु श्रोत्राद्युपाधिभेदाद्भिन्नबुद्धिर्जायते । यथा मरकतपद्मरागाद्युपाधिभेदादेकमपि भुवि अनेकरूपमिव प्रतिभाति न तथा शब्दे, यत एकचक्षुरिन्द्रियं मुखस्य ग्राहकमिह तु भिन्नो प्रतीतिरिति न ह्येकं शब्दग्राहकं किमपि यद्वशाच्छ्रोत्राद्युपाधिकृतो भेदः स्यात्, एकस्मिन् ग्राहके सति श्रोत्रादयो भिन्ना उपाधिमात्रतयाऽवतिष्ठेरन्, तद्वशाच्च भेद इति युज्येतापि ।

आपातत एतदवगम्यते यद् एकस्य चक्षुरिन्द्रियस्य ग्राहकत्वात् एकं मुखमिति प्रत्ययो भवति, परं मुखस्यैकत्वादेकं मुखमिति प्रतीयते, न तु ग्राहकस्यैकत्वात् । सत्यम्, यदीहापि एकत्वं प्रतीयेत तदा उपाधिवशाद्भेदः स्यात्, श्रोतादय एव शब्दप्रतीतेः कारणम् । ते च भेदेनैव प्रतीतिमुत्पादयन्ति प्रतीतिभेदेऽपि एकं वस्तु इति कथनं साहसमात्रमेव । मुखस्य उपाधिषु नानावभासे सत्यपि तदेवेदं मुखमिति निश्चयः । अत्र बिम्बाकारप्रत्यभिज्ञानात्तदुपाधिनिबन्धेनाभेदः प्रत्यभिज्ञानादेकत्वमवगतम्, प्रत्यभिज्ञानात्सर्वत्र तदेवेदं मुखमिति प्रतीतेस्तत्र भेदाभेदयोः परस्परविरोधित्वेऽपि उपाधिनिबन्धनो भेद इति पारमार्थिकोऽभेद एव । एवं शब्दादावपि जातिशब्दयोः गुणशब्दयोः द्रव्यशब्दयोश्च एकत्वावगमो भवति । यथा गौरयमित्यत्र जातिशब्दयोस्तुल्यव्यपदेश एक वप्रत्यायकः शुक्लोऽयमिति रूपशब्दयोरेकत्वप्रत्ययः । सुरभि चन्दनमित्यत्र गन्धशब्दयोर्द्रव्यशब्दयोश्च तुल्यव्यपदेशादेकत्वावगम इति सर्वशब्देषु शब्दः, शब्द इत्येका बुद्धिरभिव्यञ्जकध्वनिवशाद्भेदः पूर्वोक्ततुल्यव्यवहारादभेदः श्रोत्राद्युपाधिवशेन भेद इति शब्दाभेदे नानुपपत्तिः ।

शब्दाद्वैतिनाम्मते सर्वस्य जगत एकरूपत्वाच्छ्रोत्रादीनां भेद एव नोपपद्यत इति कथं श्रोत्रभेदनिबन्धना भेदप्रतीतिरिति, विषयभेद प्रतिपत्तिनिबन्धनो भेदः, एवं सत्यन्योन्याश्रयो जायते । विषयभेदप्रतिपत्तिनिबन्धनो भेदो विषयभेदप्रतिपत्तिश्च श्रोत्रभेदनिबन्धन इतीतरेतराश्रयतापत्तिः । अविद्यामातृकेयमन्योन्याश्रयता यदि काचिदनुपपत्तिर्न स्यात्तदा विद्यैव स्यात्, अनुपपन्नार्थैवाविद्या[1] । एतस्य बृहतीग्रन्थस्य टीकाकार आचार्यशालिकनाथमिश्रः कथयति—

---

१. अविद्या मातृकेयमत एव विद्येत्युच्यते बुधैः । बृ० पृ० १४९ ।

यदि विवर्तवादे काचिदनुपपत्तिर्नस्यात्तदा विद्यैव स्याद्यत एवानुपपत्तिरत एवाविद्या । उपसंहारे च विवर्तवादिनोऽभिदधते 'तस्माद्विवर्तमेवोपपन्नतरं मन्यामहे'[1] सर्वमेतदविद्याजालम् । अर्थभेद-प्रयुक्तार्थप्रतिपादकशब्दस्यापि भेदः समुचित इति मीमांसकाशङ्कां प्रति वैयाकरणा ब्रुवन्ति श्रोत्रादिभेदोऽप्यविद्याकल्पित इति सर्वं वस्तुजातमविद्यैवेति भेदमात्रमविद्यामूलकमभेद एव परमार्थः[2] ।

विचारप्रसङ्गे मीमांसकाः कथयन्ति वेदादिसकलशास्त्राणामाविद्यकत्वे वेदादभ्युदयः कथं स्यात् ? यतोऽविद्या हि प्रत्यवायस्य कारणम् । शब्दाद्वैतवादिनां त्वत्रेदं वक्तव्यं यद् अविद्या-जनितोऽभ्युदयो मोक्षापेक्षया प्रत्यवाय एव । लौकिकप्रवृत्तिमभिलक्ष्यैव वेदोक्तकर्मफलानामभ्यु-दयत्वमिति सापेक्षिकमेतन्न पारमार्थिकमिति ।

महाभाष्ये सम्पूर्णस्य जगतः शब्दब्रह्मरूपत्वं शुद्धशब्दतत्त्वमेव च प्रपञ्चमूलम् । धातोः कर्मणः समानकर्तृकादिच्छायां वा (३।१।७) । इति सूत्रस्य व्याख्यानावसरे पतञ्जलिर्न्यूनता-पूर्तिवार्तिकमुल्लिखन् ब्रूते—**'आशङ्कायामचेतनेषूपसंख्यानम् । अश्मा लुलुठिषते, कूलं पिपतिषति । किं पुनः कारणं न सिध्यति ? एवं मन्यते चेतनावत एतद्भवतीच्छेति कूलञ्चाचेतनम्'** इति । एवं मन्यत इति माष्यांशस्य व्याख्यानावसरे नागेशेनोक्तम् 'भाष्ये एवं मन्यते चेतनावत इति वक्ष्यमाणेन अभिप्रायेण मन्यत इत्युक्तिः' इति । अचेतनन्य वस्तुन इच्छा न भवितुमर्हति, चेतनस्यैव इच्छा धर्मः । तत्र कूलञ्चाचेतनमिति तत्र पतनेच्छा न भवितुमर्हतीति प्रयोगोऽयमनुपपन्नः, परं शिष्टानामेषः प्रयोगस्तु दृश्यत एव । एतदाशङ्कासमाधानावसरे महाभाष्यकारः पतञ्जलिरभि-दधाति **'समस्तं वस्तु चेतनम्'** । न केवलं महाभाष्यकृतोक्तमपि तु कात्यायनेनापि स्पष्ट-मुद्घोषितम्—**'सर्वस्य वा चेतनावत्त्वात्'** 'अथ वा सर्वं **चेतनावत्'** । सकलस्य वस्तुनः चेतनत्व-समर्थनार्थं वेदवाक्यमपि प्रस्तौति—'शृणोत ग्रावाणः' अर्थात् 'प्रस्तराः यूयं शृणुत' एतस्य महाभाष्यवाक्यव्याख्याने कैयटः कथयति—**सर्वस्य चेति** आत्माद्वैतदर्शनेनेति भावः[3] ।

ऋषिरिति—वेदः सर्वभावानां चैतन्यं प्रतिपादयतीत्यर्थः । एतेन प्रदर्शितव्याख्यानेन सकलभाववस्तुनचैतन्यं प्रतिपादयन्त्याचार्याः[4] ।

एवमेव व्यक्तिवादेऽपि अर्थस्य नित्यत्वं प्रतिपादयन् कैयटः कथयति—'द्रव्यपक्षेऽपि सर्व-शब्दानामसत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं वाच्यम्[5]' द्रव्यस्य नित्यत्वव्याख्याने प्रदीपे उक्तम्—**'असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यम्'** इत्यर्थः[6] ।

ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्यत्वादनित्यत्वम् **'आत्मैवेदं सर्वम्'** इति श्रुतिवचनात् । अर्थाद् असत्योपाधियुक्तं ब्रह्मतत्त्वमेव द्रव्यशब्दवाच्यम्, ब्रह्मदर्शने सति गोत्वादिजातिरपि असत्त्वनिबन्धनेत्यनित्यैव । यतः परिदृश्यमानं सकलमेवात्मा अर्थादात्मरूपेण सकलस्य सत्यत्वेऽप्य-सत्योपाधिविशिष्टरूपेणासत्यमेवेत्येवात्मैवेदं सर्वमित्युपनिषद्वाक्याभिप्रायः । भर्तृहरिरपि त्र्यन्त-

---

१. बृ० पृ० १५४ ।
२. अविद्यानिबन्धनो भेदः परमार्थतस्तु अभेद इत्याशयः ।
३. बृ० पृ० ५६ ।
४. महाभा० प्र० ३।१।७ ।
५. प्र० पृ० ५६ १।१।१ ।
६. प्र० पृ० ६३ १।१।१ ।

वादिनो वेदान्तिनो वदन्ति परमार्थसत्ये वस्तुनि द्रष्टा, दृश्यं दर्शनञ्च कल्पितमेव कल्पितस्य वस्तुनोऽधिष्ठानं परमार्थवस्तु एव नान्यत्[१] ।

भट्टोजिदीक्षितः शब्दकौस्तुभे महाभाष्यव्याख्यानग्रन्थे 'गोत्वस्येव नाशब्दस्यापि व्यक्तिविशेषणत्वाविशेषात् संसर्गोऽपि तादात्म्यमेवास्तु[२], अग्रेऽपि—'उपाधिश्च परम्परासम्बद्धा जातिरेव । सा च सर्वाधिष्ठानब्रह्मस्वरूपात्मिका । तथा च शक्यांश इव शक्तांशेऽपि न्यायसाम्येनाकृत्याधिकरणरीत्या ब्रह्मतत्त्वमेव तत्तदुपहितं वाच्यं वाचकं च[३]' इति ।

एवमेव आरोपितस्यापि पारमार्थिके उपायता न विरुद्धा·······पक्षभेदेन अविद्यैव ब्रह्मैव वा स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोट इति स्थितम् । आह च—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।
समारम्भस्तु भावानामनादि ब्रह्म शाश्वतम् ॥ इति ।

तदेवं वराटिकान्वेषणाय प्रवृत्तश्चिन्तामणिं लब्धवानिति वासिष्ठरामायणोक्ताभाणकन्यायेन शब्दविचाराय प्रवृत्तिः सन् प्रसङ्गाददद्वैते औपनिषदे ब्रह्मण्यपि व्युत्पद्यतामित्यभिप्रायेण भगवान्भर्तृहरिविवर्त्तवादादिकमपि प्रसङ्गाद् व्युदपादयत्[४] ।

भट्टोजिदीक्षितविरचित वैयाकरणभूषणस्य टीकायां कौण्डभट्टः भगवतः स्फोटरूपात्सम्पूर्णस्य जगतो विवर्त्तरूपता प्रत्यपीपदत् ।

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्वं जगदेतद्विवर्तते ॥

एतस्य व्याख्याने काशिकायां हरिशास्त्रिणोक्तं जगतो विवर्ताधिष्ठानत्वरूपं सर्वजगदुपादानकारणत्वमुक्तम्, तेन सर्वोत्कृष्टतया स्तुत्यत्वमावेदितम् । जगद्धि विषयसत्ताकं भवति । अतात्विकान्यथा भावाश्रयो भवति । जगतो विशेषणं स्फोटरूपम् । स्फुटत्यस्मादिति स्फोटः, स च सिद्धान्ते ब्रह्मस्वरूपम् ।

समापतिशर्मोपाध्यायमहाशयैस्तु स्फोटरूपमित्यस्य व्याख्याने भगवतो जगतश्च विशेषणम् । आद्ये स्फुटत्यर्थो जगद्रूपो यस्मात्स स्फोट·······इत्यादि । एतेन सर्वस्य वस्तुजातस्य चैतन्यं सुस्पष्टमुद्घोषितम्[५] ।

एवमेव प्रतिवस्तु सत्यमसत्यञ्च 'सत्यांशः जातिरसत्यांश्च व्यक्तिः' एतत्समर्थने वाक्यपदीयकारिकोद्धृता कौण्डभट्टेन—

सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ।
सत्यं यत् तत्र सा जातिरसत्या व्यक्तयो मता ॥ (वा० प० ३।३२)

१. यत्र द्रष्टा च दृश्यञ्च दर्शनञ्च विकल्पितम् ।
तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदिनः ॥

२. श० कौ० पृ० ४ । ३. श० कौ० पृ० २८ ।

४. श० कौ० पृ० १० । ५. काशिका—पृ० ६–७ ।

अस्याः कारिकाया व्याख्याने कौण्डभट्टो वदति—'**व्यक्तिविशिष्टं ब्रह्मैव जातिः**'। कैयटोऽपि ब्रूते—'ब्रह्मतत्त्वमेव शब्दस्वरूपे प्रकाशमानं भवति। प्रतिभावं प्रति पदार्थं सत्यांशो जाति असत्या व्यक्तयः। तत्तद्व्यक्तिविशिष्टं ब्रह्मैव जातिरिति भावः।' पूर्वोक्तकैयटवचनेनैतस्य साम्यमेव—असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं पुण्यशब्दवाच्यमित्यर्थः। ब्रह्मतत्त्वमेव शब्दस्वरूपतया भाति इति च[1]। स्फोटरूपं यतः सर्वमित्युपक्रमोपसंहारे उक्तम्—

**इत्थं निष्कृष्यमाणं यत् शब्दसत्त्वं निरञ्जनम्।**

**ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः[2]॥** इति।

तस्य व्याख्यायां कौण्डभट्टेनोक्तम्—ब्रह्मणो नामरूपात्मकं जगद् व्याक्रियते समस्तं वस्तु नामरूपात्मकम्। नामरूपात्मिका सृष्टिरेव जगत्सृष्टिः। रूपस्य यत्तत्त्वन्तदेव नाम्नोऽपि तत्त्वम्। एतत्तत्वं ब्रह्मरूपमेव। नामरूपयोः प्रक्रियाऽविद्या कल्पिता। भर्तृहरिणाऽप्युक्तं वस्तुस्वरूपे प्रक्रियाभेदेनाविद्यैवोपवर्णिता। वस्तुमात्रमेवानादिब्रह्मणः प्रसूतम्। ब्रह्मैव सर्वात्मकपुरुषः स्वयम्प्रकाशम्। तत्प्रकाशादेवाखिलं वस्तु प्रकाशते। यतः अर्थः स्फुटति प्रकाशते वा इति एतादृशयोगलभ्यार्थेन ब्रह्मैव स्फोटशब्दवाच्यम्। नामरूपे व्याकरवाणि इति श्रुतिसिद्धा द्वे सृष्टी। अत्र रूपस्येव नाम्नोऽपि तदेव तत्त्वम्। प्रक्रियांशस्तु अविद्या विजृम्भणमात्रम्। शास्त्रेषु उक्तं च भर्तृहरिणा—

**शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।**

**समारम्भस्तु भावानामनादि ब्रह्मशाश्वतम्॥**

ब्रह्मैवेत्यनेन अत्रायं पुरुषः स्वयंज्योतिः। तमेव भान्तमनुभाति सर्वम्। तस्य भाषा सर्वमिदं विभाति इति श्रुतिप्रसिद्धम्। स्वपरप्रकाशत्वं सूचयन् स्फुटत्यर्थो यस्मादिति स्फोट इति यौगिकशब्दाभिधेयत्वं सूचयति[4]। सभापतिशर्मोपाध्यायसमर्थितं स्फोटतत्त्वं भट्टोजिदीक्षितव्याख्याने प्रदर्शितम्। शब्दकौस्तुभप्रारम्भे उक्तम्—यतः अर्थो स्फुटति असौ स्फोटः एतेन निगूढाशयप्रदर्शनेन ब्रह्मविवर्तमेव जगत् पारमार्थिकदृष्ट्या ब्रह्मात्मकमेवेति।

सायणाचार्यपरिबृंहितेन शङ्कराचार्यप्रदर्शितेन व्याख्यानेन तादात्म्यमेकत्वमभेदो वा सायुज्यशब्दार्थः। तथा च भर्तृहरिकारिकायां सायुज्यशब्दोपादानेनात्र न दोष। तथाह—

ऋक्संहिताया द्वितीयाष्टकेऽस्यवामीयसूक्तेऽध्यात्मविद्याया समालोचना विद्यते। अनुक्रमणिकायामेतस्य सूक्तस्य विषयमभिदधतोक्तम्—'अस्य द्विपञ्चाशदल्पस्तवन्त्वेतत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र प्रायेण ज्ञानमोक्षाक्षरप्रशंसा च'। अस्य वाक्यस्य व्याख्या सायणाचार्येण कृता—सूक्तस्य नामाल्पस्तवः। स्तुतिभागस्याल्पत्वादेतस्याल्पस्तवनाम्ना प्रसिद्धिः। अत्र संशयोत्थापनादिबह्वर्थप्रकाशो वर्तते। संशयोत्थापनम्, प्रश्नप्रदर्शनम्, प्रतिवाक्यप्रदर्शनम्, तत्त्वज्ञानम्, मोक्षः, अक्षरप्रशंसेति चास्मिन् प्राधान्येन वर्णितम्। ममतापुत्रः गोतमाभिधेयो बृहस्पतिसम्पातप्रयुक्त-

---

१. प्रमा० पृ० ४–५। २. वैया० का० ७३। ३. वै० भू० कारिका–७४।
४. ऋ० २ अ० म० २०।

जन्मान्धो दीर्घतमा अस्य सूक्तस्य द्रष्टा। अस्मिन्नेव सूक्ते विंशतिसंख्याकः 'द्वासुपर्णा' इत्यादि मुण्डकोपनिषदि श्वेताश्वतरोपनिषद्यपि एष मन्त्रो निर्दिष्टः।

एतन्मन्त्रव्याख्यानन्तत्तदाचार्यैः स्वसिद्धान्तसमर्थनार्थमहताऽऽडम्बरेण कृतमिति। आपातदृष्ट्या 'सयुजा' शब्ददर्शनेन च द्वैतसमर्थनमेतेन कृतमिति निश्चयो जायत इति आदौ सायणाचार्यसम्मतमेव व्याख्यानं सर्वथा पक्षपातशून्यमिति प्रदर्श्यते—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति[1]॥ इति।

मन्त्रेऽस्मिन् लौकिकपक्षिद्वयस्य दृष्टान्तेन जीवपरमात्मानौ स्तौति। लोके पक्षिद्वयं शोभनगमनयुक्तम्, समानयोगयुक्तम् समानख्यानम्, समानं वृक्षमाश्रयति। अत्र शरीरं वृक्षमेकं शरीराश्रितो जीव ईश्वरश्च पक्षिभूतौ, तयोः एको जीवाख्यः पक्षी स्वादुकर्मफलमत्ति, ईश्वरनामकः पक्षी न किमप्यत्ति। विनैव भक्षणमसौ प्रकाशमानः। एकवृक्षारूढपक्षिद्वयस्येवैकशरीराश्रितजीवेश्वरौ समानयोगसम्पन्नावत्र, योगशब्दार्थश्च सम्बन्धः। इह उभयोस्तादात्म्यमेव सम्बन्धः, परमात्मा एव जीवस्य पारमार्थिकरूपोऽत एव 'सयुजौ' शब्दस्यार्थ एकस्वरूपौ।

सम्बन्धमात्रस्य द्विष्ठत्वात् जीवेश्वररूपपक्षिद्वये भेदोऽनिवार्य एवातोऽभेदस्तादात्म्यं वानयोः कथं सम्भवति? मन्त्रोऽयं जीवेश्वरयोरौपाधिकभेदं वास्तविकञ्चाभेदमादाय प्रवृत्तो भवतीति जीवेश्वरयोः सखायावित्युक्तम् सखायावित्यस्यार्थः समानप्रकाशौ। एकस्य यादृशं ख्यानं प्रकाशो वान्यस्यापि तादृशं ख्यानम्प्रकाशो चेति समानख्यानार्थकसखायाविति शब्देनाप्युभयोर्भेद एव प्रतिभातीत्युभयोरभेदस्तादात्म्यं वा कथं सङ्गच्छते?

अत्रेदमवगन्तव्यम्—अत्र जीवेश्वरौ दृष्टान्तदार्ष्टान्तिकभावेन नोपात्तावपि तु परमेश्वरस्य यादृशं ख्यानं स्फुरणं वा तदेव जीवस्यापि स्फुरणम्। एतादृशस्फुरणस्याभेदप्रकाशनार्थमेव मन्त्रे सखायावित्युक्तमिति जीवेश्वरौ समानप्रकाशस्वभावौ।

'समानं वृक्षं परिषस्वजाते' इत्यनेनात्र आश्रयान्तराभावप्रयुक्तं जीवेश्वरयोरेकाश्रयत्वमुच्यते। तथा च "सयुजौ सखायौ" इत्युभयत्रापि एकयोगैकाख्यानरूपोऽर्थोऽत्र स्वीकृतः। वृश्च्यते भिद्यते इति वृक्षः देहः, वृक्षस्येव देहोऽपि छिद्यमान एवेति विनाशी। देहात्मकः वृक्षः उभयोरेक एव शरीरमिदं जीवस्योपभोगार्थमेवं परमेश्वरस्योपलब्ध्यर्थमर्थाद् अस्मिन् शरीरे परमेश्वर उपलभ्यमानो जायते इति शरीराश्रितः परमेश्वर उच्यते।

जीवज्ञानप्रयुक्त एवार्थान्मोहप्रयुक्त एव जीवगतः संसार इति जीवस्य परामार्थिकेश्वरत्वेऽपि जीवबुद्धिप्रयुक्तशोकसंसारदर्शनेनानुपपत्तिः। अत एव मुण्डकोपनिषदि उक्तम्—

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः[2]॥

द्वा सुपर्णेत्यादि मन्त्रान्तरमयंमन्त्रो लिखितः।

---

१. मु० उ० ३।१।१; श्वे० उ० ४।६। २. मु० उ० ३।१।२।

जीवेश्वरयोरैक्यप्रतिपादनार्थमेव मुण्डकोपनिषदि द्वितीयो मन्त्र उदलेखि। द्वितीयमन्त्रार्थश्चायम्—एकस्मिन् शरीरे पुरुषो निमग्नः सन् निगूढः सन् स्वयमीश्वरोऽपि जीवः स्वीयाज्ञानवशादात्मन्यनीशबुद्ध्या मुह्यमाने मूढस्येव शोचति। अहं कर्ता, सुखी, दुःखी इत्यवगच्छति। यदाऽयं जीवो जुष्टो नित्यतृप्तः संसारातीतमीश्वरं पश्यति, अर्थात् स्वाभिन्नरूपेण साक्षात्करोति तदा जीवो विगतशोको भवति। स्वरूपसाक्षात्कारमवाप्य विगततापत्रयो निरस्तसमस्तोपाधिः परमेश्वरस्य सार्वात्म्यं सर्वशक्तित्वादिकञ्चाप्नोति। यद्युभयोः वास्तविको भेदः स्यात्, तदा तन्महिमानं कदापि नाप्नुयात्, इत्युभयोरेकत्वमेव भेदश्चाज्ञानप्रयुक्तः। जीवस्य संसारदशायांजीवस्य लौकिकसुखानुभवदृष्ट्या जीवेश्वरयोर्भेदं परिगृह्य एतन्मन्त्रे तथोक्तम्। जीवः कर्मफलं भुनक्तीति कथनं नान्यथा सार्थक्यमाप्नुयात्। आप्तकामोऽन्यो भोगस्पृहाशून्य इत्यनश्नन्नभिचाकशीति। अवान्तरभेदमवलम्ब्य जीवेश्वरबोधकपक्षिशब्दे द्विवचनम्, जीवस्य चेश्वरभिन्नत्वम्। भेदश्चाज्ञानकृत इत्युभयोरभेद एव जीवाभिन्न ईश्वर इत्यभिचाकशीतीत्यनेन परामृष्टः। ईश्वरेऽध्यस्तं समस्तमपि ब्रह्माण्डमीश्वरोऽवलोकयति साक्षिरूपेण।

आचार्यः शङ्करो ब्रह्मसूत्रस्य प्रथमाध्यायस्य द्वितीयपादस्य द्वादशसूत्रव्याख्याने पैङ्गिकरहस्यब्राह्मणव्याख्यानदृष्टिमाश्रित्येतस्य व्याख्यानं प्रस्तौति। एतद्दृष्ट्या जीवेश्वरतत्त्वस्य प्रत्याख्यानमस्मिन् मन्त्रे वर्तते। सत्त्वमनश्नन् अन्योऽभिचाकशीति अनश्नन् अन्योऽभिपश्यति 'ज्ञः' तावेतौ सत्त्वक्षेत्रज्ञौ तदेतत्सत्त्वं येन स्वप्नं पश्यति। अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ। शङ्कराचार्यमते जीवो बुद्धिश्च एतन्मन्त्रेण प्रतिपाद्येते। सत्त्वाचेतनजडबुद्धिरेव कर्मफलं भुङ्क्ते इत्येतद्बोधनं कथमेतेन ऋङ्मन्त्रेण कृतमित्याशङ्क्योत्तरयत्याचार्यः—अचेतनसत्त्वस्य भोक्तृत्वप्रतिपादनार्थं नायं मन्त्रः प्रवर्तते, अपि तु चेतनक्षेत्रज्ञस्याभोक्तृत्वब्रह्मरूपत्वसूचनार्थमेतस्य मन्त्रस्य प्रवृत्तिः। अत एव सुखादिविक्रियाविशिष्टसत्त्वे भोक्तृत्वमारोप्यते। सत्त्वे क्षेत्रज्ञे च कर्तृत्वं भोक्तृत्वञ्चाविवेककृतंपरमार्थतो न सत्त्वे, न च क्षेत्रज्ञे कर्तृत्वं भोक्तृत्वञ्चेति। यतः सत्त्वमचेतनं क्षेत्रज्ञश्चाविकारस्तथा चैतेन मन्त्रेण जीवस्य असंसारित्वम्ब्रह्मरूपत्वञ्च प्रतिपादितमिति सायुज्यपदमभेदार्थकम्।

अद्वैतदीपिकायामपि नृसिंहाश्रमेण एतस्य मन्त्रस्य व्याख्यानं कुर्वतोक्तं यद् अनेन मन्त्रेण जीवेश्वरयोर्भेद एवावगम्यते इत्याशङ्क्योत्तरितमुक्तमन्त्रेण जीवेश्वरयोर्लोकप्रसिद्धभेदमनूद्य भेदनिषेधपूर्वकमसङ्गोदासीनशोधितत्वम्पदार्थप्रतिपादन एव तात्पर्यम्। यतो मुण्डकोपनिषदि 'ब्रह्मैवेदममृतं पुरस्तादिति वाक्येन ब्रह्मणः सर्वात्मकत्वं निर्दिश्य भोक्तृजीवेनापि ब्रह्मणोऽभेद एवेति संसूचितम्; परन्तूभयोरभिन्नत्वे ब्रह्मणोऽपि भोक्तृत्वापत्तिरित्याशङ्क्योक्तम्पैङ्गिकरहस्य ब्राह्मणे ब्रह्माभेदाभिप्रायेणैवायं मन्त्रो व्याख्यात इति जीवेश्वरयोर्भेदो न सम्भवति। बिम्बप्रतिबिम्बभावेनावस्थितो जीव ईश्वरश्चास्मिन् शरीरे अन्योऽर्थाद् बुद्धि प्रतिबिम्बतो जीवो बुद्ध्या सहाभेदाध्यवसायप्रयुक्तो बुद्धिधर्माभिमानी सन् कर्मफलं भुङ्क्ते। एवं स्वरूपभूतचैतन्येन साक्षिरूपेण सकलं पश्यति। 'अनश्नन् अभिचाकशीति' इत्यनेनोक्तम्।

बिम्बभूतेश्वरो भोगरहित प्रकाशमान ईश्वरश्च साक्षिरूपेण सकलद्रष्टा, ईश्वर उदासीनो बोधरूपश्चेति साक्षिमात्रम्। 'अनश्नन्' इत्यंशेनेश्वरस्य भोक्तृत्वनिषेधः। अहमनुभवे जीवात्मा

भोक्तृरूपतयैवानुभूतः। जीवस्य भोगनिषेधेऽनुभवविरोध आयाति, अतः स्वभावतोऽभोक्ता सन्नपि बुद्ध्या सह कल्पित तादात्म्यवशाद् भोगवानिव भवति। तथा हि सायुज्यमिह तादात्म्यमेव।

अस्यवामीयसूक्तस्थाग्रिममन्त्रेणापि तत्त्वम्पदार्थयोर्जीवेश्वरयोरेकत्वमेव प्रतिपादितम्।

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथामि स्वरन्ति।
ईनो विश्वस्य भुवनस्य गोपाः समाधीरः पाकमात्राविवेश[1]॥

तथा च सायुज्यमित्यस्य विग्रहस्त्वेवं स्वीकरणीयः। युनक्ति = सम्बन्ध्नाति इति युक्। युजा = जीवेन सह सयुग् ब्रह्म, सयुजो भावः सायुज्यम् = चैतन्यम्, सारूप्यम्, तादात्म्यमभेदो वा। शब्दाद्वैतवादिनामुपक्रमादिभिरद्वैते ब्रह्मणि तात्पर्यात् सायुज्यं भेदाभेदस्तादात्म्यं वा। अत्रैवोपक्रमोपसंहारादिभिस्तात्पर्यावगमादन्यथा व्याकरणसिद्धान्तो व्याकुप्येत। अत एवोक्तं भर्तृहरिणा स्वोपज्ञव्याख्यायाम्—

ज्योतिरन्तरमासाद्य च्छिन्नग्रन्थिपरिग्रहः।
परेण ज्योतिषैकत्वं छित्त्वा ग्रन्थीन्प्रपद्यते[2]॥

एवं ग्रन्थिच्छेदानन्तरं परेण ज्योतिषा सायुज्यमवधार्यमिति दिक्।

● ● ●

---

१. अ० वा० २१। २. वा० प० १।१३९।

# प्रातिपदिकार्थस्य पञ्चविधता

श्रीरामानन्दन ओझाः

प्राचार्यचरः, रीवांस्थशासकीयसंस्कृतोपाधिमहाविद्यालयस्य

❋ ❋ ❋

'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा'[1] इति सूत्रोपात्तस्य प्रातिपदिकार्थशब्दस्यार्थजिज्ञासायामियं कारिका—

एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः[2] ॥

इदमत्रावधेयम्—'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्'[3] इति सूत्रम्, 'सवर्णेऽण्ग्रहणमपरिभाष्यम्' 'आकृतिग्रहणात्सिद्धम्' इति वार्तिकद्वयम्, 'सरूपाणामेकशेषः'[4] इति सूत्रे 'आकृतिं वाजप्यायन' इति भाष्यं चाकलय्य जातिरेव प्रातिपदिकार्थो व्यक्तीनामानन्त्येनानेकशक्तिकल्पने गौरवात्।

अत्र 'नागृहीतविशेषणाबुद्धिर्विशेष्य उपजायते' इति न्यायोऽप्यनुकूल एव। विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणतया, अगृहीतविशेषणा बुद्धिर्विशेषणविशिष्टविशेष्यविषयिका न भवतीति न्यायस्य तात्पर्यम्।

यद्यपि वृद्धव्यवहारस्य प्रामुख्येन व्यक्तावेव दर्शनात्तत्रैव शक्तिकल्पनमुचितम्, व्यक्तीनामपि विनिगमनाविरहात्प्रत्येकमेकत्वात्, तथाप्येकस्यामेव व्यक्तौ शक्त्यभ्युपगमे व्यक्त्यन्तरबोधान्यथानुपपत्तिरूपबीजसत्वाद् व्यक्त्यन्तरे लक्षणायां स्वसमवेताश्रयत्वं संसर्ग इति लाघवम्। व्यक्तिबोधस्तु लक्षणयैव।

न च व्यक्तिशक्तिमते लक्षणाया अभावेन जातिशक्तिवाद एव गौरवारूढः। तथा च व्यक्तिरेव लघीयसीति तत्, न, एकस्यां व्यक्तौ शक्त्युपगमे व्यक्त्यन्तरे तदभावेन तद्बोधाप्रसङ्गात्। गामानयेत्यादावन्वयानुपपत्त्या तदाश्रयात्मकत्वेन निर्वाहः। अस्मिन्मते नानयनादिकार्यानुपपत्तिः, 'गामानय', व्रीहीनवहन्तीत्यादौ दानावहननकर्मत्वावेर्जात्याक्षिप्तव्यक्तावेवान्वयः। अतः सर्वत्रानुधावनं विहाय जातावेव शक्तिः साधीयसी। जातिस्तु तत्तत्पदार्थासाधारणो धर्मः। तेनाभावत्वाकाशत्वादीनां नित्यानेकसमवेतत्वरूपजातित्वाभावेऽपि न दोषः। स एव धर्मः शास्त्रे स्वार्थपदेन व्यवह्रियते इति मीमांसकवर्य्याः सङ्गिरन्ते।

अथवा केवलव्यक्तिरेवैकशब्दार्थः। एतत्पक्षस्वीकारेणैवाण्ग्रहणस्य, एकशेषपक्षारम्भस्यापि साफल्यात्केवलव्यक्तिशक्तिवादोऽपि शास्त्रसिद्धः। शक्तिग्राहकव्यवहारस्यापि व्यक्तावेव

---

१. अष्टा० २।३।४६। २. वा० प०। ३. अष्टा० १।२।५८।
४. तदेव—१।२।६४।

दर्शनात्तत्रैव शक्तिस्वीकार उचितः। गोत्वमस्तीत्यर्थेऽन्वयानुपपत्त्यभावेन गौरस्तीति प्रयोगे व्यक्तिभानानापत्तेः। व्यक्तीनामानन्त्येऽपि शक्यतावच्छेदकजातेरुपलक्षणत्वेन नानाव्यक्तिष्वेक-धर्मावच्छिन्नाया एकस्या एव शक्तेरुपगमान्नानात्वप्रयुक्तगौरवाभावाच्च।

न चैवं नागृहीतविशेषणन्यायेन घटत्वस्यापि शक्यतावच्छेदकत्वाद् वाच्यत्वमापतेदिति शङ्क्यम्, नागृहीतन्यायस्य विशेषणविशिष्टविशेष्यबोधे तात्पर्य्येऽपि भवदुक्ततात्पर्ये मानाभावात्। दण्डत्वादीनामन्यथासिद्धत्वेनाहेतुत्वेऽपि तीरत्वादीनां प्रवाहादिसम्बन्धितयाऽलक्ष्यत्वेऽपि च तत्र तन्निष्ठावच्छेद्यतानिरूपितस्वरूपसम्बन्धात्मिकाया विषयित्वविशेषात्मिकाया अवच्छेदकताया अभ्युपगमवदशक्यस्यापि घटत्वादेस्तादृशशक्यतावच्छेदकत्वसम्भवात्। जातिरुपलक्षकत्वेन तदाश्रयसकलव्यक्तिबोधेन व्यक्त्यन्तराबोधभङ्गाच्च। उक्तञ्च—

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति॥ इति।

अथवा—'**नह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः**' इति '**सरूपाणामेकशेष एकविभक्तौ**' इति सूत्रस्थभाष्यानुरोधेन जातिविशिष्टव्यक्तेरेव प्रातिपदिकार्थत्वं स्वीकार्यम्। अत्र पक्षेऽपि स्वरूपसूत्रारम्भावश्यकत्वम्। अभावः—अण्ग्रहणस्य भाष्ये प्रत्याख्यानेन सरूपसूत्रस्य च प्रक्रियानिर्वाहमात्रोपयोगित्वस्वीकारेण केवलव्यक्तिशक्तिवादिनां व्यवहारमात्रमेवाधारोऽवशिष्टः। न चैवमेकमित्यस्य निरालम्बनत्वापत्तिरिति वाच्यम्, शक्तिज्ञाननिष्ठकारणतायां विषयतासम्ब-न्धेनैकैव जातिरवच्छेदिका, न व्यक्तिरित्यर्थात्। एवं च स्वरूपतो घटत्वप्रकारकविशिष्टबोधे घटत्वांशेऽन्याप्रकारकघटत्वशक्तिज्ञानत्वेन हेतुतेति कार्यकारणभाव इति बोध्यम्। द्विकमित्यस्य च विशेष्यविशेषणभावानापन्ने जातिव्यक्ती शब्दवाच्ये—इति द्वितीयः पक्षः। '**तस्माच्छसो नः पुंसि**[1]', '**स्वमोर्नपुंसकात्**[2]', '**पुमान् स्त्रिया**[3]', इत्यादि सूत्रप्रामाण्येन, वेधाः, वाक्, दधि, मधु, इत्यादौ प्रकृतिमात्रेणैव पुंस्त्वादिबोधेन च लिङ्गमपि प्रातिपदिकार्थः। तदर्थस्तु जाति-व्यक्तिलिङ्गानि। लिङ्गं हि प्राकृतगुणवतो धर्मविशेषः। तद्विशेषरूपं तु पुंन्नपुंसकस्त्रीत्वाख्यम्। अत्र हि—

**स्तनकेशवती नारी लोमशः पुरुषः स्मृतः।**
**उभयोरन्तरं यच्च तदभावे नपुंसकम्॥**

प्रसिद्धस्यावयवसंस्थानविशेषरूपस्य लौकिकलिङ्गस्य न ग्रहणम्, घटः खट्वादिषु तद-वयवसंस्थानस्याभावाट्टाबादिर्न स्यात्। अतस्तद् विहाय सत्त्वानामुपचयापचयस्थितिरूपं शास्त्रीय-मेवात्रलिङ्गं गृह्यते। अर्थात्—सत्त्वरजस्तमसामुपचयः पुंस्त्वम्। तेषामपचयः स्त्रीत्वम्। तेषां साम्यावस्था च नपुंसकत्वमिति। तथा चात्र भाष्यम्—'**एकार्थशब्दान्यत्वाद् दृष्टं लिङ्गान्यत्व-मवयवान्यत्वाच्च**' इति।

एकस्मिन्नर्थे 'पुष्यस्तारकानक्षत्रम्' इति लिङ्गनानात्वदर्शनात्, 'कुटीर' इत्यादौ रेफ-स्यावयवस्योपजनेऽपि लिङ्गभेददर्शनाच्चान्यदेव शब्दनिष्ठं लिङ्गमिति तदर्थः। अत एव पदार्थ-

---

१. अष्टा० ६।१।१०३। २. तदेव—७।१।२३। ३. तदेव—१।२।६७।

पदे पुंस्त्वम्, व्यक्तिपदे स्त्रीत्वम्, वस्तुपदे नपुंसकत्वम् । सर्वत्रैवायमिति व्यवहारविषयत्वं पुंस्त्वम्, इयमिति व्यवहारविषयत्वं स्त्रीत्वम्, इदमिति व्यवहारविषयत्वं नपुंसकत्वमिति विलक्षणमेवात्र लिङ्गम् । सत्त्वरजस्तमसां च परस्परविरुद्धत्वेनैकत्रावस्थानासम्भवेऽपि समानानुपूर्वीकत्वेन शब्दानामभेदारोपादेव शब्देषु चानेकलिङ्गत्वव्यवहारः ।

न चैवमुक्तलिङ्गस्यैव पुंस्त्वादिव्यवहारोपयोगित्वे तस्य **'पशुना यजेत'** इत्यत्रापि सत्त्वात् स्त्रीपशुकरणकयागाद्यापत्तिः स्यादिति वाच्यम्, लिङ्गविशेषविशिष्टस्यैवार्थवाचकतया, लिङ्गानुशासनशास्त्रसिद्धतया च स्वाश्रयवाच्यत्वसम्बन्धनार्थविशेषणत्वेन पुंस्त्वविशिष्टपशोरेव विधानात् पशुनेत्यादिविधेश्छाग्यादीनामङ्गत्वेनास्वीकारात् । पुंल्लिङ्गस्य पशुशब्दस्य पुंव्यक्तेरेव वाचकत्वाच्च । व्यक्तिशब्दस्य नित्यस्त्रीत्वेन लिङ्गसाधारण्येऽपि पशुशब्दस्य नित्यपुंल्लिङ्गत्वे प्रमाणाभावेन पश्वादिशब्दोक्तस्य न लिङ्गसाधारण्यम् **'पश्वानतायुं गुहा चरन्तम्', 'पश्वे नृभ्यो यथा गवे'** इति वेदवाक्ये पशुशब्दस्य स्त्रीत्वे दृष्टत्वात् ।

वस्तुतस्तु व्याकरणेन 'उ' प्रत्ययान्तानां पुंस्त्वस्य निर्णयेन, वेदेऽपि 'जसादिषु छन्दसि वा वचनम्' इति नाभावाभावस्य दर्शनात्पशुशब्दस्य नित्यपुंस्त्वमेव । तथा च व्यक्त्यादिशब्द-लिङ्गस्येव पशुशब्दोक्तलिङ्गस्यापि साधारण्यान्न तत्वार्थपरिच्छेदकत्वम् । एवं तर्हि पशुशब्देन-कथं पुंपशुनिर्णय इति चेत्तर्हि—**'छागो वा मन्त्रवर्णात्'** इति न्यायेन पुंपशुरेव निर्णीयते ।

अयं भावः—**'छागस्य मेदसो वपायाः'** इति श्रूयते । तथा च **'अग्निषोमीयं पशुमालभेत'** इत्यादौ न छागशब्दस्य छाग्यां प्रवृत्तिरसम्भवात्, न वा पशुशब्देनाश्वादिर्गृह्यते, किन्त्वज एव **'छागस्य मेदसः'** इत्यत्र पुंस्त्वविशिष्टछागपदोपादानात् पुंपशुरेव न स्त्री इति, अज एव नाश्वादि-रिति च निर्णीयते ।

**वैयाकरणास्तु**—विभक्तीनां तात्पर्यग्राहकतया सङ्ख्या हि न विभक्त्यर्थः; किन्तु नामार्थ एव । तन्मते चतुष्कं हि प्रातिपदिकार्थः । सङ्ख्यासहितं त्रिकमित्यर्थः । न चैवमनेकसङ्ख्यानां सत्त्वाच्छक्ततावच्छेदकत्वानन्ततापत्तिरिति वाच्यम्, धातुप्रत्ययप्रत्ययान्तभिन्नस्यार्थवच्छब्दस्वरूप-स्यैव प्रातिपदिकत्वेनार्थवच्छब्दस्वरूपत्वरूपप्रातिपदिकत्वस्यैव शक्ततावच्छेदकतयाऽनन्तशक्तता-वच्छेदकत्वानापत्तेः । 'दधि', 'मधु' इत्याद्यनुरोधेन च नान्वयव्यतिरेकाभ्यां विभक्तिवाचकत्वं सङ्ख्यायाः ।

न चैवमप्याकाङ्क्षाविरहादेकपदोपस्थाप्ययोरर्थयोः परस्परमन्वयेन हर्यादिपदोपस्था-प्याश्व-सूर्ययोराधाराधेयभावेनान्वयापत्तिरिति वाच्यम्, आकाङ्क्षाया वैलक्षण्येन समानप्रकृत्यु-पस्थाप्ययोरपि परस्परमन्वयसम्भवादित्याहुः ।

**नैयायिकास्तु**—एकत्वादीनां दुर्वचत्वेन सुत्वौत्वादिनैव शक्तता, न तु स्वादिसाधारणैक-वचनत्वादिनेति स्वीकृत्याल्पतरविभक्त्याद्यानुपूर्वीणामेकत्वादिशक्ततावच्छेदकत्वस्यौचित्येन सङ्ख्या विभक्त्यर्थ एव न प्रकृत्यर्थः । प्रातिपदिकत्वस्य दुर्वचत्वेन एकत्वादिज्ञानस्याऽनुभविकत्वेन च न तच्छक्ततावच्छेदकमित्यामनन्ति ।

**वस्तुतस्तु**—सिध्यन्ति विभक्त्यन्तसमुदाय एव सङ्ख्यावाचको न प्रकृतिर्न वा विभक्तिः । अत एव हरिकारिकाऽप्यनुकूला—

**वाचिका द्योतिका वा स्युर्द्वित्वादीनां विभक्तयः ।**
**यद्वा सङ्ख्यावतोऽर्थस्य समुदायोऽभिधायकः[1] ॥ इति ।**

अत्र तत्तदानुपूर्वीणामेव शक्ततावच्छेदकत्वमिति न कश्चिद्दोषाधारलेशः ।

कारकस्यापि प्रकृत्यर्थत्वात्तदपि प्रातिपदिकार्थं इति मते पञ्चकं प्रातिपदिकार्थं इति । कारकसहितं चतुष्कमित्यर्थः । प्रत्ययं विनाऽपि वारि पिबतीत्यादौ कर्म्मादिकारकस्य प्रतीतेर्नान्वय-व्यतिरेकाभ्यां प्रत्ययस्यैव वाचकताऽध्यवसीयते । लिङ्गानुशासनस्यापि प्रकृतिरेव तद्दर्शनाच्च । प्रत्ययं प्रत्ययार्थं वाऽजानतोऽपि दध्यानयेत्यादितो बोधदर्शनान्न प्रत्ययस्मरणादिकं कल्पनीयम् । एतत्सर्वमनभिहितसूत्रभाष्ये, प्रधानतया तु 'सरूपाणामेकशेष एक विभक्तौ' इति सूत्रभाष्ये च स्पष्टम् ।

विष्णुमुच्चारयेत्यादौ नार्थोच्चारणसम्भवोऽतः शब्दविषयं विना शाब्दबोधस्यानुदया-च्छब्दोऽपि नामार्थ इत्येषोऽपि पक्षः । तन्मते षोढा प्रातिपदिकार्थः । यद्यपि घटमानयेत्यादौ शाब्दबोधकाले घटादिशब्दस्य माने प्रमाणाभावेन शब्दस्य प्रातिपदिकार्थत्वकथनमनुचितमिति नैयायिकवर्याणामाकूतम्, तथापि शब्दस्य विशेषणतया शाब्दबोधे भाने न किञ्चिद्बाधकमिति विभावनीयम् ।

निरूढलक्षणाया अनादितात्पर्यविषयत्वेन शक्त्यनतिरेकात्, जवगडदशमुच्चारयेत्यादौ शक्याग्रहेण शक्यसम्बन्धाभावाल्लक्षणाया अनुदयात् । अत एव च युधिष्ठिर आसीदित्यादौ युधिष्ठिरपदबोध्यः कश्चिदिति बोधः ।

अत्र हि—

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते[2] ॥**

इत्यभियुक्तोक्तिः ।

अन्यच्च—

**ग्राह्यत्वं ग्राहकत्वं वा द्वे शक्ती तेजसो यथा ।**
**तथैव सर्वशब्दानामेते पृथगवस्थिते[3] ॥**

**'विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते'** इति ह्युक्तिरपि प्रमाणम् ।

अयमत्र ग्रन्थः—तमसि घटप्रत्यक्षाय; द्रव्यविषयकचाक्षुषत्वावच्छिन्नं प्रति प्रकाश-संयोगस्याऽपि कारणत्वमावश्यकमिति तत्र दीपस्य ग्राहकत्वशक्तिः । एवं घटपटादिप्रकाशयन् दीप आत्मानमपि प्रकाशयतीति तस्य ग्राह्यत्वशक्तिः । तथा शब्दोऽपि स्वार्थं प्रकाशयन् स्वरूपमपि ख्यापयति । अर्थात्—यथा दीपो घटाभावे केवलमात्मानमेव प्रकाशयति, तथा शब्दोऽपि चार्थे

---

१. वा० प० २।१६४ । २. वा० प० १।१२३ । ३. वा० प० १।५५ ।

तात्पर्याभावे शब्दमात्रे तात्पर्ये सति स्वं मात्रमेव बोधयति । तथा च सूत्रं '**स्वं रूपं शब्दस्याशब्दसंज्ञा**[१]' इति । अत एव च '**अग्नेर्ढक्**[२]' इति सूत्रान्नार्थाढ्ढक् ।

अत एवाह—

**शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा ।**
**नो चेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थोऽवभासते ॥**

**अयं भावः**—भूसत्तायामित्यादिनिर्देशादनुकार्यानुकरणयोरभेदज्ञापनात्प्रातिपदिकत्वं पदत्वं च न भवति । '**भुवो वुग् लुङ्लिटोः**[3]' इति अनुकार्यानुकरणयोर्भेदज्ञापनादनुकार्यस्य पदानुपस्थितत्वात्तत् सिद्धयेऽवश्यं शक्तिरुपेया । अतो यदा भेदविवक्षा, तदा शब्दोऽपि नामार्थ इति तत्तात्पर्यम् ।

धातुप्रत्ययप्रत्ययान्तभिन्नस्यार्थवच्छब्दस्वरूपस्यैव प्रातिपदिकवाच्यत्वं साधितम् । '**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्**[४]' इति सूत्रयता महर्षिपाणिनिनाऽपि ।

वस्तुतस्तु नैष प्रातिपदिकार्थो भट्टोजिदीक्षितसम्मतः । अर्थात् त्रिकं प्रातिपदिकार्थस्तदा '**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा**' इति सूत्रे लिङ्गग्रहणस्य वैयर्थ्यं स्पष्टमेव, तज्जन्यकार्यस्य प्रातिपदिकार्थेनैव साधितत्वात् । यदा हि पञ्चकं प्रातिपदिकार्थो गृह्येत, ततो लिङ्गग्रहणस्य वचनग्रहणस्यापि वैयर्थ्यं स्यात् । मात्रग्रहणाच्च कर्मादिव्यवच्छेदो न स्यात्, प्रातिपदिकार्थादनतिरिक्तत्वात् । अत एवैतत्सर्वं विहाय '**नियतोपस्थितिकः प्रातिपदिकार्थः**' इति सिद्धान्तितत्वात् । नियत्र नैरन्तर्यपरो यमधातोश्च व्यापकत्वमर्थः । अतो यस्मिन् प्रातिपदिकेऽउच्चारिते यस्यार्थस्य नैरन्तर्य्येण व्यापकतया चोपस्थिति, स प्रातिपदिकार्थ इति च तस्यार्थः । स चार्थः प्रवृत्तिनिमित्तं तदाश्रयश्चेति । '**सिंहो माणवकः**' इत्यादौ तु शक्यार्थमादाय प्रथमाविभक्तेरुत्पत्तौ पश्चात् पदान्तरसमभिव्याहारेण लक्ष्यार्थ बोधः । अत एव हि भट्टोजिदीक्षितेन स्वनिर्मितकारिकायां '**पक्षाः शास्त्रे निरूपिताः**' इत्युक्त्वा तत्रारुचिः सूचिता इति शम् ।

• • •

---

१. अष्टा० १।१।६८ । २. तदेव—४।२।३५ ।
३. तदेव—६।४।८८ । ४. तदेव—१।२।४५ ।

पञ्चमविश्वसंस्कृतसम्मेलनविशेषाङ्कग्रन्थमाल

[ १ ]

रामाज्ञापाण्डेयविरचिता

# व्याकरणदर्शनभूमिका



सम्पादकः

श्रीगौरीनाथशास्त्री

कुलपतिः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वै० सं० २०३८

# विषयानुक्रमणी



• • •



# प्रस्तावना

पण्डितप्रवरवैयाकरणमूर्धन्यश्रीरामाज्ञापाण्डेयविरचितस्य व्याकरणदर्शनभूमिकाभिधानस्य ग्रन्थरत्नस्य सम्पादनेन मम स्वान्तं नितरां प्रसीदति। यतो हि विश्वस्य सनातनं सर्वविध-कल्याणसाधकं च साहित्यं मन्त्रब्राह्मणात्मको वेद एव। व्याकरणं तस्याङ्गतया प्रख्यातमस्ति। तथा हि गोपथब्राह्मणे **'षडङ्गविदस्तत्तथा धीमहे'**[1] इत्युक्त्या **'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'**[2] इति महाभाष्योक्त्या च वेदस्य षट्संख्याकानि अङ्गानि सन्तीति ज्ञायते। तानि च—शिक्षा, कल्पः, निरुक्तम्, छन्दः, ज्योतिषम्, व्याकरणं च प्रसिद्धान्येव। उक्तं च—

> **छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
> **ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥**
> **शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
> **तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते**[3] ॥ इति।

अपरं चास्य व्याकरणस्याङ्गान्तरापेक्षया प्राधान्यमप्युक्तं भगवता भाष्यकृता[4]—**'प्रधानं च षट्सु अङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति'** इति।

एवं च यथा शरीरस्य रक्षार्थमङ्गानां महती आवश्यकताऽस्ति, तथैव वेदानां स्वरूपस्य तदर्थस्य चावगमाय शिक्षाद्यङ्गानामस्ति महत्प्रयोजनम्; किं पुनस्तत्र मुखस्थानीयस्य व्याकरणस्य।

**'अथ किमिदं व्याकरणम्? किं च तस्य दर्शनत्वम्?'** व्याकरणमस्ति वेदस्यान्यतमं महनीयमङ्गं सप्रयोजनं चेति ज्ञातम्। इदानीं तल्लक्षणनिर्वचनेन विशेषतः स्वरूपं जिज्ञासित-मस्ति। तन्निरूप्य दर्शनस्य लक्षणम्, व्याकरणे दर्शनत्वसंघटनं च विधास्यते।

तत्र व्याक्रियन्ते, साधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते (पृथक्कृत्य ज्ञायन्ते) येन तद् व्याकरणमिति करणव्युत्पत्त्या असाधुशब्दावधिकसाधुशब्दकर्मकपृथक्कृतिपूर्वकसाधुशब्दविषयक-ज्ञानकरणं व्याकरणमित्यर्थो योगशक्त्या लभ्यते। यथा—गावी, गोणी, गोता इत्यादिभ्योऽ-साधुशब्देभ्यो गो इति साधुशब्दस्य पृथक्कृत्य बोधनं व्याकरणशास्त्राधीनम्। पृथक्कृतिश्च **'गच्छतीति गौः', 'गमेर्डो प्रत्ययः कर्तरि औणादिकः'** इत्येवं प्रकृतिप्रत्ययविश्लेषणपूर्विका।

एवं च साधुशब्दबोधकशास्त्रत्वं शब्दगतसाधुत्वबोधकशास्त्रत्वं वा व्याकरणस्य लक्षणं पर्यवसितम्। इतरत् सर्वमसाधुशब्दज्ञानं प्रकृतिप्रत्ययादिज्ञानं परिचायककोटावेव प्रविष्टम्, न तु लक्षणशरीरे निविष्टम्। डित्थादिशब्दे प्रकृत्यादिकल्पनायाः प्रायोऽदर्शनात्।

---

१. गो० ब्रा० पू० १–२७।
२. म० भा० पस्पशा० १-१।
३. पाणिनीयशिक्षा–४१-४२।
४. म० भा० पस्पशा० १-१।

# विषयानुक्रमणी



● ● ●



# प्रस्तावना

पण्डितप्रवरवैयाकरणमूर्धन्यश्रीरामाज्ञापाण्डेयविरचितस्य व्याकरणदर्शनभूमिकाभिधानस्य ग्रन्थरत्नस्य सम्पादनेन मम स्वान्तं नितरां प्रसीदति। यतो हि विश्वस्य सनातनं सर्वविध-कल्याणसाधकं च साहित्यं मन्त्रब्राह्मणात्मको वेद एव। व्याकरणं तस्याङ्गतया प्रख्यातमस्ति। तथा हि गोपथब्राह्मणे **'षडङ्गविदस्तत्तथा धीमहे'**[1] इत्युक्त्या **'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'**[2] इति महाभाष्योक्त्या च वेदस्य षट्संख्याकानि अङ्गानि सन्तीति ज्ञायते। तानि च—शिक्षा, कल्पः, निरुक्तम्, छन्दः, ज्योतिषम्, व्याकरणं च प्रसिद्धान्येव। उक्तं च—

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते**[3] ॥ इति।

अपरं चास्य व्याकरणस्याङ्गान्तरापेक्षया प्राधान्यमप्युक्तं भगवता भाष्यकृता[4]— **'प्रधानं च षट्सु अङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति'** इति।

एवं च यथा शरीरस्य रक्षार्थमङ्गानां महती आवश्यकताऽस्ति, तथैव वेदानां स्वरूपस्य तदर्थस्य चावगमाय शिक्षाद्यङ्गानामस्ति महत्प्रयोजनम्; किं पुनस्तत्र मुखस्थानीयस्य व्याकरणस्य।

**'अथ किमिदं व्याकरणम्? किं च तस्य दर्शनत्वम्?'** व्याकरणमस्ति वेदस्यान्यतमं महनीयमङ्गं सप्रयोजनं चेति ज्ञातम्। इदानीं तल्लक्षणनिर्वचनेन विशेषतः स्वरूपं जिज्ञासित-मस्ति। तन्निरूप्य दर्शनस्य लक्षणम्, व्याकरणे दर्शनत्वसंघटनं च विधास्यते।

तत्र व्याक्रियन्ते, साधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते (पृथक्कृत्य ज्ञायन्ते) येन तद् व्याकरणमिति करणव्युत्पत्त्या असाधुशब्दावधिकसाधुशब्दकर्मकपृथक्कृतिपूर्वकसाधुशब्दविषयक-ज्ञानकरणं व्याकरणमित्यर्थो योगशक्त्या लभ्यते। यथा—गावी, गोणी, गोता इत्यादिभ्योऽ-साधुशब्देभ्यो गो इति साधुशब्दस्य पृथक्कृत्य बोधनं व्याकरणशास्त्राधीनम्। पृथक्कृतिश्च **'गच्छतीति गौः', 'गमेर्डो प्रत्ययः कर्तरि औणादिकः'** इत्येवं प्रकृतिप्रत्ययविश्लेषणपूर्विका।

एवं च साधुशब्दबोधकशास्त्रत्वं शब्दगतसाधुत्वबोधकशास्त्रत्वं वा व्याकरणस्य लक्षणं पर्यवसितम्। इतरत् सर्वमसाधुशब्दज्ञानं प्रकृतिप्रत्ययादिज्ञानं परिचायककोटावेव प्रविष्टम्, न तु लक्षणशरीरे निविष्टम्। डित्थादिशब्दे प्रकृत्यादिकल्पनायाः प्रायोऽदर्शनात्।

---

१. गो० ब्रा० पू० १–२७।
२. म० भा० पस्पशा० १-१।
३. पाणिनीयशिक्षा–४१-४२।
४. म० भा० पस्पशा० १-१।

लक्ष्यलक्षणे व्याकरणमिति व्याचक्षाणेन भाष्यकृताऽपि लक्ष्यगतसाधुत्वलक्षकशास्त्रं व्याकरणमिति प्रत्याय्यते, येन च पूर्वोक्तं लक्षणं साधु समर्थ्यते। **'साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः'** इत्युक्त्या वाक्यपदीयकृताऽपि उक्तं तल्लक्षणे साधुसम्मतिः प्रकाश्यते।

अथ व्याकरणस्य स्वरूपपरिचायनानन्तरं दर्शनत्वं विमर्शनीयमस्ति। तत्र दृश्यते आत्मतत्त्वं विचार्य्यते येन, तद्दर्शनमिति निर्वचनेन आत्मतत्त्वविचारकशास्त्रत्वं दर्शनलक्षणं पर्यवस्यति, भारतीयदर्शनानामेष स्वभावो यत् सर्वेषां जीवानां कृते कल्याणमार्गं दर्शयेत्, स च मार्ग आत्मतत्त्वविवेचनात्मक एव। तथा च श्रुतिः[1]—**'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'** इति। एतदनुगुणम्—**'आत्मा वाऽरे द्रष्टव्यः, श्रोतव्यो मन्तव्यो निध्यासितव्यः[2]'** इति श्रुतिरात्मसाक्षात्कारलक्षणं मोक्षं तदुपायभूतं श्रवणादिकं च प्रतिपादयन्ती साक्षादेव दर्शनपदव्यपदेश्यतां भजते।

एवमेव—**'सर्वं खल्विदं ब्रह्म[3]'**, **'अयमात्मा ब्रह्म[4]'** इत्याद्या श्रुतयो ब्रह्मसूत्राणि च दर्शनपदेन व्यवह्रियन्ते। एतद्विषये व्याकरणं पश्चात्पदं न भवति। यतश्चास्तीदमपि आत्मतत्त्व-विवेचकम्। उक्तं च—

> **दृष्ट्वारूपे व्याकरोत् सत्यानृते प्रजापतिः।**
> **अश्रद्धामनृते दधाच्छ्रद्धां सत्ये प्रजापतिः[5]** ॥ इति।

'प्रजापतिः शब्दोपादानकसृष्टिविधाता वैयाकरणः संमिलिते सत्यानृते पृथक्कृत्य परमार्थ-भूते सत्ये वस्तुनि श्रद्धामसत्येऽनात्मनि अश्रद्धां प्रत्यतिष्ठिपत्' इत्यर्थिकयाऽनया श्रुत्या सत्यासत्य-विवेचनलक्षणं दर्शनत्वं व्याकरणस्य सुस्पष्टं प्रतिपाद्यते।

किं च प्रकृतिप्रत्ययौ असत्यौ, तदपेक्षया पदानि सत्यानि, ततोऽपि वाक्यानि, पश्यन्त्यादिकं च सर्वं जगदसत्यम्, सर्वापेक्षया पराख्यं वाग्ब्रह्म सत्यमित्येवं निगूढं तात्पर्यम्।

एवमेव—**'नामरूपे व्याकरवाणि[6]'** इति श्रुतिरपि संश्लिष्टयोः शब्दार्थयोः पृथक्कृतिं बोधयन्ती व्याकरणस्य सत्यासत्यविवेचनलक्षणं दर्शनत्वं प्रकाशयति।

**'वाग्वै ब्रह्म[7]'**, **'वाग्घि ब्रह्म[8]'**, **'ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते[9]'** इत्याद्याः श्रुतयोऽपि वाचो व्याकृतिरूपोपासनया व्याकरणस्य दर्शनत्वं सम्यक् प्रतिपादयन्ति।

एकैव वाग् व्याकृताव्याकृताभेदेन द्विविधाऽस्ति। तत्र व्याकृतापदेन पश्यन्ती-मध्यमा-वैखरीणां ग्रहणम्, अव्याकृतापदेन सर्वधर्मरहिताया नित्यायाः पराख्यवाचो ग्रहणमिति सिद्धान्तोऽस्ति।

किं च विदितमेवास्ति समेषां यत् पुरा सकलन्यायबीजगर्भितः संग्रहनामा लक्षश्लोकात्मको दर्शनग्रन्थो महामुनिव्याडिनिर्मित आसीत्। कियता कालेन नष्टे तस्मिन् संग्रहे व्याकरणस्य विलुप्तप्रायं[10] दर्शनत्वं पुनर्भगवान् पतञ्जलिरुज्जीवयामास महाभाष्यरचनया। पुनस्तच्छिष्य-

---

१. शुक्लयजुः—३१-१८। २. बृहदा० उ०—२।४।५। ३. छान्दोग्य० उ०—३।४।१।
४. बृहदा० उ०—२।५।१९। ५. शुक्लयजुः—१९।१७।
६. छान्दोग्य० उ० ६।३।२। ७. बृहदा० उ०—४।१।२। ८. ऐ० ब्रा०—२।१५।
९. उद्धृता—शा० भा०—१-३-८ सू० २८। १०. वाक्यपदीयम्—२।४८२-८४, ८६।

परम्परया श्रीमद्भर्तृहरिसम्पादितवाक्यपदीयरचनया च तद्व्याकरणदर्शनं भृशं वर्धितं पोषितं चाभवत् ।

किं बहुना—अस्य दर्शनस्य स्फोटवाद-शब्दाद्वैतवादप्रभृतिसिद्धान्तान् खण्डनमण्डनविधया व्याख्यातवन्तोऽन्येऽपि दार्शनिका अस्य दर्शनत्वं सम्मानयन्त्येव ।

एवं व्याकरणस्य दर्शनत्वे निर्णीते सत्यस्य दर्शनस्य काचन भूमिर्निर्देष्टव्या, यत्र चास्य दर्शनस्य प्रतिष्ठा भवेत् । सा चेयं भूमिका षट्स्वध्यायेषु निरूपिताऽस्ति । तत्र च शब्दार्थनिरूपणाध्यायः प्रथमः, शब्दार्थसम्बन्धनिरूपणाध्यायो द्वितीयः, साधननिरूपणाध्यायस्तृतीयः, गुणनिरूपणाध्यायश्चतुर्थः, क्रियानिरूपणाध्यायः पञ्चमः, वृत्तिनिरूपणाध्यायः षष्ठ इत्येवं क्रमिकी स्थितिः षण्णामध्यायानाम् ।

तत्र प्रथमाध्याये व्याकरणस्य स्वरूपवर्णनप्रसङ्गे पश्यन्त्या वाचो वेदरूपत्वं प्रतिपादयता ग्रन्थकारेण व्याकरणं सर्वपदार्थापेक्षया पवित्रमिति सोल्लासं प्रत्यपादि । प्रकृतेर्मातृरूपत्वम्, प्रत्ययस्य च पितृरूपत्वम्, उभयोः सम्भूतिस्थानं पश्यन्ती एव । एनयोरर्थसम्बन्धोऽपि तत्रैवानुस्यूतोऽवतिष्ठते, शब्दार्थसम्बन्धस्य नित्यत्वात् ।

प्रतिभायाः, प्रणवस्य च पश्यन्त्या सहैक्यमपि द्रष्टव्यम् । तदनु, पाणिनेः शिष्टत्वम्, व्याकरणस्य सर्ववेदपारिषद्यम् अष्टाध्यायीस्वरूपम्, इन्द्रियविषययोः संस्कारः, बाह्यान्तरभेदेन स्फोटद्वैविध्यम्, शब्दसृष्ट्युत्पत्तिप्रक्रिया चेत्यादयो विषयाः सूक्ष्मेक्षिकया विवेचिताः सन्ति ।

तत्र शब्दसृष्टिप्रक्रियाप्रस्तावे इत्थं निरुक्तिमस्ति—यथा हि सूक्ष्मं वटबीजं विवृद्धं सदाविर्भूतचैतन्यं वृक्षात्मना दृश्यते; तथैव तत्स्फोटरूपं शब्दब्रह्म स्फुटत्यर्थोऽस्मादिति व्युत्पत्तिविशिष्टं सत् सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलरूपेण प्रकाशरूपं वैखरीपर्यन्तशब्दराश्यात्मना विमर्शात्मनाचार्थकक्षामाश्रित्य सत्त्वरजस्तमोरूपेण बुद्ध्यहङ्कारेन्द्रियादिना सूक्ष्मस्थूलभूतात्मना च परिणमति ।

तत्र सर्वमपि बीजं वर्तुलाकृति-अङ्कुरोत्पत्तिकाले दलद्वयेन विभक्तं भवति, तथैव प्रणवरूपः शब्दोऽपि बिन्दुर्वर्तुलाकृतिरेव, सृष्ट्युन्मुखत्वे विभक्तो भवति ।

पुनश्च ऋक्सामयजुरादिप्रातिशाख्यानुसारेण शैवशाक्ततन्त्रानुसारेण च वर्णोपन्यासः सोपपत्तिकं कृतोऽस्ति । तत्र सर्वेऽपि विषया आर्षप्रभावप्रभवा इत्यप्युक्तम् ।

तदग्रे च प्रत्यक्षानुमानार्थापत्तिशब्दानुपलब्धयः पञ्च प्रमाणानि, तेषु च शब्दस्य मुख्यं प्रमाणत्वमभ्युपेतम् । स्फोटविभागः कल्पनाप्रसूतः, अष्टानां पदार्थानां स्वरूपं चालोचनीयमस्ति ।

शब्दार्थसम्बन्धनिरूपणाख्ये द्वितीयाध्याये वाच्यवाचकभावकार्यकारणभावरूपसम्बन्धविमर्शः कृतोऽस्ति । तत्र बहुशो वाक्यपदीयं प्रमाणत्वेन निर्दिष्टमस्ति ।

तृतीये गुणनिरूपणाध्याये—'सत्त्वे निविशतेऽपैति' इत्यादिना गुणस्वरूपं सोपपत्तिकं निरूपितम् ।

एतत्प्रसङ्ग एव—

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥

इति याज्ञवल्क्यस्मृतिरपि सम्यग् विवेचिताऽस्ति ।

चतुर्थे साधननिरूपणाध्याये—साधनपदव्यपदेश्यानि कारकाणि निरूपितानि सन्ति । तत्र कृधातोर्निष्पन्नानि कर्तृ-कर्म-करण-अधिकरणपदान्येव स्वार्थभूतं वास्तविकंकारकं बोधयन्ति । एवं च कर्मादीनि चत्वार्य्येव मुख्यानि कारकाणि । सम्प्रदानापादानयोस्तु न मुख्यं कारकत्वम्, अपि तु गौणमेव । एतत्सर्वं तस्मिन्नध्याये द्रष्टव्यमस्ति ।

पञ्चमे क्रियानिरूपणाध्याये धात्वर्थभूता क्रिया, तत्परिच्छेदका भूतभविष्यदादि कालभेदाश्च निरूपिताः सन्ति । स्वातन्त्र्याऽपरपर्याया कालशक्तिः लिङ्गसंख्यादिश्च सोपष्टम्भं निरूपितोऽस्ति ।

षष्ठे वृत्तिनिरूपणाध्याये—कृद्वृत्तिं परित्यज्य चतस्र एव वृत्तयः सिद्धान्तिताः ।

यत्तु श्रीनागेशभट्टेन एकशेषं विहाय चतस्रो वृत्तयो व्याख्याताः, तन्मतं खण्डितमत्र ।

एवं च महता परिश्रमेण प्रतिमातिशयेन च षट्सु अध्यायेषु प्रतिष्ठापितैषा व्याकरण-दर्शनभूमिका पञ्चमे विश्वसंस्कृतपरिषन्महोत्सवावसरे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन प्रकाश्यमाना सती बहुजनहिताय, बहुजनसुखाय च भूयादिति साधुवादवितरणपुरस्सरं विरमति—

श्रीविश्वेश्वरपुर्यां
विजयादशम्याम्
वि० सं० २०३८

श्रीगौरीनाथशास्त्री
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

## रामाज्ञापाण्डेयविरचिता

# व्याकरणदर्शनभूमिका*

अस्मद्देशिकमस्मदीयपरमाचार्यानशेषान् गुरून्
श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णौ मुनिं यामुनम् ।
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणं
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये ॥ १ ।
बुद्धिं योऽष्टगुणां ददाति सदयं भक्ताय सक्तात्मने
तत्प्राप्त्या चिदचिद्विभागमहितं विश्वं समुद्भासते ।
योऽन्तःस्थो बहिरेत्य योगकलया तत्त्वान्तरङ्गत्रयं
दत्त्वा पूतमनस्कतां वितनुतां नारायणः सोऽचिरात् ॥ २ ।

---

* अत्र हि व्याकरणदर्शनमित्यस्य कोऽर्थः ? एवं प्रश्ने तद्घटकदर्शनशब्दस्यार्थः प्रथमं निर्णीयते । अयं हि दर्शनशब्दो भावसाधनः करणसाधनश्च । तत्र भावसाधनत्वे दृष्टिरित्यर्थस्तस्यावबुध्यते । करणसाधनत्वे तु दृश्यते प्रत्यक्षीक्रियते न तु अनुमीयते नापि शब्दजन्यबोधविषयीक्रियते अनेनेति व्युत्पत्त्या दर्शनसाधनमित्यर्थः । एवं सति यैर्यैरुपायैर्दृश्यते, ते सर्वेऽपि उपाया दर्शनपदव्यपदिष्टा भवितुमर्हन्ति । भावसाधनत्वे तु—"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । मत्वा च सततं ध्येय एते दर्शनहेतवः ॥" (सांख्यप्र० भा० प्र० अ० १ सू० १) इत्युक्त्या श्रुतिवाक्यश्रवणमन्तरा यत् किञ्चिद् ग्रथ्यमानं वस्तु दर्शनमेव नहि भवितुमर्हतीति कथङ्कारं दर्शनपदव्यपदिष्टानां दर्शनपदव्यवहार्यता इति चेत्, उच्यते, सर्वेषामपि दर्शनानामुद्भावकानां चेतसि सैव भगवती श्रुतिः साक्षात् परम्परया वा स्वकीयं कार्यं विदधती वर्तत एव । तामन्तरा तस्याश्चितः प्रकाशस्य खपुष्पायमाणत्वात् । एवं च दर्शनहेतूनां दर्शकं प्रतिपादकं वा शास्त्रं लक्षणया दर्शनपदभाग् भवेदेव किमुत करणसाधनत्वे । तथा च व्याकरणमेव दर्शनमिति कर्मधारये सर्वं व्याकरणं दर्शनमेव भविष्यति । भावसाधनत्वे षष्ठीसमासे व्याकरणस्य दर्शनमित्यर्थः । तत्रापि व्याकरणपदेन व्याख्यानोपसंख्यानादिविशिष्टं शास्त्रं व्याकरणपदेन ग्राह्यम् । तस्य दर्शनमित्यत्र कर्तरि षष्ठ्या समासे शास्त्रेण यद् यद् दृश्यते, तत् सर्वमपि दर्शनमेव भवेत् । अधिकरणस्य सम्बन्धत्वेन विवक्षया षष्ठ्यन्तेन समासे तु व्याकरणशास्त्रे यत्परात्मनः तत्सम्बन्धिनो वा दर्शनस्य साधकं तदेव दर्शनं स्यात् । एवं सति उक्तासु व्युत्पत्तिषु यः कोऽपि व्याकरणसम्बन्धी विषयः, स सर्वोऽपि दर्शनपदव्यपदेश्यः सिध्यति । अस्यां स्थितौ पञ्चानां वृत्तीनामन्येषां वा प्रकृतिप्रत्ययसन्धिसमासकारकादीनां सर्वेषां दर्शनत्वे न काचिद् बाधाऽऽपतिष्यति । किञ्च येन केनापि वैयाकरणेन दृष्टो व्याकरणे पदार्थो व्याकरणदर्शनपदव्यपदेश्यो भवेत्, तथा चेदं शास्त्रं व्याकरणदर्शनं कथयितुं शक्यते ।

चतुर्दशाधिकैकोनविंशतिशततमे ख्रीस्ताब्दे डाक्टरवेनिसमहोदयैः काशिक-राजकीयसंस्कृतमहाविद्यालयाध्यक्षैर्व्याकरणदर्शनगवेषणाय नियुक्तोऽभवम् । तत आरभ्य वर्षचतुष्टयं यावदपेक्षितान् ग्रन्थांस्तया दृष्ट्या पर्यालोचयम् ।

**व्याकरणदर्शनलेखनेतिहासः**

अष्टादशाधिकैकोनविंशतिशततमे ख्रीस्ताब्देऽत्रत्येनाधिकारिणा 'मया सह व्याकरणदर्शनं ग्रन्थरूपे परिणतं कुरु' इति साग्रहमापृष्टः प्रत्याख्यातवांस्तदीयां वाञ्छाम् ।

तत आरभ्य बीजरूपेण मदीयायां बुद्धौ पुष्टिमासादयन्नयं विषयः परिपक्वो ग्रन्थरूपं लब्धुं व्यग्रोऽभवत् ।

भगवत्प्रेरणया युक्तप्रान्तीयशिक्षामन्त्रिणः श्रीसम्पूर्णानन्दमहोदयाः सप्तचत्वारिंशदधिकैकोनविंशतिशततमे ख्रीस्ताब्दे विहारसंस्कृतसञ्जीवनसंस्थाया विशिष्टे वार्षिकोत्सवे सभापतिपदमलङ्कुर्वाणा मया एतद्विषयस्य सम्पूर्त्यै साग्रहमनुरुद्धा लक्ष्मण-पुरमाहूतवन्तो मां वैशद्येन विषयावबोधार्थम् ।

**नवीनप्रवृत्तेः पूर्वं समालोचितविषयादाधुनिकस्य महदन्तरम्**

तस्मिन्नेव वत्सरे अगस्तमासे मया पुनरप्यपेक्षितविषयाणां परिपुष्ट्यै ग्रन्थास्तद्-दृष्ट्या द्रष्टुमारब्धाः । पूर्वं ये विषयाः प्रतीकरूपेणासन् गवेषिताः, ते तु साम्प्रतं न रोचन्ते मे । द्वयोराकाशपातालयोरिव तारतम्यदर्शनात् ।

इदं च व्याकरणदर्शनं पाणिनिसूत्रं कात्यायनवार्त्तिकं पातञ्जलमहाभाष्यं निरुक्तं प्रातिशाख्यं शिक्षां वाक्यपदीयं लघुमञ्जूषां च प्राधान्येनावलम्ब्य प्रावीवृतम् ।

**एतस्य दर्शनस्योपक्षेपः सामयिकः**

ननु सत्सु परमप्रतिभाप्राचुर्यप्रणीतेषु शाब्दिकनिबन्धेषु चर्वितचर्वणवद् व्यर्थोऽयं नव्यग्रन्थग्रथनप्रयास इति चेत् न, सुकुमारबुद्धीनां परीक्षाग्रन्थमात्राभ्यासशीलानां छात्राणां तादृशनिबन्धाध्यापनमात्रलब्धपाटवानामध्यापकानां चक्षुरुन्मीलनाय अन्य-दर्शनचर्चालब्धचातुरीकाणां शास्त्रिप्रवराणामाश्चर्यविस्फारितलोचनावस्थोत्पादक-चमत्काराय 'ग्रामं गच्छंस्तृणं स्पृशति' इति न्यायेनेषदवभासितसंशयाक्रान्तव्याकरणा-गमविषयाणामधिगतसर्वशास्त्रप्रमेयग्रामाणां पण्डितप्रवराणामेतद्विषयावबोधसौकर्याय पाश्चात्यविदुषां व्याकरणदर्शनीयविषयज्ञापनेन परमोपकृत्यै केवलं साधुशब्दसिद्धिरेव व्याकरणेनानुशिष्यते, न कश्चन दार्शनिकार्थविचारलेशोऽत्रास्तीति भ्रमविजृम्भिता-नामनल्पानां पण्डितकल्पानामविद्योत्सारणेन दृष्टिप्रदानाय स्वात्मनः सन्तुष्ट्यै गुरुवराणां चरणसरोरुहेषु समर्पणेन भृङ्गायमाणस्यैतस्य दर्शनस्य सम्पुष्ट्यै च प्रकृतप्रयत्नस्य साफल्यं बोध्यम् ।

अपि च महाभाष्ये विप्रकीर्णस्य मूलरूपेण तैरोहित्यच्छलेन विन्यस्तस्य वाक्यपदीये प्राञ्जलतया समुपपादितस्यापि प्रकृतप्रमेयस्य प्रतीकादिप्रदर्शनपरम्परया बीजव्यञ्जनाय पिण्डीभावेनाभीष्टोपहारीकरणाय चास्योद्योगस्य साफल्यमवधेयम् ।

**माधवाचार्येण पाणिनिदर्शनं न सम्यगुपन्यस्तम्**

यद्यपि च माधवाचार्येण सर्वदर्शनसंग्रहे[1] पाणिनिदर्शनमप्यन्यतमत्वेन न्यबन्धि; तथापि तत्र नैव कोऽप्यर्थो यथावन्निरूपितो येन प्रेक्षावतां जिज्ञासूनां लब्धपरम्परोत्कलिका शाम्येत् ।

**लघुमञ्जूषादिना च नास्य गतार्थता**

लघुमञ्जूषायां नागेशभट्टोऽपि बहून् विषयानधिकृत्य माधवाचार्यापेक्षयोत्तमां कोटिं नीत्वा तान् व्याख्यत्, परं तदपि नैव तादृशं प्रमोदास्पदमारोहति दर्शनान्तरीयसंस्कारेण लब्धसांकर्यतया स्वीयविषयाणां गह्वरान्धकारव्याप्तगुहायामिवोपलब्धेर्दूरापास्तत्वात् । वाक्यपदीयस्य चातिजटिलतयाऽशुद्धिबाहुल्येन च विषयावबोधनाक्षमत्वान्नैव विशुद्धतया स्वान्तामोदजनकत्वम् ।

**व्याकरणस्वरूपम्**

ननु किमिदं व्याकरणदर्शनं नाम ? किमस्य स्वरूपम् ? कश्चान्यैर्दर्शनैरस्य सम्बन्धः ? कश्च विषयः ? किं च फलम् ? कश्च सम्बन्धः ? को वाधिकारीति चिन्तायामुच्यते ।

परा-पश्यन्ती-मध्यमा-वैखरीतिभेदचतुष्टयेनाक्रान्तस्वरूपाश्चतस्रो वाचः सर्वत्रैव निगमागमादिषु समुपलभ्यन्ते । एतासामेव क्वचिद् व्याकृताव्याकृतेति भेदद्वयेन व्यवहारः । तत्र व्याकृतापदेन पश्यन्त्यादित्रय्याः, अव्याकृताशब्देन च शक्तिशक्तिमदादिभेदशून्यायाः पराया विचारो वेदेषु चर्चितः । तथा चैकैव परा[2] वाणी व्याकृताऽव्याकृतारूपभेदेन द्वेधा विभज्यते—**'नामरूपे व्याकरवाणि'**,[3] **'ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते'** इति ।

---

१. तत्र पाणिनिदर्शने प्रथमं तत्प्रयोजनाद्युपन्यासः, ततः स्फोटस्य साधनम्, ततः सत्तायाः स्वरूपम्, ततो द्रव्यं पदार्थः, ततो जातिः, ततः शब्दानुशासनस्य निःश्रेयससाधनत्वप्रतिपादनम्, एतावदेव पाणिनिदर्शनं माधवाचार्येण निबद्धम् । नहि तावता व्याकरणस्य कोऽप्यंशस्तेनोपस्थितः ।

२. सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमनभिष्यन्दमानाम् ।
उतान्ये विदुरन्यामिव च पूतां नानारूपामात्मनि सन्निविष्टाम् ॥
(वा० प० १।१, टीकायाम्)

३. छा० उ० ६।३।२ ।

'एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यान् दिव इति पितॄंस्तिरः पवित्रमिति ग्रहानशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजाः[१]', 'स मनसा वाचं मिथुनं समभवत्[२]' 'वागेव विश्वा भुवनानि[३]', 'वाग् वै ब्रह्म[४]', 'परावाचा तथाष्टमे[५]' इत्यादिश्रुतिभिः भूरादिमहाव्याहृत्युच्चारणपूर्वकतत्तत्सृष्टिप्रतिपादनपरैस्तत्रत्यैः कथानकैः ।

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः[६] ॥

इत्यादिस्मृतिभिश्च वाक्पूर्विकैव सृष्टिरवगम्यते । तत्र वाक्पदेन पश्यन्ती एव ग्राह्या, तस्या एव ओंकारो वेदः शब्दब्रह्मेत्यादिनामान्तराणि । तथा चोक्तम्—

आपः[७] पवित्रं परमं पृथिव्या अद्भ्यः पवित्रं परमं हि मन्त्राः ।
तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः[८] ॥

अत्र जलापेक्षया सामर्ग्यजुर्लक्षणानां मन्त्राणां पावित्र्योक्त्या ततोऽपि पावनत्वम् ओङ्कारस्यैवाङ्गीकर्त्तव्यम् । तथा च स्पष्टमेव व्याकरणोंकारयोः पर्यायता लभ्यते । एतच्च वाक्यपदीये बहुषु स्थलेषु स्पष्टमिति विस्तरभयान्नाधिकमिहोच्यते ।

---

१. शा० भा० १।३।८ ।  २. बृ० उ० १।२।४ ।  ३. वा० प० १।१२१ (टीकायाम्) ।

४. बृ० उ० ४।१।२ ।  ५. एतत्सर्वमथर्वशीर्षोपनिषदि सम्यक्प्रपञ्चितम् ।

६. म० भा० शा० प० २५३ ।

७. अस्यार्थः—पृथिव्या आपः पवित्रम्, अद्भ्य ऋग्यजुःसामलक्षणा मन्त्राः पवित्रम्, ततोऽप्योंकारापरपर्यायं व्याकरणमिति ।

परन्त्वयमर्थः सम्यक् स्वान्ते नावतरति, पञ्चानां भूतानां मध्ये द्वयोः क्रमेण पवित्र्योक्त्याऽवशिष्टानामपि क्रमोक्तेरत्याज्यत्वादिति—"ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायो सामवेद आदित्यात्" (ऐतरेयब्रा० ५-३२), "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥" (मनु० अ० १ श्लो० २३) इत्यादिश्रुतिस्मृतिभिरग्निवायुरविभ्य ऋग्यजुःसामोत्पत्तिश्रवणेन कार्यकारणयोरभेदोपचारेणर्ग्यजुःसामपदेन तत्कारणीभूतं भूतत्रयं गृह्यते । न च रवेरेव सामोत्पत्तिश्रुत्या आद्यभूताकाशस्य कारणत्वाभावादभेदोपचारेण कथं पूर्वसंशयापनोदनमिति वाच्यम्, रविपदेनाकाशस्यापि ग्रहणादत एव रौति शब्दं करोतीति व्युत्पत्त्या शब्दाश्रयत्वमेव तस्य प्रवृत्तिनिमित्तम् ।

वस्तुतस्तु रव्याकाशप्रकाशसूर्यादित्यादयः शब्दाः पर्याया एवासन् । आकाशते प्रकाशते इति मूलव्युत्पत्त्यनुरोधात् शब्दस्य ज्योतीरूपत्वस्य 'आख्यातोपयोगे' (पा० सू० १।४।२९) इति सूत्रभाष्यसम्मतत्वेन ज्योतिःशब्दयोरभेदेन तदाश्रयत्वस्याप्यभेदाच्च ।

८. वा० प० १।१४—टीकायाम् ।

### प्रकृतिप्रत्यययोर्वास्तविकं रूपम्

तत्रैतामेव वाचमवधीकृत्य प्रकृतिप्रत्ययादिविभागः[1] प्रारभ्यते। अत्र प्रकृतिपदेन माता, प्रत्ययपदेन च पिता गृह्यते। तथा च वक्ष्यमाणयुक्तिप्रामाण्यात् प्रकृतिप्रत्ययौ शक्तिशक्तिमन्तौ, चिज्जडौ, वाच्यवाचकौ शब्दार्थौ नामरूपे पश्यन्तीप्रतिभाप्रणवेत्यादयः शब्दा व्याकरणापरपर्याया एव। एतच्चान्ते स्फोटविचारे यथावसरं स्फुटीभविष्यदपि संक्षेपेणेह किञ्चिदुच्यते।

मातृरूपायां प्रकृतौ पितृस्थानीयस्य प्रत्ययस्य संसर्गमन्तरा अर्थप्रत्यायन-सामर्थ्याभावादसाधुत्वाच्च—**'न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्ययः'**[2] इति न्यायेन केवलायाः प्रकृतेर्नैव व्यवहारसाधकत्वम्। एतस्य मूलतत्त्वं तु पश्यन्त्यामेवाव-तिष्ठते। तत्रैव सर्वेषां प्रत्ययानां सर्वासां प्रकृतीनां च सम्भूतिस्थानम्। अर्थात् तस्या एव पश्यन्त्या रूपद्वयं चकास्ति व्याकरणागमसंस्कारसंस्कृतचेतसां विदुषाम्। एकं प्रकृतिरूपमुपादानकारणम्, अपरञ्च प्रत्ययरूपं निमित्तकारणम्।

### अर्थपरम्परापि तत्रानुस्यूता

इदं च परम्पराद्वयं पश्यन्तीमेव कामधेनुमाश्रित्य प्रवर्तते। तत्रैका प्रकृतिपरम्परा, अपरा च प्रत्ययपरम्परा। एतयोश्च परम्परयोरर्थपरम्पराऽप्यनुस्यूतैव व्यवतिष्ठते, शब्दार्थसम्बन्धस्य नित्यत्वात्। तथा चान्यतरस्य कारणस्याभावे नैव बीजरूपेण स्थित-स्याप्यर्थस्याभिव्यङ्ग्यत्वं सम्भवति।

---

१. 'जनिकर्तुः प्रकृतिः' (पा० सू० १।४।३०) इति सूत्रभाष्यादिपर्यालोचनया प्रकृतिपदेनो-पादानकरणम्। "अभावप्रत्ययालम्बना वृत्तिर्निद्रा" (योग० पा० १ सू० १०) इति योग-सूत्रस्थवाचस्पत्येन प्रत्ययपदेन निमित्तकारणं गृह्यते। तथा चोक्तम्—"त्रयी विद्या कामधेनुः सा स्त्री भाषाक्षराऽस्वरा" इति प्राधानिकरहस्ये श्लो० २२।

भारतप्रामाण्याच्चास्या गोरूपत्वमुक्तं वाक्यपदीयटीकायाम्—

(क) गौरिव प्रचरत्येका रसमुत्तमशालिनी।
दिव्यादिव्येन रूपेण भारती गौः शुचिस्मिता॥ इति।

(ख) स्वरूपज्योतिरेवान्तः परा वागनपायिनी*।
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते॥ इति। (वाक्य० १।१४३)

अपि च प्रकृतिशब्देन प्रधानं सत्त्वरजस्तमोरूपम्, प्रत्ययपदेन ज्ञानं पुरुषो वा। अत एव 'नहि केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः' इति प्रवादोऽप्येतन्मूलक एव मन्तव्यः। यावता हि प्रत्ययस्य ज्ञानस्य सान्निध्येन प्रकृतौ कश्चन क्षोभः सञ्जायते, अयस्कान्तसन्निहिते लौह इव, अतो द्वयोः पृथग्भावो न युक्तिसङ्गतः (स्वोपज्ञटीका)।

२. महाभाष्यम्—१।२।६४।

---

* 'सूक्ष्मा' इति च पाठः।

**पराया व्यवहारातीतत्वम्**

परायां वाचि तु नैव कश्चन विचारलेशोऽपि सम्भावनास्पदमारोहति, दृष्टस्वरूपायां तस्यामधिकारनिवृत्तेरुपदेशात् । तस्याश्च द्वैतत्वे तद्वैयर्थ्यापत्तेरद्वैतज्ञानेनैवाविद्यानिवृत्तेर्निर्णीतत्वात् ।

**पश्यन्त्यामेव शक्तिशक्तिमतोश्चर्चा कालाख्या स्वातन्त्र्यशक्तिस्तत्रैव**

एवं च पश्यन्त्यामेव शक्तिशक्तिमतोश्चर्चा । तस्या एव कालाख्या स्वातन्त्र्यशक्तिः, या ह्यन्यासां शक्तीनां स्फोरणे प्रभवति; अविद्यादयः शक्तयोऽपि तद्विजृम्भितमित्युपरिष्टात् प्रकटीभविष्यति । वाच्यवाचकविभागोऽपि तस्यामेव व्यवह्रियते, तत्रैव समापन्नस्य योगिनः 'सर्वे सर्वार्थवाचकाः'इति ज्ञानमुत्पद्यते, तस्या एव पश्यन्तीरूपेण सर्वशब्दबीजत्वात्, प्रतिभारूपेण च सकलार्थप्रसवत्वाच्च । तदवस्थायां वैयाकरणानां निखिलार्थसमुत्पादनसामर्थ्यमभिव्यज्यते[१] । एतत्प्रकाशेनैवान्ये प्रकाशाः प्रकाशन्ते, तयोर्द्वयोरग्निसूर्ययोः स्वप्रकाशने सामर्थ्याभावात् । तथा चास्माकं मते जातवेदसोऽपि न स्वतः प्रकाशकत्वम्, किन्तु एतत्पारतन्त्र्येणेति स्वप्रकाश्यत्वे तेजोदृष्टान्तस्य गतिर्व्यावहारिकदृष्ट्यैव समर्थनीया ।

वस्तुतस्तु जातं वेदो ज्ञानं यस्मादसौ जातवेदा इति व्युत्पत्त्या जातवेदः शब्दोऽपि मुख्यया वृत्त्या ज्ञानमूलागारे परमात्मन्येव वर्तते । अग्नौ तत्प्रयोगस्तु—

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।**
**एकं सद्विप्रा बहुधा वदन्त्यग्निं मित्रं मातरिश्वानमाहुः ॥[२]**

इति मन्त्रे अग्न्यादिशब्दानां परमात्मपरकत्वस्य व्यवस्थापितत्वात् समर्थनीयः ।

---

१. अत एव—

त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः ।
भवन्ति लीलाविधयश्च वैदिकास्त्वदीयगम्भीरमनोऽनुसारिणः ॥

—(स्तोत्ररत्नम्, यतिवरश्रीयामुनाचार्यप्रणीतम्, श्लो० २०) इत्यत्रापि यतिवरैर्भक्तानां सृष्ट्यादिकरणसामर्थ्यं समुज्जृम्भत इत्युक्तम् ।

अत्रायं निष्कर्षः—गुरूपदेशपद्धत्या समाहितमनसा स्थितं योगिनं "यमेवैष वृणुते" (यजु० ४०।४) इति रीत्या ज्ञानागारात्परमात्मन आयान्तो ज्ञानरश्मयः "ज्योतिर्वज्ज्ञानानि भवन्ति" (भाष्यम्० १।४।२४) इति पतञ्जलिप्रोक्तसिद्धान्तानुसारं ज्योतिःस्वरूपास्ते परमात्मानं नयन्ति । तत्र स्थितश्च योगी विश्वदर्शनसामर्थ्यसम्पन्नः सञ्जायते ।

इममर्थम् "उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम्" (यजु० ७।४१) इति श्रुतिः परिपुष्णाति । उद्वहन्ति—समाधापयन्ति ।

वस्तुतस्तु कृतोद्वाहमुमापतिम् (वा०रा०का० १ स० २३ श्लो०११) इति पाठे उद्वाहशब्दो विवाहार्थक एव मन्तव्यः; परन्तु अन्यत्र उद्वाहशब्दस्य समाध्यर्थकत्वेन न काचिदापत्तिः ।

२. ऋ० सं० १।१६४।४६ ।

**प्रतिभापश्यन्त्योर्विभाग ऐक्यं च**

यद्यप्यर्थदृष्ट्या प्रतिभायाः शब्ददृष्ट्या पश्यन्त्या उपयोगेन त्रयोर्भेदः प्रतीयते, तथापि शब्दार्थयोस्तादात्म्यस्वीकारान्नैव कश्चन प्रतिभापश्यन्त्योर्भेदोऽङ्गीकार्यः[1]। अत एव व्यवहारेऽर्थकोटौ प्रतिभापदेन पश्यन्त्या अपि बोधो निर्बाध एव। नामरूपे व्याकरवाणीति श्रुत्या नामरूपयोर्व्याकृत्यवस्थायामेव विभागो न तु ततः प्राक् तयोः कश्चन भेदः समवगम्यते। तत्र च नामपदेन शब्दो रूपपदेन च जातिलक्षणो द्रव्यलक्षणो वाऽर्थो बोद्धव्यः। स च वस्तुतो बौद्धः, बाह्यस्य तस्य स्वीकारे तन्नाशदशायां द्वयोः सम्बन्धस्यानित्यत्वप्रसङ्गात्। तेषां च नित्यत्वस्य **'सिद्धे शब्दार्थसम्बन्धे'**[2] इत्यनेन कात्यायनेनैव निर्धारितत्वात्। तयोश्च न कोऽपि भेद इत्युपरिष्टात् टिप्पण्यां द्रष्टव्यम्।

**प्रणवपदेनापि पश्यन्ती ग्राह्या**

प्रणवपदेनापि सैव ग्राह्या, तस्या एव शब्दोऽर्थः सम्बन्ध इति रूपत्रयेण भानम्। तथा चोक्तम्—**'एकमेवाद्वितीयम्'**[3], **'प्रणव एवैकस्त्रिधाऽभिव्यज्यते'**[4], **'एकमेवयदाम्नातं भिन्नं शक्तिव्यपाश्रयात्'**[5] इति श्लोकटीकायां हरिणा।

एवं च पश्यन्तीरूपव्याकरणज्ञानमन्तरा पराख्यब्रह्माधिगतिः कल्पकोटिशतैरप्यन्यैरुपायैर्दुर्लभैवेति सुगमोऽयं पन्थाः समवलम्ब्यतां वास्तविकीं मुक्तिमभीप्सुभिस्तत्त्वज्ञानकुशलैर्विद्वत्प्रवरैः।

अस्य च प्रणववादस्य सर्ववेदपारिषदत्वमत एव सर्ववादाऽविरोधित्वं च स्पष्टमेव वाक्यपदीये **'सत्या विशुद्धिः'**[6] इत्यादिना व्यवस्थापितम्। एतस्मादेव प्रणवाऽपरपर्यायाद् व्याकरणाद् भूतभाव्यन्ताः साङ्गोपाङ्गस्मृतिश्रुत्यन्ता विद्याविभागाः प्रभवन्ति। सर्वं च स्थूलं सूक्ष्मं जगत्तस्यैव विवर्तः परिणामो वा। अत एव—**'स हि सर्वशब्दार्थप्रकृतिः'**[7] इत्यादिना विधातुरित्यादिश्लोकव्याख्यायां हरिणा तस्य सर्वमूलत्वं सम्यङ् निर्णीतमिति विशेषजिज्ञासुभिस्तत एवावधार्यम्।

**वैयाकरणशिष्टयोरैक्यम्**

तथा चेदमेव मुख्यं व्याकरणशब्दवाच्यम्। तज्ज्ञानेनैव सर्वेषां साधुशब्दानां ज्ञानं निष्पद्यते इति—'पृषोदरादीनि यथोपदिष्टम्'[8] इति सूत्रे भगवता पतञ्जलिना ध्वनितम्। शिष्टवैयाकरणयोः पर्यायत्वं च स्पष्टीकृतम्। 'एषामेव शिष्टानां वचांसि प्रत्यक्षमपि प्रमाणमतिशेरते वेदवत् प्रामाण्यं चावहन्ति। अत एव शिष्टा मन्वाद्यपेक्षयापि प्रामाणिकत्वमारोहन्ति।

---

१. इयं प्रतिभा परायाः प्रकृतेरुत्पद्यते महत्तत्वतः पूर्वम्।

२. महाभाष्यम्—पस्पशाह्निकम्—पृ० ६। ३. छा० उ० ६।२।१। ४. वा० प० १।२।

५. वा० प० १।२। ६. तदेव—१।९।

७. वा० प० १।१०। ८. अष्टाध्यायी—६।३।१०९।

एतच्च **'न हि मन्वादयो महर्षयो न हि सर्वज्ञा वीतरागा वा', 'ज्ञानमस्मद्विशिष्टानाम्'** इत्यादिना ।[1] वाक्यपदीयकारिकाव्याख्यायां हेलाराजेन सिद्धान्तितम् । अयं चैकज्ञानेन सर्वज्ञानपक्ष आङ्ग्लभाषायां 'डिडक्टिव्' पदेन व्यवह्रियते ।

परमेतादृशपुरुषधौरेयस्य कल्पपादपसमत्वादाधुनिकसमये दुर्लभत्वेन लोकम्पृणत्वाऽसम्भवं समालोच्य परमकारुणिकेन भगवता दाक्षीपुत्रेणाष्टाध्यायीलक्षणं व्याकरणशास्त्रं सर्ववेदपारिषदं निरमायि । प्रातिशाख्यं तु तत्तच्छाखीयानां कृते तत्तन्महर्षिभिः प्रणीतम् ।

**अपोद्धारपदार्थः**

तच्च लोकप्रसिद्धपदार्थस्वरूपानुकूल्येन लौकिकानां वैदिकानां च शब्दानां साधुत्वाऽसाधुत्वे प्रतिपादयतीत्यखण्डाद् वाक्यार्थादपोद्धारपदार्थः प्रविभज्य व्याख्यातः[2] ।

---

१. वा० प० जातिस० ३।४६ ।

२. "अथ वर्णसमाम्नायः" इति सूत्रभाष्ये वैदिकाभरणे प्रातिशाख्यविषये यदुक्तं तत्रत्योऽयं सारोऽर्थः । तत्र हि शिक्षाव्याकरणेषु तु सर्वमुक्तमेवेति व्यर्थोऽयं प्रातिशाख्यप्रणयनप्रयास इति शङ्कायां सर्ववेदसाधारणानि लोकवेदसाधारणानि च कार्याणि तत्रोपन्यस्तानि सन्ति । यथा शिक्षायाम्—"अष्टषष्टिं वदन्त्येके चतुःषष्टिमथापरे" इति ।

"बहुलं छन्दसि" (सू० २।४।३६), "व्यत्ययो बहुलम्" (सू० ३।१।८५), "दृष्टानुविधिश्छन्दसि" [१।१।५] इत्यादौ कार्यस्वरूपमपि दुर्ग्रहं किमुत विषयविभागः । यद्यप्यविगीतशिक्षानुसारेण केषाञ्चिद् विधीनां शक्यो विषयविभागः प्रतिभाति, तथाप्यसौ न सर्वेषां शक्यः ।

अपि च अद्यत्वे नियमातिक्रमाद् ऋषयो न जायन्ते । इत्यनृषीणां कृतेऽवश्यं किञ्चिद् व्यवस्थापनीयम्, इत्यालोच्य परमकारुणिका महर्षयः प्रातिशाख्यम् व्यवस्थितानां शिक्षाव्याकरणोपदिष्टकार्याणां विस्पष्टोपदेशानि लक्षणानि प्रणयन्ति स्म, तन्नान्तरीयकतया तु तत्र तत्र स्पष्टोपदिष्टान्यपि कार्याण्यनुवर्ण्यन्ते । तानि प्रातिशाख्यानीत्याख्यायन्ते ।

इदमत्रावधेयम्—शिक्षा नाम षडङ्गयेकाङ्गीभूता । तथा च साधुत्वान्वाख्यायके व्याकरणे किं प्रयोजनम् ? कथं वा सा व्याकरणाङ्गभूतेति प्रश्न उदेति । किं च भगवतः पतञ्जलेः—"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति, प्रधानं च षट्स्वङ्गेषु व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति, पुराकाल एतदासीत् संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते" (महाभाष्य पस्प०) इत्याद्युक्त्या व्याकरणस्यैव सर्वतः प्रथममध्ययनं सिध्यति, न तु शिक्षाया इति चेदुच्यते; यद्यपि कण्ठरवेण भगवता पतञ्जलिना शिक्षायाः सर्वतः प्रथममध्ययनं नोदाहारि, तथापि साधुत्वान्वाख्यानं शिक्षाज्ञानमन्तरा सर्वथाऽसम्भवि ।

यथास्थानप्रयत्नोच्चारितशब्दघटितवाक्यानामेव प्रयोगस्य पुण्यजनकत्वात्, शिक्षायामेव यथावत् स्थानप्रयत्नादीनां स्वरूपप्रदर्शनात् । "संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते" इत्यस्य नेदं तात्पर्यम्, यत्ते शिक्षामनधीत्यैव व्याकरणमध्यैषत, किन्तु "वेद-

**मुख्यं प्रयोजनम्, साधूनामेव वाचकत्वं च**

एतेषां च शब्दानां यथावज्ज्ञानपूर्वके प्रयोगे **'एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति'**[1] इति श्रुत्या कामप्रपूर्त्तिरवगम्यते। तथा चैकस्यापि शब्दस्य सम्यग् ज्ञानपूर्वकमर्थेन सह सम्बन्धस्य साक्षात्कारे तदर्थोत्पादनसामर्थ्यमाविर्भवति शुद्धान्तःकरणानां महात्मनाम्।

एवमेव सर्वेषामर्थानां सम्यक् सम्बन्धज्ञाने सर्वार्थवाचकत्वं योगिदृष्ट्याऽव्याहतमिति विशेषतो वाक्यपदीये द्रष्टव्यम्। तच्च सर्वार्थवाचकत्वं साधुशब्दानामेवेत्यर्थेन तादात्म्यमपि तेषामेवाङ्गीकर्त्तव्यम्। यद्यपि च व्यवहारेऽर्थवाचकत्वमपभ्रंशानामपि दृश्यते, तथापि भ्रान्तिमूलकत्वेन तस्यावास्तवत्वमेवाङ्गीकर्तव्यम्। एतदेव मनसि निधाय पदमञ्जर्यां[1] हरदत्तमिश्रेणापि साधूनामेव वाचकत्वं व्यवस्थापितम्। न ह्यपभ्रंशैरर्थस्य तादात्म्यं येन तज्ज्ञानं साधु निष्पद्येत। पुराकल्पे त्वपभ्रंशैरसंकीर्णा वागासीदिति न तदानीमेतादृशव्याकरणनिर्माणमावश्यकमभूत्।

**अनृतद्वैविध्यम्**

एतेन पूर्वे व्यवहर्तारोऽन्यार्थबोधनेच्छया लोकान् वञ्चयितुमन्यं तदर्थाऽसम्बद्धं शब्दं प्रायुञ्जत। तेन च शब्दार्थसंबन्धत्यागात्तदर्थबोधनाक्षमत्वाद्वाचामनृतविप्रलम्भादिदोषसंकीर्णत्वमित्यनृतापभ्रंशयोरेकयोगक्षेमत्वादधुनाप्यर्थबोधनेच्छयाऽपभ्रंशशब्दप्रयोगे तत्प्रयोक्तृणामनृतवादित्वं सुस्पष्टमेव प्रतीयत इति। **"नानृतं वदेत्"**[2] इति

---

मधीत्य त्वरिता वक्तारो भवन्ति" (भा० पस्प० पृ० ५ पं० ९) इत्युक्त्या वेदाध्ययनान्तरीयकत्वमेव तस्या अनुमीयते। वेदाध्ययनार्थं यथास्थानप्रयत्नं वर्णोच्चारणशैलीशिक्षणस्यागतिकगतित्वात्।

अपि च "पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं वाक्यलक्षणाया वाचोऽर्थलक्षणम्" (न्यायभाष्यम्—१।१।५५) इत्यभियुक्तोक्त्या द्वयोरन्वाख्यायकयोर्मूलभूतवर्णान्वाख्यानं प्राथमिकमेव मन्तव्यम्। अतः शिक्षाज्ञानं सर्वेषां कृतेऽत्यन्तावश्यकमिति सर्वतः प्रथमं शिक्षाज्ञानमपेक्ष्यत इति सुधीभिर्विचार्यम्।

........प्रथमाः शब्दाः साधवः परिकीर्त्तिताः।
त एव शक्तिवैकल्यप्रमादालसतादिभिः॥
अन्यथोच्चारिताः पुंभिरपशब्दा इतीरिताः।
स्मारयन्तश्च ते साधूनर्थधीहेतवः स्मृताः॥

यद्यपि लोके गवादयो गाव्यादयश्च सममेव प्रयुज्यन्ते वाचकत्वाभिमानोऽपि सम एव तेषु लौकिकानां साधीयान् इत्यादिषु, तथापि गवादयोऽनादयः साधवस्त एव साक्षाद् वाचकाः (पदमञ्जरी १।१।७)।

१. महाभाष्यम्—६।१।४८। २. शब्रा० २।२।२।२०।

निषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं तेषां सिध्यत्येव । **'यथार्थं वाङ्मनसे यथादृष्टं यथानुमितं यथाश्रुतं तथा वाङ्मनश्चेति परत्र स्वबोधसंक्रान्तये वागुक्ता, सा यदि न वञ्चिता भ्रान्ता प्रतिपत्तिबन्ध्या वा भवेत्'**[1] इति योगभाष्येणापि अपभ्रंशस्याप्यनृतत्वमेव निश्चीयते ।

**अपभ्रंशप्रादुर्भावः**

एवमेव वक्तृवैगुण्यप्रयुक्तमप्यपभ्रंशत्वं कियतां शब्दानां वाक्यपदीये निर्णीतम् । तच्च दैव्या वाचः संकीर्णत्वमशक्ताऽभिधातृदोषप्रयुक्तमेव । सा चाशक्तिर्द्विविधा—अज्ञानाद् विप्रलम्भादिदोषाद्वाऽन्यार्थेऽन्यशब्दप्रयोगरूपा एका, अभिमतवायुसंयोगोत्पादनासामर्थ्यरूपा च द्वितीया । एतेनापभ्रंशद्वैविध्यमपि व्याख्यातम् । तथा चासाध्वपभ्रंशशब्दयोः पर्यायितैवेति सर्वं सुस्थम् ।

**शब्दसाधुत्वज्ञानपूर्वकयोगाभ्यासेनाभ्युदयः**

एतादृशसाधुत्वप्रतिपादनपरेऽस्मिन् शब्दानुशासने प्राप्तपाटवा महात्मानोऽपभ्रंशाऽसंकीर्णशब्दतत्त्वाभ्यासात् शब्दपूर्वकं योगमधिगम्य अर्थप्रणाल्या प्रतिभां शब्दप्रणाल्या पश्यन्त्यपराभिधां शक्तिं (सत्ताम्) सम्यगवबुध्याभ्युदयेन युज्यन्ते ।

**पाणिनेः शिष्टत्वविचारः**

यद्यपि च भगवतः पाणिनेस्तादृशशिष्टमध्ये[2] गणनाऽस्ति न वेति निश्चेतुं न पार्यते, तथापि स पूर्वाचार्यैः स्वयं च दृष्टान् साधून् शब्दानभिलक्ष्याष्टाध्याय्यां सूत्रद्वाराऽन्वशिषत् । तदनुयायिनश्चापरे कात्यायनप्रभृतयस्तेषां ज्ञानपूर्वके प्रयोगे धर्ममुपदिदिशुः । परन्तु—

**प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थिताः ।**

इत्यारभ्य

**तस्मादकृतकं शास्त्रं स्मृतिं वा सनिबन्धनाम् ।**
**आश्रित्यारभ्यते शिष्टैः शब्दानामनुशासनम् ॥**

---

१. योगसूत्रभाष्यम्—२।३० ।

२. **'अदूरभवश्च'** (४।२।७०) इति सूत्रे भाष्ये एकस्मिन् योगेऽनुवृत्तिर्भवति न वेति विचारणायाम्, एकयोगेऽप्यनुवृत्तिर्भवतीति प्रतिज्ञाय **'तदस्यास्त्यस्मिन्निति मतुप्'** (५।२।९४) इति सूत्रे द्विस्तच्छब्दग्रहणाभावेन प्रतिज्ञातमर्थमसाधयद् भगवान् पतञ्जलिः । तथा सति कथं **'तदधीते तद्वेद'** (४।५।५९) इत्यत्र द्विस्तच्छब्दग्रहणमिति शङ्कते ? **"प्रमादकृतमाचार्यस्य शक्यमकर्तुम्"** इत्युक्त्या न हि प्रमादराहित्यं भगवतः पाणिनेरायाति ।

इत्यन्तस्य वाक्यपदीयग्रन्थस्य समालोचनया पाणिनेरभ्रान्तत्वं संप्रदायपारम्पर्येणापभ्रंशाऽनाक्रान्तसाधुशब्दानुशासकत्वं चाऽवगम्यते। अत्रत्यं तत्त्वं विचारयन्तु गवेषकप्रवरा विद्वांसः[1]।

तथा चानादिपरम्परयाऽपभ्रंशैरसंकीर्णानां शब्दानामिदमन्वाख्यानं पाणिनीयं व्याकरणं सर्ववेदपारिषदं वेदितव्यम्।

एवं च कल्पितप्रत्ययवयवसंस्कारमात्रोद्देश्यस्यास्य शब्दब्रह्मणः स्वरूपं यथावन्निर्णीतम्, एतस्यावान्तरविषयविस्तरस्तु यथावसरमुपरिष्टात् करिष्यत इति तत एवावधार्यम्।

अपि च न केवलं पारमार्थिकस्यैव व्याकरणस्वरूपस्य साक्षात्कारेणाभ्युदयः, किन्तु आविद्यिकस्याऽप्येतस्याष्टाध्यायीलक्षणस्य व्याकरणस्य सम्यगवबोधे महताऽभ्युदयेन योगो भवति। तथा चात्र शास्त्रफलयोः साध्यसाधकभावः सम्बन्धः सुस्पष्ट एव। तथा चोक्तं वाक्यपदीये—

**तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।**
**तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते**[2]॥ इति।

**विशेषसामान्यभेदेन साधुत्वं द्विविधम्**

ते च साधवः शब्दा द्विविधा विशिष्टसाधुत्वकाः, सामान्यसाधुत्वकाश्च। तत्र विशिष्टानां प्रयोगे विशिष्टं फलमुत्पद्यते, सामान्यानां तु सामान्यमिति नियमः। एतेन—

**नाकमिष्टसुखं यान्ति चतुर्भिर्वाडवैः रथैः।**
**अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः**[3]॥

इति भाष्यस्थश्लोकोऽपि सङ्गच्छते।

**दर्शनान्तरापेक्षयाऽस्य विशेषः**

एवमनेकरूपभेदभिन्नं व्याकरणं सम्यगनवबुध्यमाना बहवो लौकिकाः शास्त्रसंस्कारमतयोऽपि नैव व्याकरणे कश्चनाध्यात्मविचारलेशोऽस्ति, ऋते प्रयोगसाधुत्वमिति वदन्ति। तच्च न युक्तम्, पूर्वोक्तयुक्तेर्वक्ष्यमाणग्रन्थपर्यालोचनाच्च।

ननु सत्सु अन्येषु आध्यात्मिकविचारपरेषु शास्त्रेषु व्यर्थमिदं व्याकरणदर्शनमिति चेत्, न एतस्यैहिकामुष्मिकोभयफलप्रसाधकत्वेन तेषां चैहिकफलोत्पादनसामर्थ्यविरहेणैतत्साफल्यस्य मन्दबुद्धेरपि सुप्रत्यक्षत्वात्।

---

१. एतेन शिष्टमध्ये पाणिनेर्गणनेरयायाति। परन्तु टिप्पण्यां प्रदर्शितेन भाष्यसन्दर्भेण तु न तथेति चेन्न, शब्दानां साधुत्वप्रतिपादनविषय एव शिष्टत्वस्याभ्युपगमात्। सूत्रप्रणयनविषये लाघवगौरवचर्चाप्रयुक्तप्रमादस्याकिञ्चित्करत्वात्।

२. वा० प० १।१३२।

३. महाभाष्यम्—३।१।४८।

**अर्थप्राधान्यमाश्रित्य न्यायवैशेषिकयोः प्रवृत्तिः**

अपि च शब्दार्थज्ञानानां मध्येऽर्थमेव प्रधानीकृत्य वैशेषिकदर्शने पदार्थस्वरूपज्ञानेन निःश्रेयसाधिगमो भगवता कणादेन समुपपादि। भगवान् गौतमस्तु वैशेषिकाभिमतान् पदार्थानाश्रित्य तदानीन्तनविप्रतिपन्नोक्तिनिराकरणपुरःसरं प्रतिवादिदिग्गजान् पराजिगीषुः पिठरपाकाद्यनेकाऽवान्तरभेदविलसितं वादाद्युपयोगिप्रक्रियाजटिलं पञ्चाध्यायीलक्षणं न्यायदर्शनं निर्बबन्ध[1]।

**ज्ञानप्राधान्येनान्येषां दर्शनानामवतरः**

ज्ञानमेव मूलतत्त्वमधिकृत्य सांख्ययोगवेदान्तशास्त्रेषु तत्तन्महर्षिभिः प्रक्रियाभेदेन परमपुरुषार्थतया प्रस्थानभेदाः समाम्नाताः।

व्याकरणतन्त्रयोस्तु शब्दब्रह्मैव प्रधानं तत्त्वं समाश्रित्य तदुपयोगिपदार्थविभागसमुद्भासितानि निगमागममूलकानि बहूनि ग्रन्थरत्नानि समधिगतयाथातथ्यैः शिष्टैः प्रणीतानि सन्ति। परं तन्त्रागमे शक्तिशक्तिमतोर्मध्ये शक्तेरेव प्राधान्यं व्यवस्थाप्य निखिलसाधनप्रक्रिया निर्वाह्यते। व्याकरणागमे तु जन्मादिमयीभिः शक्तिभिरुपचरितनानात्वामविद्यापरपर्यायां कालाख्यां स्वातन्त्र्यशक्तिं गौणीकृत्य प्राधान्येन शब्दब्रह्मविचारः कृत इति सर्वदर्शनैरस्य बहूनां विषयाणां समानत्वेऽपि अन्यदर्शनापेक्षयाऽयमप्यत्र विशेषः। अन्ये च बहवो विशेषा यथावसरमुपरि स्फुटीभविष्यन्ति विस्तरभयान्नेह ते तन्यन्ते।

**द्वयोरवस्थयोरस्योपयोगः**

अपि चापूर्वमेवेदं पाटवं यद् व्यवहारदशायामपि साधुशब्दजन्याऽभ्युदयं प्रयोक्तारः समासादयन्ति व्यवहारसिद्धिं चेति। तथा च सकलदर्शनानां शीर्षण्यतामारूढमेतद्दर्शनमिति—

---

१. 'एवमर्थेऽपि ये वादिनां नानापदास्तेऽपि तत्तच्छास्त्रवासनावशात् कल्पिता एव। यथा अभिहितान्वयः, अन्विताभिधानमिति। संसर्गो वाक्यार्थः संसृष्टाः पदार्थाः स इति। जातिः पदार्थो व्यक्तिर्वेत्यादि। अत एव घट इति प्रयुक्ते वैशेषिकोऽतिरिक्तमवयविनं बुध्यते। सांख्यो गुणसमूहम्, बौद्धादिः परमाणुसमूहम्। यद्यपि ऋषीणां दर्शनं तत्त्वविषयं भवति, तथापि तत्त्वभूतेन वस्तुना व्यवहारासम्भवाद् व्यवहारकाले तेऽप्यदृष्टतत्त्वसदृशा नानाप्रकारैर्व्यवहरन्ति इति न तद्वचसाऽपि पदपदार्थसत्यत्वं मन्तव्यम्' (मञ्जूषा० पृ० ४१३)।

हरिणाऽप्युक्तम्—

**ऋषीणां दर्शनं यच्च तत्त्वे किञ्चिदवस्थितम्।**
**न तेन व्यवहारोऽस्ति न तच्छब्दनिबन्धनम्॥** (वा० प० २।१४१)।

**यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः ।**
**तथैव लोके विद्यानामेषा विद्या परायणम् ।**
**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥**
**अत्रातीतविपर्यासः केवलामनुपश्यति[1] ।**

इति वाक्यपदीये भर्तृहरिणाऽभ्यधायि । अत्रत्यो विशेषो मोक्षप्रकरणे स्फुटीभविष्यति प्रतिमायाम् ।

**व्याकरणागमसम्प्रदायविच्छेदः**

ननु यदि वास्तवेन व्याकरणमपि दर्शनमेव तर्हि कथं तत्सम्प्रदायविच्छेदो येन तत्पदार्थाः स्वप्नसम्पदिवावभासन्त इति चेत्, शृणु—कालचक्रपरिभ्रमणवशात् सौकर्येणोदरपूरणपर्याप्तवृत्तिलाभान्वेषिभिरलसैः संस्कृतभाषानिबद्धसन्दर्भस्थशब्दस्तेयलब्धप्रावीण्यैरविशुद्धमानसैर्मानवैः संग्रहपठनपाठनपरम्परायां क्षयं गमितायां महाभाष्यार्थबोधनेऽप्राप्तसामर्थ्यानामनादृतज्ञानवृद्ध्युपायानां दोषेण महाभाष्ये च नाशं नीतेऽयं व्याकरणागमो ग्रन्थमात्रे व्यवस्थितोऽभवत्, सोऽपि दाक्षिणात्येष्वेवेति कलावपि मध्ये मध्ये सत्त्वाविर्भावस्य स्मार्तप्रामाण्येन सुव्यवस्थापिततया निर्माणचित्तमधिष्ठाय **चन्द्राचार्य-वसुरात-भर्तृहरि**प्रभृतयः सिद्धा इमं व्याकरणागममुत्तमाऽधिकारिभ्यः शिष्येभ्यः समुपदिदिशुरिति कल्प्यते ।

स च सम्प्रदायः परां काष्ठां नीतोऽपि **पुण्यराजहेलाराज**प्रभृतीन् शिष्यप्रशिष्यान् समासाद्य समयशक्तिप्राबल्येन सत्पात्रानवाप्त्याऽपरेण वा केनचिद्धेतुना निष्ठामुपागमत् ।

यद्यपि **पुण्यराज-हेलाराजादयोऽपि** न हि तादृशविशुद्धान्तःकरणाः तथापि कस्तूरिकावासितपटन्यायेन कस्तूरिकाऽपनयनेऽपि तद्गन्धस्य तेषु सत्ताऽऽभासते । अधुना विदुषां तन्मार्गात् प्रच्युतत्वान्न कोऽप्यर्थस्तेषां बुद्धाववभासतेऽपि । यावत् सा परम्परा पुनरुज्जीविता न भविष्यति, तावद् यथार्थं पाण्डित्यं खपुष्पायमाणमेव मन्तव्यम् ।

पूर्वे विद्वांसोऽनधिगतयोगमार्गशैलीका अपि कर्णाकर्णिकया तन्मत्वैव बद्धश्रद्धास्तद्गवेषणे चेष्टमाना अदृश्यन्तेति तेषां ग्रन्थेषु तादृशो भावः स्फुटीभवति ।

**योगमार्गे षण्णां चक्राणां भेदः**

यथा किरातार्जुनीये द्वैतवने वसतः पाण्डवानुद्दिधीर्षुर्भगवान् वादरायणो दीनवत्सल आगत्य धनञ्जयाय मन्त्रं दत्त्वा योगं च सद्यो विततारेति भारविरुदटङ्कयत् । स च योगः षट्चक्रभेदनमन्तरा न हि अभीष्टसाधनाय प्रभवेत्, तानि च षट्चक्राणि

---

१. वा० प० १।१६–१७ ।

मूलाधारादीनि आज्ञान्तानि योगमार्गे प्रतिपादितानि सन्ति । तद्भेदनं च गुरूपदेशद्वारा चिरकालमभ्यासं विनाऽसम्भवि । तान्त्रिकाणां सिद्धान्ते तु बिन्द्वादीनि महाबिन्द्वन्तानि अपराण्यपि दश विद्यन्ते चक्राणि । एवं शान्तमतानुयायिनां मार्गे पञ्चदश स्थानानि सन्ति ।

वैदिकमार्गे तु चतुर्णामेव चक्राणां भेदनेन उत्तमस्य ज्योतिष उपलब्धिर्भवति । तानि च तमः, स्वः, उत्तरो देवः, दिव्यः सूर्य इतीमानि—

**उद्वयं तमसः परि स्वः पश्यन्त उत्तरम् ।**
**देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्[1] ॥**

इति मन्त्रेण सूचितानि सन्ति ।

**आगममार्गे तु सद्यः सिद्धिः**

आगममार्गपारङ्गतानां व्यासशुकादीनां कृते तु चक्रभेदनमन्तरापि योग्येभ्यः शिष्येभ्यस्तपःप्रभावात् सद्यः प्राप्यस्थानप्रापणं पुरातनेषु ग्रन्थरत्नेषु श्रूयते । तथा च महाभारतीयामेव कथामवलम्ब्य—

**निर्याय विद्याथ दिनादिरम्याद् बिम्बादिवार्कस्य मुखान्महर्षेः ।**
**पार्थाननं वह्निकणावदाता दीप्तिः स्फुरत्पद्ममिवाभिपेदे ॥**
**योगं च तं योग्यतमाय तस्मै तपःप्रभावाद् वितातार सद्यः ।**
**येनास्य तत्त्वेषु कृतेऽवभासे समुन्मिमेलेव चिराय चक्षुः[2] ॥**

इत्यादिना भारविर्व्यासस्य अर्जुनाय सद्यो योगोपदेशं व्याजहार । इत्यलमप्रासङ्गिकेन । प्रकृतमनुसरामः ।

तथा चास्मिन् मदीये व्याकरणदर्शने त्रयोंऽशाः समुपात्ताः स्युः—प्रथमा-भूमिका, द्वितीया-पीठिका, तृतीया-प्रतिमा ।

**भूमिकायां पीठिकाप्रतिमयोरर्थः संक्षिप्तः**

तत्रेयं प्रथमा भूमिका वर्तते । अस्यां हि पीठिकाप्रतिमयोः सूत्ररूपेण किमुत ततोऽपि संक्षेपेणार्थ उपन्यस्तो भविष्यति । यद्यप्याकारविषये भवेद् भेदस्तथापि तत्तौल्यं तु कियतांशेन स्थास्यत्येव सर्वत्र ।

**देवागारद्वारस्याष्टांशोनस्य यस्तृतीयोऽशः ।**
**तत्पिण्डिकाप्रमाणं प्रतिमा स्यात् तद्द्विगुणपरिमाणा[3] ॥**

इति वराहमिहिरोक्त्या पीठिकाया द्विगुणा प्रतिमा विहिताऽस्ति, परमत्र तादृशं परिमाणं नावलम्ब्यते । प्रायेण पीठिकायां शिक्षाया एव प्राधान्यम्, प्रतिमायां तु मुख्यं दर्शनमेव प्रकटीभविष्यति ।

---

१. शु० यजुर्वेदः—२०।२१ । २. किरातार्जुनीयम्—३।२५–२६ ।
३. बृहत्संहिता—५७।३ ।

**व्याकरणदर्शनस्य किं मूलभूतं वस्तु**

एतच्च व्याकरणदर्शनं प्रस्तूयते, तत्रास्य दर्शनस्य किं मूलभूतं भविष्यतीति दर्शयितुमुचितं प्रतिभाति। तत्र प्रथमं पाणिनीयं व्याकरणं सर्ववेदपारिषदम्, द्वितीयस्तु प्रातिशाख्यग्रामः, तृतीयाः शिक्षासरण्यः[1], चतुर्थं निरुक्तम्। एषा चतुष्टयी व्याकरण-पदेन ग्राह्या। उक्तं च निरुक्ते यास्केन—**"व्याकरणस्यैव कार्त्स्न्यं निरुक्तं स्वार्थ-साधकं च[2]।"** तच्च खिलपदेनाप्युच्यते। यथा महाभारतस्य खिलो हरिवंशः, तथैव व्याकरणस्य खिलोंऽशो निरुक्तम्। शिक्षामन्तरा तु वर्णोच्चारणमेव न सम्भवेदिति सर्वतः प्राथम्यमेव तस्या व्याकरणेऽपेक्ष्यते। प्रातिशाख्यं व्याकरणं तु तत्तच्छाखाभेदेन भिद्यत इति यथार्थं नामास्य व्याकरणस्य प्रातिशाख्यमिति[3]।

---

१. तृतीयाः शिक्षासरण्य इति शिक्षाविषये किञ्चिद् विचार्यते। प्रायो हि शिक्षादर्शनेन न हि ताः प्राचीनाः प्रतीयन्ते। यतो हि वाक्यपदीये—'विभजन् स्वात्मनो ग्रन्थीन्' (वा० प० १।११६) इत्यादिश्लोकेषु शिक्षामतभेद एवोद्धृतः, किञ्च तत्रैव टीकायाम्—"नाभिप्रदेशात् प्रयत्नप्रेरितो वायुरूर्ध्वमाक्रामन्नुरस्यादीनां स्थानानामन्यतमं स्थानमभिहन्ति। ततः शब्द-निष्पत्तिः इत्यादि शिक्षाकाराणां मतभेदप्रबन्धोऽनुगन्तव्यः" इत्याद्युक्तिभिः "इत्येवमादि प्रतिशाखं शिक्षासु भिन्नमागमदर्शनं सर्वं प्रपञ्चेन समर्थयितव्यम्" इत्याद्युक्तिभिश्च तथैव प्रतीयमानत्वात्।

किञ्च वाक्यपदीयटीकायामेव "विभजन्" (वाक्य० १।११६) इति कारिकायाम् "बहुधा शिक्षासूत्रकारभाष्यकारमतानि दृश्यन्ते" इत्यस्य च टीकायां "भाष्यकारमतानि इति प्रतीके शिक्षासूत्रकारमतस्योक्तत्वात् शिक्षाणामेव ये भाष्यकारास्ते गृह्यन्ते" इत्युक्त्वाऽपि शिक्षापदेन प्रातिशाख्योक्तैव शिक्षा ग्राह्या, तत्रैव भाष्याणां दृश्यमानत्वात्।

अपि च प्रातिशाख्यस्य शिक्षापदेन व्यवहारः शौनकेन **"शास्त्रापवादात् प्रतिपत्ति-भेदान्निन्दन्त्यकृत्स्नेति च वर्णशिक्षाम्।"** (ऋक्० प्रा० प० १४।६८) इति सूत्रे स्वयमेव कृतः **"सैतेन शास्त्रैर्न विशिष्यतेऽन्यैः कृत्स्नं च वेदाङ्गमनिन्द्यमार्षम्"** ( ऋक्० प्रा० प० १४ सू० ६९) इति सूत्रस्य भाष्ये **"शिक्षैतेनैव विधानेनान्यैः शास्त्रैर्न विशिष्यते"** इति चोक्तम्।

"षट्सु वेदाङ्गेष्विदमप्येकमङ्गम्। कल्पो व्याकरणं निरुक्तं शिक्षाच्छन्दोविचिति-ज्योतिषामयनम् इति" इत्युक्तौ शिक्षापदेन ऋक्प्रातिशाख्यस्य कण्ठरवेण ग्रहणं च।

२. निरुक्तम्—१।१५।१।

३. एतानि प्रातिशाख्यानि पाणिन्यपेक्षयाऽवरकालभावीनि मन्तव्यानि ऋक्प्रातिशाख्ये (१३।३१) व्याडिनामग्रहणाद्, यजुःप्रातिशाख्यस्य तु कात्यायनप्रणीतत्वात्।

ए, ओ, ऐ, औ, इत्येवं सन्ध्यक्षरपाठ ऋक्प्रातिशाख्यमतेन प्रतीयते **"युजोरुकार इति शाकटायनः"** (१३।३९) इत्यत्र युजोर्द्वितीयचतुर्थयोरित्यनेन तथैव पाठात्। तत्रैव (ऋ० प्रा० सू० ३८) भाष्ये यथा **"अन्यान्यक्षराणि स्वयमुत्पन्नानि न तथा एकारादीनि। यतो हि द्विस्थानता एषाम्"** (ऋक् प्रा० प० १३ सू० २८ भाष्यम्) अत्रेयं शङ्का—एवं तु

**'सर्ववेदपारिषदं हीदं शास्त्रं तत्र नैकः शक्यः पन्था आस्थातुम्'**[1] इति पतञ्जल्युक्त्या सर्वेषां वेदानामिदं साधारणं व्याकरणं पाणिनीयं जागर्ति।

अयं हि भगवान् पाणिनिः—**आपिशलि-काश्यप-गार्ग्य-गालव-चाक्रवर्मण-भारद्वाज—शाकटायन-शाकल्य-सेनक-स्फोटायनानामे**कादशानां वैयाकरणानां मतानि संकलय्य ततः सारमादाय अष्टाध्याय्यात्मकं ग्रन्थं व्युत्थितायां दशायां निरमासीत्।

---

वकारस्यापि द्विस्थानत्वान्न स्वयमुत्पन्नत्वं स्यात्। एवमेव ञमङणनानामपि मुखनासिकभवत्वादेकवर्णत्वं न स्यादिति। अत्रोच्यते—यद्यपि **"वकारस्य दन्तोष्ठम्"**, **"दन्त्योष्ठ्यो वः स्मृतोबुधैः"** इत्यादुक्त्या उभयस्थानत्वं प्रतीयते, तथापि **'ओष्ठान्ताभ्यां दन्तैर्यकारे'** (तै० प्रा० अ० २ सू० ४३) इत्यनेन सूत्रेण केवलम् अधरोष्ठस्य बाह्य आभ्यन्तरश्च अन्तःस्थानमिति ज्ञेयम्।

अनेन सूत्रेण ओष्ठ एव स्थानम्, दन्तास्तु करणम् (अन्येषां तु यत्र स्पर्शनं तत्स्थानम्) (तै० प्रा० अ० २ सूत्र ३३)।

आभ्यां सूत्राभ्यामन्येषां व्यञ्जनानां यत्र स्पर्शनं तत्स्थानम्, येन स्पर्शयति तत् करणम् इति सिध्यति **"येन स्पर्शयति तत्करणम्"** (तै० प्रा० अ० २ सू० ३४)।

एवं सति **'ओष्ठान्ताभ्यां दन्तैर्वकारे'** (तै० प्रा० अ० २, सू० ४३) इति सूत्रभाष्ये दन्तैरिति सप्तम्यर्थे तृतीया उत्तरदन्तेष्वित्यर्थः। वकारोत्पत्तौ स्वभावतोऽधरोष्ठस्याभ्यन्तरोऽन्तःकरणं भवति, यत्र त्वसौ ओष्ठोपसंहारयोरोष्ठ्यं स्वरयोर्मध्यमवर्ती भवति तत्र सामर्थ्याद् बाह्यमन्तःकरणम्। यथा—**"ध्रुवोऽसि, तया देवास्सुतमाबभूवुः"** (तै० स० १–६–२ तै० स० ४–१–२) इति।

एवं यकारादीनां चतुर्णां करणान्तव्यापारनिष्पाद्यत्वाद् अन्तस्था इत्याख्या इति तद्भाष्ये दन्तैरिति सप्तम्यर्थे तृतीया, इति यदुक्तं तन्न सम्यक्, चतुर्णामन्तःस्थानां स्थानचतुष्टयस्यैव युक्तियुक्तत्वाद् वकारस्य ओष्ठस्थानतैव सिध्यति। अपि च वकारस्यैव संप्रसूततया उकाररूपत्वापत्तौ ओष्ठ्यस्य उकारस्य स्वकारणस्थानत्वमेव युक्तियुक्तं प्रतीयते किं च **"ओष्ठाभ्यां पवर्गे"** (तै० अ० २ सू० ३९) इति सूत्रेण उत्तरोष्ठस्य यथा पवर्गस्थानत्वम्, तथैव वकारस्यापि अधरोष्ठान्तःस्थानत्वं स्वरसतः समायाति। अत्रत्यो विशेषः पीठिकायां द्रष्टव्यः।

ञमङणनविषये तु द्विस्थानत्वेऽपि न वर्णद्वयात्मकत्वम्, मुखभवस्थानजन्यत्वे नैव वर्णद्वयात्मकत्वस्वीकाराद् नासिकाया मुखबाह्यत्वात्। किञ्च ऋक्प्रातिशाख्ये **"शेष ओष्ठ्योपवाद्य नासिक्यान्"** (प० १ सू० ४७) इति सूत्रेण वकारस्य केवलम् ओष्ठः स्थानमिति द्विस्थानत्वाभावात् स्वतन्त्रवर्णत्वम्, न तु सन्ध्यक्षराणामिव सन्धिजत्वम्।

१. महाभाष्यम्—२।१।५८।

**स्फोटस्मर्त्ता स्फोटायनः**

अत्रत्यः स्फोटायन एव स्फोटस्य उद्भावकः प्रतीयते। नायं स्फोटस्यापत्यम्। तथा सति नडादित्वात् फकि अश्वादित्वात् फञि वा स्फोटायन इति स्यात्। यद्यपि नडादिगणे स्फुटशब्दपाठो दृश्यते, ततः फकि स्फोटायन इति रूपं सिध्यति, तथापि ओकारघटितपाठस्य भ्रान्तिमूलकत्वकल्पने मानाभावः। तथा च स्फोटस्वरूपम्। स्फोटायन[1] एव स्फोटस्य स्मर्ता सिध्यति। स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोटः शब्द इत्यायाति।

न च स्फोटः केवलं वर्णात्मकस्थल एव भवतीति वाच्यम्।

**ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।**
**अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः॥[2]**

अपरमपि—

**"यथा भेर्य्याघातो भेरीमाहत्य कश्चिद् विंशति पदानि गच्छति, कश्चित् त्रिंशत्, कश्चिच्चत्वारिंशत्। स्फोटस्तावानेव भवति ध्वनिकृता वृद्धिः[3]"** इति भाष्योक्त्या अव्यक्तस्थलेऽपि तत्स्वीकारात्। किं च शब्दस्यापि प्रातिपदिकार्थत्वेन ध्वन्यात्मकेऽपि शब्दरूपार्थस्य सत्ता नापह्नोतुं शक्यते।

**वृत्तिभेदेन कालभेदः**

ननु 'स्फोटस्तावानेव भवति[4]' इति भाष्योक्त्या एकमेव स्तोत्रं कश्चन एकया घटिकया पठति, कश्चन सपादघटिकया, कश्चन द्व्यर्धघटिकया, कश्चन घटिकाद्वयेनेति यथाकालमनुच्चारयतां तेषामापतितः प्रत्यवायः पातित्यप्रयोजकः स्यादिति चेत्, न, द्रुतामध्यमाविलम्बिताभेदेन कालभेदस्य शास्त्रानुमोदितत्वात्। आसां वृत्तीनां स्वरूप-विचारः पीठिकायां भविष्यतीति तत एव द्रष्टव्यः।

**अष्टाध्यायीस्वरूपम्**

प्रसङ्गवशादत्र पाणिनीयाष्टाध्यायीविषये किञ्चिदुच्यते। अस्यामष्टाध्याय्यां न हि सर्वाण्येव सूत्राणि पाणिनिनैव निर्मितानि; किन्तु पूर्वाचार्यै रचितानि सूत्राणि पाणिनिनाऽविकलानि समुपन्यस्तानि। तथाहि **'जात्याख्यायामेकस्मिन् बहुवचनमन्यतर-**

---

१. अत एव लघुमञ्जूषायाम् उपसंहारे तृतीयश्लोके—

सर्वतन्त्रार्थतत्त्वज्ञः सर्वत्र च निबन्धकृत्।
वैयाकरणनागेशः स्फोटायनऋषेर्मतम्॥
परिष्कृत्योक्तवांस्तेन प्रीयतामुमया शिवः। (लघुमञ्जू० पृ० १७३)

इत्यादिना स्फोटायन ऋषिः स्फोटसिद्धान्तसमर्तेत्यायाति।

२. महाभाष्यम्—१।१।७०। ३. तदेव। ४. महाभाष्यम्—१।१।७०।

**स्याम्**[१]**, 'जातेरस्त्रीविषयादयोपधात्**[२]**', 'सप्तम्यधिकरणे च**[३]**', 'अधिकरणैतावत्त्वे च**[४]**', 'कर्तरि कर्मव्यतिहारे**[५]**', 'कर्मण्यण्**[६]**', 'वोतो गुणवचनात्**[७]**', 'गुणवचनब्राह्मणादिभ्यः कर्मणि च**[८]**', 'आद्‌गुणः**[९]**'**, इत्यादीनि सूत्राणि नह्येकार्थकानेव तत्तच्छब्दानुपादाय प्रवृत्तानि सन्ति। किं नाम वैयाकरणस्यापि निकाये शब्दानामेतादृशोऽभावः सञ्जातो येन अनेकार्थानिव शब्दान् गृहीत्वा अध्येतॄन् एतादृशे शङ्कापङ्के पातयितुं प्रयतेत आचार्यः। एतद्दोषपरिमार्जनाय—**'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्**[१०]**', 'उभयगतिः पुनरिह भवति**[११]**'** इत्यादीनि वचनानि भाष्यकारादिभिराश्रितानि भवन्ति। यदि नाम भगवान् पाणिनिः स्वयमेव सर्वाणि सूत्राणि निरमास्यत्, तर्हि नैवंविधानि कोटिद्वयावगाहिपदार्थजटिलानि सूत्राणि उपन्यासिष्यत्।

यद्यपि एतद्‌घटकानां गुणादिपदार्थानां विचारः प्रतिमायां भविष्यति, तथापि संक्षेपतोऽत्र प्रसङ्गप्राप्तं द्रव्यं किञ्चिद् विचार्यते। सूत्रे महाभाष्ये च अधिकरणशब्द आधारवाचकत्वेन **'सप्तम्यधिकरणे च**[१२]**'** इत्यादौ प्रयुक्तोऽस्ति। **'अधिकरणैतावत्त्वे च**[१३]**'** इति सूत्रे **'सरूपसूत्रे**[१४]**', 'अधिकरणगतिः साहचर्यात्'** इति वार्तिके **'नैको द्रष्टानेकाधिकरणस्थमादित्यं युगपदुपलभते**[१५]**'** इति महाभाष्ये च अधिकरणशब्दो द्रव्यापरपर्यायः प्रयुज्यते।

अत्रेयमाशङ्का—किं द्रव्यशब्दोऽधिकरणार्थकः सूत्रकाराभिमतोऽस्ति न वा? यतो हि **'द्रव्यं च भव्ये**[१६]**'** इति सूत्रे द्रव्यशब्दो द्रुशब्दाद् इवार्थे यति निष्पद्यते। स च भव्यार्थकः। एवं स्थितौ द्रव्यशब्दस्याधिकरणापरपर्यायित्वं नैव सिध्यति, इत्येव तदुत्तरं देयम्। एतावताऽनुमीयते यद् द्रव्यशब्दस्याधिकरणार्थकत्वं वार्तिककारानन्तरमेव प्रसिद्धमिति। वार्तिककारो हि वैशेषिकैः संकेतितं द्रव्यशब्दस्य क्षित्याद्यर्थकत्वमभ्युपगम्य **'द्रव्याभिधानं व्याडिः'** इति सरूपसूत्रे प्रायुङ्क्त। वैशेषिकात्पूर्वं तु गुणाश्रयत्वादधिकरणपदेनैव क्षित्यादीनां व्यवहार आसीत्, अत एव क्षित्यादीनाम् अधिकरणपदवाच्यतैव पौर्वकालिकीति सिद्धम्। अयं विषयः (द्रव्यपदवाच्यतारूपः) प्रतिमायां प्रकटयिष्यते।

---

१. अष्टा० १।२।५८।
२. तदेव–४।१।६३।
३. तदेव–२।३।३६।
४. तदेव–२।४।१५।
५. तदेव–१।३।१४।
६. तदेव–३।२।१।
७. तदेव–४।१।४४।
८. तदेव–५।१।१२४।
९. तदेव–६।१।८७।
१०. महाभाष्यम्–१।१।२।
११. तदेव–१।१।२३।
१२. अष्टा० २।३।३६।
१३. तदेव–२।४।१५।
१४. तदेव–१।२।६४।
१५. महाभाष्यम्–१।२।६४।
१६. अष्टा० ५।३।१०४।

**शब्दस्वरूपम्**

तत्र कोऽयं शब्द इति जिज्ञासायां भाष्यमतमुपन्यस्ते। भाष्ये हि प्रथमं पस्पशाह्निके **'अथ गौरित्यत्र कः शब्दः'** इति प्रश्ने द्रव्यस्य क्रियाया गुणस्य आकृतेश्च शब्दत्वमाशङ्क्य प्रत्याख्याय च **"येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति, स शब्दः। अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते**[1]" अत्र येनोच्चारितेनेत्यस्य प्रकाशितेनेत्यर्थसत्त्वात् प्रथमलक्षणे स्फोटः शब्द इति सूच्यते, अथवेत्यनेन तु ध्वनिः शब्द इति निर्दिश्यते। तथा च—

**ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।**
**अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः॥**[2]

इति तपरसूत्रभाष्येण उभयोरपि शब्दसम्बन्धितया तयोरेवात्रोपन्यासः। तथा च प्रथमम् आन्तरः शब्द उच्यते। अथवेत्यनेन तु बाह्यो ध्वन्यपरपर्यायः। सोऽपि ध्वनिर्द्विविधः—प्राकृतो वैकृतश्च।

तत्र—

**शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।**
**वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते॥**[3]

इति स्वोपज्ञटीकायां भर्तृहरिणोपन्यस्तायाः संग्रहकारिकाया बलेन तट्टीकासारार्थग्रहणेन च स्फोटध्वन्योर्भेदः प्रदर्श्यते।

**एकस्यैव स्तोत्रस्य पठने कालवैविध्ये कारणम्**

ध्वनिर्द्विविधः प्राकृतो[4] वैकृतश्च। तत्र येन विना अनभिव्यक्तं स्फोटरूपं न परिच्छिद्यते, स प्राकृतः। येन अभिव्यक्तं स्फोटरूपं पुनः पुनरविच्छेदेन प्रचिततरं कालमुपलभ्यते, स वैकृतः। एवं च वर्णविषये द्विविधः कालभेदः। प्रथमस्तु अपचितप्राकृतध्वनिनिमित्तो ह्रस्वः, प्रचितप्राकृतध्वनिनिमित्तो दीर्घः, प्रचिततरप्राकृतध्वनि-

---

१. महाभा० पस्पशाह्निकम्। २. तदेव—१।१।७०। ३. वाक्यपदीयम्—१।७७।

४. तथा चोक्तं वाक्यपदीये—

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥ (वा० का० १२ श्लो० १०२)।

क्वचिद् उद्योते च 'वर्णस्य', इति पाठः। तथा चोक्तम्—

तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु।
वृत्तिकालः स्वकालश्च नादभेदाद् विभज्यते॥

तथा टीकायां पुण्यराजः—"नादकृतपौर्वापर्यव्यहारः प्राकृतध्वनिभेदकृतश्च ह्रस्वदीर्घादिव्यवहारः। वैकृतध्वनिकृतस्तु द्रुतमध्यमविलम्बितव्यवहार इत्यर्थः" इति।

निमित्तः प्लुतः। स च प्राकृतध्वनिकालः स्फोटे अध्यारोप्यमाणः स्फोटकाल इत्युपचर्यते।

द्वितीयस्तु—वैकृतध्वनिप्रयुक्तो द्रुतामध्यमाविलम्बितारूपवृत्तित्रयहेतुभूतः। तथाहि अपचितवैकृतध्वनिनिमित्ता द्रुतावृत्तिः। प्रचितवैकृतध्वनिनिमित्ता मध्यमा वृत्तिः। प्रचिततरवैकृतध्वनिनिमित्ता तु विलम्बिता वृत्तिरिति निष्कृष्टोऽर्थः।

एवं च यथा घटादिरूपपरिच्छेदकवशादेकमप्याकाशं भिद्यते, तथैव तत्तद्ध्वनिरूपपरिच्छेदकवशाद् एकोऽप्यखण्डः स्फोटो वैविध्येन प्रतीयते, तथा च प्राकृतध्वनिभेदप्रयुक्तः स्फोटभेदः, अर्थभेदबोधे हेतुत्वं भजते। ध्वनिना शब्दोपलब्धिः कया रीत्या भवतीत्यत्र त्रयो मार्गाः सन्ति। तत्र केचिन्मन्यन्ते ध्वनिरुत्पद्यमानः श्रोत्रं संस्करोति, तच्च संस्क्रियमाणं श्रोत्रं शब्दोपलब्धौ द्वारतां प्रतिपद्यते। तस्मिन् संस्कारे विकल्पत्रयम्[1]—विषयग्रहणासमर्थस्य श्रोत्रस्य अपूर्वशक्त्याधानेन संस्कारः।

**इन्द्रियविषययोः संस्कारः**

विद्यमानायाः शक्तेः प्रबोधो वा, अथवा अर्थक्रियायां द्वयोरिन्द्रियविषययोः सान्निध्यमात्रसम्पादनं संस्कारः।

अन्ये तु अभिव्यक्तिवादिनो वदन्ति यत् शब्द एव ध्वनिसंसर्गात् प्राप्तसंस्कारः श्रोत्रस्य विषयो भवति। अपरे तु शब्दश्रोत्रयोरुभयोरपि संस्कारको ध्वनिरिति मन्यन्ते। तथा चैतन्मते सहकारिनिमित्तान्तरोपकृताभ्याम् इन्द्रियविषयाभ्यां शब्दविषया बुद्धिरुत्पाद्यते। तेषु इन्द्रियस्यैव संस्कारः इति स्वाभिमतं सिद्धान्तम्—

**इन्द्रियस्यैव संस्कारः समाधानाञ्जनादिभिः।**
**विषयस्य तु संस्कारस्तद्गन्धप्रतिपत्तये[2]॥**

इत्यनेन कारिकाकारः प्रदर्शयति। तथा च समाधानं चेतसोऽभिसंस्कारः। स च द्विविधः—लौकिकः, यथाऽर्वाग्दर्शनानाम्, अलौकिस्तु दिव्यदर्शनानाम्।

स च संस्कार इन्द्रिये विशेषमादधाति, न तु विषयरूपे दृश्ये। एवं च—

---

१. तथा चोक्तं वाक्यपदीये—

इन्द्रियस्यैव संस्कारः शब्दस्यैवोभयस्य वा।
क्रियते ध्वनिभिर्वादास्त्रयोऽभिव्यक्तिवादिनाम्॥ (वाक्य० का० १ श्लो० ७९)

वाक्यपदीयटीका भर्तृहरिकृता द्रष्टव्या।

२. वा० प० १।७९।

पराञ्चि[1] खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन् ।
कश्चिद् धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्[2] ॥

इति श्रुत्या परागदर्शिन इन्द्रियाणां तादृशं संस्कारं कुर्वन्ति, येन लौकिकान् विषयानवबुध्यन्ते। प्रत्यगदर्शिनस्तु इन्द्रियाणां बाह्यां प्रवृत्तिमवरुध्य स्वान्तःस्थमात्मानं पश्यन्ति, येन विज्ञातेन सर्वं विज्ञातं भवति ।

सम्यग् आधीयते स्वस्वरूपे व्यवस्थाप्यते चित्तम् अनेनेति समाधानं समाधिः । स च समाधिस्सम्प्रज्ञाताऽसम्प्रज्ञातभेदेन द्विविधः । अनयोरन्यतरेणापि समाधिना चित्तं संस्कर्तुं योगिजना एव समर्था भवन्ति । अर्वाग्दृष्टिस्तु न हि चित्तं समाधातुं शक्नोति; स हि चित्तं बाह्यविषयादवरुध्य न हि स्वान्तःस्थे परमात्मनि लगयितुं शक्नोति । अतस्तत्र समाधानशब्दो नहि तादृशार्थको मन्तव्यः; किन्तु तेषां स्थूलावस्थायामेव स्थापनं तेषामर्वाग्दृशां कृते मन्तव्यम् । तच्चालौकिकं समाधानं सूक्ष्मव्यवहितविप्रकृष्टवस्तूनामुपलब्धौ चक्षुरेवानुगृह्णाति । विषयसंस्कारे हि सूक्ष्मव्यवहितविप्रकृष्टानां वस्तूनां सर्वेषामपि ज्ञानं स्यात् ।

एवमेवाञ्जनादिद्रव्यं चक्षुरेव संस्करोति, न तु बाह्यविषयम् । विषयसंस्कारे हि विषयस्य अन्यैरपि ग्रहणं प्रसज्येत । विषयस्यापि संस्कार आतपे वह्नौ वा तैलं संस्थाप्य सुगन्धिद्रव्याणि तत्र प्रक्षिप्य कर्तुं शक्यते ।

एवमेव पृथिव्या उदकेन संस्कारे गन्धप्रतिपत्तिर्भवति । घ्राणेन्द्रियसंस्कारे तु संस्कृतासंस्कृतविषयेषु प्रतिपत्तिभेदो न स्यात् । विस्तरस्तु प्रतिमायां द्रष्टव्यः ।

**बाह्यान्तरभेदेन स्फोटो द्विविधः**

तथा च स्फोटो द्विविधः, आन्तरो बाह्यश्च । तत्र बुद्ध्यवच्छिन्नाकाशधर्माऽयमान्तरः स्फोटः, स चायं स्फोट आन्तरप्रणवरूप एव । एवं[3] च पदादिरूप आन्तरः

---

१. अस्याः श्रुतेरयम्भावः—जगत्स्रष्ट्री प्रकृतिः यदा जगत् स्रष्टुं प्रववृते, तदा सृष्टेः का कथा ? सा हि तथा इन्द्रियाणि ससर्ज, यथा तानि अन्तर्दर्शनशक्तिविहीनानि सन्ति । बाह्यानेव विषयानवाबुध्यन्त । सा हि न हि सृष्टिः; किन्तु तेषामिन्द्रियाणां सा हिंसा । अत एव श्रुतौ 'व्यतृणत्' इति पदमुपात्तम् । न तु साधारणी हिंसा सा, किन्तु विशिष्टा । अत एव हिंसार्थकस्य तृहेस्तत्रोपादानं कृतम्, न तु सृजेः । यो हि धीरो बुद्धेः प्रेरकः इन्द्रियाणि अन्तर्मुखीकर्तुं शक्नोति, स हि अमृतत्वं मोक्षं वाञ्छन् चक्षुः परावर्त्य अर्थात् इन्द्रियाणि अन्तर्मुखीभाव्य प्रत्यक् चैतन्यं पश्यतीति गूढोऽभिप्रायोऽस्याः श्रुतेः ।

२. कठोपनिषद्–२।१ ।

३. (लघुमञ्जूषा पृ० ३८९) (लघुमञ्जूषा पृ० २०१) पं० सभापतिशर्मोपाध्यायटीकिता—रत्नप्रभा पृ० २०२—प० २५ 'यद्वा केषांचिद् व्यक्तवाचामुच्चारणे ध्वनिः स्फोटश्च स्तः । अव्यक्तवाचामुच्चारणे ध्वनिरेव प्रतीयत इत्यर्थः । अत्र प्रतीयत इत्युक्त्या स्फोटस्यापि सत्ता

स्फोटो वाचक इति सिद्धम्[1]। **'ओंकार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति[2]'** इति श्रुतेः। बह्वी वाक्यपदादिरूपा नानारूपा घटपटादिरूपा च। **'अकार एव'** इति श्रुत्यन्तरे पाठः। तत्राप्यवयवद्वारा प्रणवोपलक्षणत्वम्। द्वादशस्कन्धे भागवते प्रणवस्य स्फोटत्वं स्फुटमेवोक्तम्। तत्र हि—

**समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः।**
**हृद्याकाशादभून्नादो वृत्तिरोधाद् विभाव्यते[1]॥**

इत्यादिना लघुमञ्जूषायां समुपन्यस्तः। तथाहि—**'तथा चायं स्फोटो द्विविध, आभ्यन्तरो बाह्यश्च। तत्राभ्यन्तरो बुद्धयनुसंवृत्तिरूपः। बाह्यस्तु जातिव्यक्तिभेदाद द्विविधः। संघातवर्त्तिनी जातिरेव वाचिकेत्याद्यः** [जातिस्फोटः], **एकोऽनवयवः स्फोट इति व्यक्तिस्फोटः।'**

अनया रीत्या लघुमञ्जूषायां स्फोटं प्रपञ्चयता नागेशभट्टेन न हि वर्णपदवाक्यादिभेदेन अष्टौ स्फोटा उपन्यस्ताः; परं व्यञ्जनया तेनापि ते स्वीकृताः[3]। तन्मतेऽपि वर्णस्फोटपदेन प्रकृतिस्फोटः प्रत्ययस्फोटश्च ग्राह्यः।

---

सूचिता (पृ० २३५ चौखम्मा मञ्जूषा कुञ्जिका पृ० २३७)। 'एवं चेति स्फोटो द्विविधः, आन्तरो बाह्यश्च, तत्रान्तरस्य मुख्यं वाचकत्वमित्यर्थः, बाह्यस्तु जातिव्यक्तिभेदेन द्विविधः।' यत्तु कलायां (पृ० २३९ पं० २८) 'तेन व्यक्तवाचामुभयम्, अव्यक्तवाचां तु वर्णधर्मानाक्रान्तध्वनिरेवेत्यर्थः' इत्युक्तम्; तत्तु 'भेर्य्याघातस्थलेऽपि स्फोट एव भेरीताडनाभिव्यक्तः श्रोत्रग्राह्य इत्यर्थः' इति स्वोक्तिविरुद्धम् (पृ० २३९ प० २)।

१. तदुक्तं सूतसंहितायाम्—

परः परतरं ब्रह्म ज्ञानानन्दादिलक्षणम्।
प्रकर्षेण नवं यस्मात् परं ब्रह्म स्वभावतः॥
अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः।
प्रकर्षेण नवत्वस्य हेतुत्वात् प्रणवः स्मृतः॥ इति।

२. ऐतरेयब्राह्मणम्—३।६।७।

३. नागेशलघुमञ्जूषा (पृ० ८) तत्र शास्त्रप्रक्रियानिर्वाहको वर्णस्फोटः प्रकृतिप्रत्ययास्तदर्थवाचका इति तदर्थः। अत्र कला—'ननु वर्णस्फोट इत्यस्य वर्णा वाचका इत्यर्थः स्यात्, स चायुक्तः, तेषामानर्थक्यस्य भाष्य एव बहुशः स्पष्टत्वात्। किञ्चात्र पक्षेऽर्थबोधानुकूला शक्तिर्वर्णसमूहे एव पर्याप्ता, न प्रत्येकम्, तथा सति प्रत्येकमर्थवत्त्वात् प्रातिपदिकत्वाद्यापत्तौ धनं वनमित्यादौ नलोपाद्यापत्तेः। किञ्च प्रत्येकं शक्तिमत्त्वे प्रत्येकं वर्णादर्थबोधापत्तिः; किञ्च द्वितीयादिवर्णोच्चारणस्य वैयर्थ्यापत्तिः। न च प्रत्येकं वर्णैरर्थस्मरणमात्रं जन्यते, चरमेण पुनः स्पष्टं जन्यते, प्रत्यक्ष इव स्मरणेऽपि वैजात्याङ्गीकारादिति वाच्यम्, प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वाद् गुरुत्वाच्च। न च प्रत्येकावृत्तेः कथं समुदायवृत्तित्वं द्वित्वादिवदुपपत्तेरत आह प्रकृतीति। तथा च वर्णपदं पदैकदेशपरमिति भावः।

**अष्टानां स्फोटानामुपन्यासः**

वैयाकरणभूषणसारकारेण भट्टकौण्डेन स्फोटचन्द्रिकादिषु मौनिभट्टकृष्णादिभिरन्यैश्च ग्रन्थकारैरष्टौ स्फोटाः स्वीकृताः। श्रीमतां माननीयानामस्माकं गुरुकल्पानां पण्डितराजश्रीसभापत्युपाध्यायानां शिष्यमूर्धन्येन पञ्चोलिपण्डितबालकृष्णशास्त्रिणा भूषणसारटीकायां प्रभायां (पृ० ४४८) वक्ष्यमाणपद्धत्या अष्टौ ते प्रदर्शिता गतानुगतिकरीत्या। तथाहि—**"स च स्फोटोऽष्टविधः—वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटश्च"** इति।

वर्णस्फोटस्य सखण्डाखण्डभेदेन द्वैविध्यं तु न, सुबन्ततिङन्ततदादिभिन्नस्य वाक्यभिन्नस्य च प्रकृतिप्रत्ययसमुदायरूपस्य प्रकृतिरूपस्य प्रत्ययरूपस्य चैकवर्णमात्रवर्णस्फोटघटकवर्णशब्देन ग्रहणात्। तदवयवानां चार्थाप्रत्यायकतयाऽर्थप्रत्यायकस्यैव खण्डस्य सखण्डपदस्फोटपदेन ग्रहणात् सखण्डवर्णस्फोटानुक्तिरित्याशयः।

तथा च वर्णपदबोध्यचरमवर्णाभिव्यक्तस्फोटेन यत्र बोधः, तत्रैव वर्णस्फोटपदव्यवहार्यत्वम्। एवं सुबन्ततिङन्ततदादिघटकान्त्यवर्णाभिव्यक्तस्फोटेनार्थप्रतीतौ पदस्फोट इति व्यवहारः। सुबन्ततिङन्तपदजन्यबोधपूर्वकचरमवर्णाभिव्यक्तस्फोटस्य बोधकत्वे वाक्यस्फोट इति व्यवह्रियते। प्रकृतिप्रत्ययजन्यबोधाभावे सति पदस्फोटेन बोधेऽखण्डपदस्फोटः। यथा—'मणिनूपुरादि', 'वः नः' इत्यादि च। पदजन्यबोधाभावे सति वाक्यस्फोटेन बोधेऽखण्डवाक्यस्फोटः। यथा व्याकरणज्ञानशून्यानां वाक्यतो बोधे वाक्यम्। वर्णपदवाक्यगतजातिव्यङ्ग्यस्फोटैर्बोधे क्रमशोवर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोट इत्युच्यते इत्युक्तम्[1]।

आद्यावधि प्रचलितानामष्टानां स्फोटानां स्वरूपं विचार्यते। तत्र वर्णस्फोटस्योदाहरणं 'पचति' इत्येतद्घटकपच्प्रकृतिव्यङ्ग्यः 'ति' इति प्रत्ययव्यङ्ग्यः स्फोटो वर्णस्फोटः। तार्किकाणां मते यच्छक्तं पदमिति तद्व्यङ्ग्यस्फोटस्यैव, शाब्दिकनये वर्णस्फोटशब्देन व्यवहारः, इति च प्रभायामुक्तम्।

अस्यां स्थितौ वाक्यार्थज्ञानामस्माकं कृते वाक्यस्फोटस्य विलय एव स्यात्। नापि 'पचति' इत्यादौ पदस्फोटव्यवहारः। तथा चायं विभागो न हि युक्तियुक्तः। अत एव नागेशभट्टो नहि अष्टौ स्फोटान् मञ्जूषायां निरदिक्षत्; किन्तु केवलम् आन्तरबाह्यभेदेन द्वौ स्फोटौ प्रदर्श्य बाह्यस्फोटस्य जातिव्यक्तिभेदेन द्वावेव भेदौ प्रादर्शयत्। तथा च व्यवहारदृष्ट्या बाह्यस्फोटप्रदर्शने प्राप्ते वक्ष्यमाणरीतिरेवास्माभिरवलम्बनीया।

---

१. प्रभाख्यायां भूषणटीकायाम्—पृ० ४४८।

**षोडश स्फोटाः**

तथाहि—व्यक्तिः पदार्थ इति व्याडिमते व्यक्तिस्फोटः। जातिपदार्थवादिनो वाजप्यायनस्य मते जातिस्फोट इत्येवं रूपेण द्वौ स्फोटावभ्युपगन्तव्यौ। यदि चावान्तर-स्फोटप्रतिपादने आग्रहः, तर्हि कल्पितानि पदानि, कल्पितपदेषु कल्पितौ प्रकृतिप्रत्यया-वादाय वक्ष्यमाणपद्धत्या स्फोटः स्वीकार्यः। एवं सति (१) प्रकृतिस्फोटः, (२) प्रत्यय-स्फोटः, (३) प्रकृतिजातिस्फोटः, (४) प्रत्ययजातिस्फोटः, (५) पदस्फोटः, (६) पदजाति-स्फोटः, (७) वाक्यस्फोटः, (८) वाक्यजातिस्फोटः, (९) अखण्डपदस्फोटः, (१०) अखण्ड-पदजातिस्फोटः, (११) अखण्डवाक्यस्फोटः, (१२) अखण्डवाक्यजातिस्फोट इति द्वादश स्फोटा भविष्यन्ति। तत्तदवयवविवक्षाविवक्षाभेदेन प्रकृतिप्रत्ययादिकल्पनाकल्पनाभ्यां सर्वेषां कृते एते द्वादश स्फोटा युक्तियुक्ता भवेयुः। एतदेव विचार्य मञ्जूषायां नागेश-भट्टो द्वावेव स्फोटौ प्रत्यपादयत्।

यच्च भट्टनागेशो लघुमञ्जूषायाम्—**'तत्र प्रकृतिप्रत्ययनिपातानामेकवर्णानामर्थ-वत्त्वदर्शनात्' इत्यादिना प्रत्याहाराह्निके भाष्ये उक्तः प्रकृतिप्रत्यययोर्वाचकत्वमित्येवं-रूपो वर्णस्फोटः शास्त्रीयप्रक्रियोपयोग्येव न वास्तवः।'** इत्याद्यवोचत्; तद्वक्ष्यमाण-भाष्यविरोधाद्धेयमेव।

वस्तुतस्तु वर्णस्फोटोऽप्यधिकस्तत्र निवेशयितुं शक्यते। प्रत्याहाराह्निके 'ऐ औच्' सूत्रोपरि[1] **'अथवोभयतः स्फोटमात्रं निर्दिश्यते'** इति भाष्योक्त्या शुद्धेषु ऋकारादिवर्णेषु स्फोटसत्ताया अभ्युपगमात्। तथा च जातिव्यक्तिभेदेन द्वौ वर्णस्फोटा-वधिकौ तत्र सन्निवेश्याविति चतुर्दशस्फोटाः सम्पन्नाः। प्रकृतिप्रत्ययविषयेऽप्यखण्डस-खण्डभेदेन द्वयोरपरयोरपि सम्मेलने षोडशस्फोटाः सम्पद्यन्ते। एते सर्वेऽपि स्फोटा नित्याकाशसदृशनित्यस्फोटमूलकवर्णपदवाक्यकल्पनया कल्पिता एव मन्तव्याः। स्फोटं विहाय पदवाक्यकल्पनायाः खपुष्पायमाणत्वात्। यद्यपि सूत्रे वार्त्तिके भाष्ये वा सृष्टि-क्रमो नोक्तः, तथापि श्रुतिप्रामाण्याद् वक्ष्यमाणनिरुक्तसन्दर्भाच्च सोऽभ्युपगम्यते।

---

१, अत एव हरिणा व्याकरणस्य त्रिविधा वाग्विषय इत्युक्तम्—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परम्पदम्॥ (वा० प० १।१४३)

"एतत् = व्याकरणम्। अनेकतीर्थेति श्लिष्टव्यक्तवर्णरूपा प्राप्तसाधुभावापभ्रष्टा दुन्दुभिवेणुवीणादिशब्दरूपा च इत्यर्थः।" इति तट्टीका।

किं च भेर्याघातस्थले अव्यक्तवाक्स्थले च स्फोटाभ्युपगमात् शब्दोऽपि शाब्दबोधे भासते इत्याद्युक्त्या च वर्णस्थलेऽपि स्फोटोऽङ्गीकार्यः।

**सृष्टिक्रमः**

तत्र प्रसङ्गवशात् शब्दस्वरूपविचारोपयोगार्थं स क्रमः प्रदर्श्यते। तथा च 'एकोऽहं बहुस्यां प्रजायेय[1]' इत्यादिश्रुत्या चिदानन्दज्ञानक्रियेच्छात्मकपञ्चशक्ति-विशिष्टस्य स्वतन्त्रस्य कर्तुर्लीनजगत्प्रपञ्चस्य सञ्चितप्रारब्धवशात् चितः संस्फुरणे क्रमशः स्रष्टुमिच्छायां पृथगिव संभूतायां षड्भावविकारा निरुक्तोक्ताः क्रमेणाविर्भवन्ति। 'इन्द्रो मायाभिः पुरुरूप इयते[2]' इति श्रुत्या बहूनि रूपाणि धत्ते। तत्र विविधाः प्रक्रिया-स्तैस्तैस्तैर्थिकैः स्वीये स्वीये सिद्धान्ते प्रदर्शिताः सन्ति।

अस्माकं वैयाकरणानां मते तु 'आख्यातोपयोगे[3]' इति सूत्रस्थभाष्यसिद्धान्तेन 'ज्योतिर्वज्ज्ञानानि भवन्ति' इति सन्दर्भेण 'सर्वस्य वा चेतनावत्त्वात्[4]' इति 'सन्[5]' सूत्रस्थवार्त्तिकेन च शब्दस्य चैतन्यकोटावन्तर्भावात्, 'स भूरिति व्याहरत्, भुवमसृजत्[6]' इति श्रुत्याऽर्थसृष्टौ सञ्जातायां चिज्जडयोः सम्मिश्रणात् सर्वोऽपि सृष्टिप्रपञ्चः क्रमश उदेति।

प्रकृते तु शब्दसृष्टिरेवाभिमताऽस्माकम्। अन्या सृष्टिस्तु यथास्थानं सन्निवेश-यिष्यते। एवं च तज्ज्ञानं कया पद्धत्या परिणमते विवर्तते वेति प्रश्न उदेति। तत्र सूत्रमात्रदर्शनेन परिणामवादो विवर्तवादो वेति निश्चेतुं न पार्यते। वार्त्तिके तु 'सर्वस्य वा चेतनावत्त्वात्[7]' इत्यनेन चैतन्यस्य तदाश्रयस्य च भेदः प्रतीयते। स भेदो व्याव-हारिकः, पारमार्थिको वेति विचार्यते। तत्र व्याकरणस्यैव खिलेंऽशे निरुक्ते षण्णां भावविकाराणामुपादानेन परिणामवाद एव समायाति।

यथा हि सूक्ष्मं वटबीजं विवृद्धं सदाविर्भूतचैतन्यं वृक्षरूपेण दृश्यते, तथैव तदेव स्फोटाख्यं शब्दब्रह्म स्फुटत्यर्थोऽस्मादिति व्युत्पत्तिविशिष्टं सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूल-रूपेण प्रकाशरूपं वैखरीपर्यन्तशब्दराश्यात्मना विमर्शात्मना चार्थश्रेणिमवलम्बमानं सत्त्वरजस्तमोरूपेण बुद्ध्यहङ्कारेन्द्रियादिना सूक्ष्मस्थूलभूतात्मना च परिणमते। **'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति[8] वा'** इति **सूत्र इन्द्रशब्दोऽयं बह्वर्थः**। एतदर्थनिर्णयश्च भाष्यमनुसृत्यैव विधेयः। तत्र भाष्ये—**'इन्द्रशब्दः' 'इतीन्द्रवद् विषयः, तद् यथा एक इन्द्रोऽनेकस्मिन् क्रतुशत आहूतो युगपत् सर्वत्र भवति[9]'** इत्या-दिना विग्रहवद्देववाचको यो ह्यनेकं शरीरशतं निर्माय क्रतुशते उपतिष्ठते।

---

१. छा० उ० ६।२।३। २. बृ० उ० २।५।१९। ३. अष्टा० १।४।२९।
४. तदेव–३।१।७। ५. तदेव— । ६. तै० ब्रा० २।२।४२।
७. अष्टा० ३।१।७। ८. तदेव–५।२।९३। ९. तदेव–१।२।६४।

**'इन्द्रश्चाध्येता बृहस्पतिश्च प्रवक्ता[1]'** इत्यत्रापि स एवेन्द्रः, यस्य गुरुर्मन्त्री वा बृहस्पतिः। तथा च इन्द्रशब्दो देवाधिपत्वेन देवत्वेन वा प्रयुक्तो हविर्भागितया **'इन्द्रो मायाभिः पुरुरूप ईयते[2]'** इत्यादिश्रुतिषु परमात्मवाचकोऽपि दृश्यते।

**भाषाविज्ञानप्राधान्यमत्र सृष्टिक्रमस्तु प्रासङ्गिकः**

तथा च इन्द्रेण परमात्मना सृष्टम् इन्द्रियम्। इन्द्रस्य जीवात्मनो लिङ्गम् इन्द्रियम् इत्यादौ जीवेश्वरवाचकोऽपीन्द्रशब्दः। तथा च सृष्टिप्रकरणे इन्द्रियाणामपि सृष्टिर्भाष्यादपि प्रतीयते। परं शब्दसाधुत्वप्रतिपादकेऽस्मिन् शास्त्रे प्रासङ्गिका एव पदार्था दृश्यन्ते। त एव च निरूपणीयाः। प्राधान्येन तु भाषाविज्ञानं शिक्षा च व्याकरणस्य विषयः। तथा च—**'शुङ्गेन सन्मूलमन्विच्छ सौम्य[3]'** इति श्रुतिप्रदर्शितया रीत्या **'श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः', 'अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते[4]'** इत्याभ्यां लक्षणाभ्यां लक्षितः सूक्ष्मो वैखरीरूपो वा व्याकरणेनानुशिष्यते।

**अदृष्टोत्पत्त्या अभ्युदययोगः**

तत्र साधारणानामपि वैयाकरणानां कृते साधुवैखरीशब्दाभ्यासेन यथास्थानप्रयत्नमुच्चारणेन च विशिष्टस्य अदृष्टस्योत्पत्त्या तादृशसंस्कारसंस्कृता बुद्धिः स्वयमेव सन्मार्गं प्रदर्शयति। यथा हि—

**योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्तते।**
**यो नियुक्तो हि योगेन स योगे रमते चिरम्[5]॥**

इति श्रुत्या मूलभूतां पश्यन्तीं साक्षात्कृत्य वास्तविकवैयाकरणत्वं शिष्टत्वापरपर्यायं लभन्ते भगवदनुगृहीताः शुद्धान्तःकरणा मानवाः।

एवं स्थितौ स्फोटपदेन वैखर्यां मध्यमायां च बाह्यस्फोटस्यानुभवः। पश्यन्त्यां तु सूक्ष्मः स्फोटोऽनुभूयते। यस्य सूक्ष्मस्य स्फोटस्य साक्षात्कारे 'सर्वे सर्वार्थवाचकाः' इति स्थितौ रमन्ते वैयाकरणाः, तदानीं ते शिष्टपदव्यपदेशभाजो भवन्ति।

**परा व्यवहारातीता**

परासाक्षात्कारेऽधिकारनिवृत्तेः श्रवणात् तदवस्थामापन्नाः पुरुषधौरेया न ह्यस्माकं व्यवहारपथे प्रवेष्टुमर्हन्ति। अतस्तद्विषये विचारोऽनावश्यकः। एवं स्थितौ मध्यमावस्थामेवाश्रित्य पीठिकायां लेखिष्यमाणानपि विषयान् संक्षेपेणात्र निर्दिशामि। तत्र सर्वतः प्रथममेतदेवाहं वच्मि यदि मात्सर्यं विहाय अन्धपरम्परां च त्यक्त्वा पक्ष-

---

१. म० भा० पस्पशाह्निकम्—पृ० ५। २. बृ० उ० २।५।१५।
३. छा० उ० ६।८।६। ४. महाभा० पस्पशाह्निकम्—पृ० १।
५. सौ० ल० उ० ४।१।

पातग्रहग्राहागृहीता विपश्चितः पश्येयुर्मदीयामुक्तिम्—अवश्यमेव शब्दतत्त्वं शनैः शनैः प्रकटितं भविष्यतीत्याशासे। अत्रान्येषां तैर्थिकानां मतान्यनुपन्यस्य केवलं वैयाकरण-दर्शनानुसारं प्रातिशाख्यशिक्षानुसारं च किञ्चित् प्रदर्शयामि।

**ज्ञानस्य शब्दरूपेण परिणामः**

तत्र सूक्ष्मं ज्ञानं ज्योतिःपदाभिधेयं स्वरूपं प्रकटयितुं यदा परिस्पन्दते, तदा तज्ज्ञानं वृत्तिरूपमासादयितुं बुद्धितत्त्वं पश्यति। दृष्टायां बुद्धावपाक्रान्तस्पृष्टलोहकल्पायां कश्चन क्षोभः समुत्पद्यते। तेन च मनः प्रेर्यते। तच्च मनः शरीरव्यापकं सूक्ष्मं तेजो विद्युन्निभमभिहन्ति। अभिहतेन तेजसा वायुः प्रेर्यते। स च वायुर्मूर्धानमभिहन्ति। तत्र च सुषिरमप्राप्य निवर्तते। तत्र नासिकारन्ध्रेण निःसरन् स्थूलबिन्दुभावमासादयति। स एव स्थूलो बिन्दुर्द्विधा भूत्वा विसर्गभावमवाप्य कण्ठे हकाररूपेण परिणमते। उरःस्थानस्थितश्च स एव हकारः प्रथमा मातृका सूक्ष्मविसर्गरूपा। सैव पञ्चसु कण्ठादि-स्थानेषु हयरलवेति ऊष्मरूपेण चतुरन्तस्थारूपेण कचटतपेत्यघोषरूपेण च विराजते। त एव पञ्चाघोषा यदा घोषात्मना संसृष्टाः, तदा गजडदबेति पञ्च रूपाणि आसादयन्ति। इमा इवोरस्यहकारसहिता षोडश मातृकाः **'अर्धमात्रा स्थिता नित्या यानुचार्य्या विशेषतः'**[1]।

**षोडश मातृकाः**

मार्कण्डेयपुराणोक्तपद्यनिर्दिष्टा नित्यषोडशिकापदव्यवहार्या आसन् निगमात् चिरं पूर्वकाले आगमे।

ताभ्य एव षोडशभ्यो मातृकाभ्यः प्रथमं स्वराणां सम्भूतिः। तथा हि कण्ठ-तालुमूर्धदन्तोष्ठरूपेभ्यः पञ्चभ्यः स्थानेभ्योऽभिव्यक्ताभ्यो हयरलवरूपाभ्योऽर्धमातृक-मातृकाभ्यः क्रमशः अ-इ-ऋ-ऌ-उकाररूपाणां पञ्चानामेकमात्रिकमातृकाणामभिव्यक्ति-र्भवति। **'इग्यणः संप्रसारणम्'** इति सूत्रयन् भगवान् पाणिनिरिममर्थं परिपुष्णाति।

**एकविंशतिर्वर्णा व्यवहारोपयोगिनः**

एवं च हयरलवेत्यर्धमात्रा मातृकाः संप्रसृताः अ-इ-ऋ-ऌ-उरूपं धारयन्ति। अनया रीत्या एकविंशतिर्वर्णा व्यवहारोपयोगिनः सञ्जाताः। यथा हि प्रत्येकस्मात् स्थानात् षोडशमातृकान्तर्गतानां तिसृणां मातृकाणां समुदयः, तथैव प्रत्येकस्मात् स्थानाद् एकैकस्य स्वरस्योद्भूतिर्युक्तियुक्ता प्रतिभाति। अस्यां स्थितौ व्यवहारपथे बिन्दुरूपः पिता एकविंशतिभिर्मातृकाभिर्युक्तोऽभिधेयमर्थं बोधयितुमावृत्तः पदवाक्यादि-रूपं धारयन् महावाक्यरूपेण सन्दर्भरूपेण च परिणमते।

---

१. तन्त्रेषु नित्यषोडशिकापदेन स्वरा गृह्यन्ते।

**वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव।**
**अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता[1]॥**

इत्यनया रीत्या मातृकासहितस्य पितुरेवेयं विभूतिर्येयं त्रयी विद्या।

**वर्णोच्चारणप्रक्रिया**

तत्र प्रथममेषामन्येषां च वक्ष्यमाणानां वर्णानामुच्चारणोपयोगीनि स्थानादीनि अवसरप्राप्तानि निर्दिश्यन्ते। तथा चोक्तं शिक्षायाम्—

**अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।**
**जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च[2]॥**

इत्यष्टौ स्थानानि।

स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतविवृततरविवृततमसंवृतभेदेन सप्ताभ्यन्तरप्रयत्नाः सन्ति। विवारसंवारौ श्वासनादौ घोषाघोषौ अल्पप्राणमहाप्राणौ उदात्तानुदात्तौ स्वरित इतीमे बाह्यप्रयत्नाः।[3] आस्यबहिर्भूतकार्यजनकत्वेन बाह्यत्वमेषाम्। नासिकाऽपि

---

१. माघ० स० २।७२। २. या० शि० १३।

३. 'तुल्यास्य....' (अष्टा० १।१।९) इत्यत्र—'विवृततरौ वर्णावितौ' इति भाष्योद्द्योतादिसमालोचनया आकारो विवृततरेभ्योऽपि विवृततर इत्यायाति। तथा च सूत्राणि—'अथ शब्दोत्पत्तिः' (तै० प्रा० २।१), 'वायुशरीरसमीरणात् कण्ठोरसोः सन्धाने' (अ०२ सू०२), 'तस्य प्रातिश्रुत्कानि भवन्त्युरःकण्ठशिरोमुखं नासिके' (अ० २ सू० ३) इति।

नागेशभट्टेन विवरणे 'तुल्यास्यप्रयत्नं सवर्णम्' इत्यत्र 'तत्र पूर्वं स्पृष्टतादयश्चत्वारः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ विवारादयो बाह्या एकादश प्रयत्ना उत्पद्यन्ते' इति प्रदीपोपरि उद्द्योते 'भाष्ये प्रारम्भो यत्नस्येति, अत्र यत्नस्येति निर्धारणे षष्ठी। जातौ चैकवचनम्, आरम्भ इति कर्मणि घञ्। यत्नानां मध्ये प्रथमं वर्णोत्पत्तेः पूर्वमारभ्यमाण इत्यर्थः। अत्रापि नासिकाया अग्रहणमुपपादितरीत्यैवेति बोध्यम्।'

अत्रेदं बोध्यम्—शब्दप्रयोगेच्छयोत्पन्नयत्नात् नाभिप्रदेशात् प्रेरितो वायुर्वेगात् मूर्धपर्यन्तं गत्वा ततः प्रतिनिवृत्तो यत्नविशेषसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति। ततो यत्नविशेषसहायेन परावृत्तिसमये गलविवरादीनां विकासादीन् करोति। तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वाद् आस्ये प्रयत्ना इत्युच्यन्ते, आभ्यन्तरा इति प्रारम्भ इति च। गलविवरादिविकासादिकराश्च आस्यबहिर्भूतदेशे कार्यकरत्वाद् बाह्या इति।

एवं मात्राकालिकत्वादिकमपि वाय्वल्पत्वमहत्त्वकृतमिति नाभिप्रदेशात् प्रेरकयत्न एव। कश्चिद् विलक्षणोऽल्पं वायुं प्रेरयति कश्चिदधिकमिति तस्य यत्नस्य वायुप्रेरणारूपं कार्यमास्यबाह्यदेशमिति तस्यापि व्यावृत्तिरास्यपदेनोक्ता 'अ इ उ ण्' सूत्रे भाष्ये। 'मूर्ध्नि प्रतिहते वर्णोत्पत्तेः पूर्वं स्पृष्टतादयः पश्चान्निवृत्ते प्राणाख्ये वायौ विवारादयो बाह्या एकादश प्रयत्ना उत्पद्यन्ते' इति कैयटे।

आस्यबहिर्भूतकार्यजननात् स्थानत्वेऽपि बहिर्गण्यते । एवं चैतानि स्थानादीनि वर्णोत्पत्तौ निमित्तकारणानि भवन्ति । तथा चैतदंशे वैयाकरणमतादभिन्नेन तैत्तिरीयप्रातिशाख्यमतेन अनादिनिधनो विभुर्ब्रह्मव्यपदेशभाक् स्फोटः सर्ववर्णानामुपादानकारणं भवति ।

---

वर्गाणां तृतीयाः पञ्चमाश्चेत्यर्थः । इतरे वर्गाणां प्रथमाः शषसाश्चेत्यर्थः ।

इतः पूर्वं–संवारनादघोषाः, हकारः, विवारः, श्वासः, घोषश्च, अल्पप्राणः, महाप्राणः इति सप्त । स्वरविशेषहेतवस्तु उदात्तानुदात्तस्वरिता वक्ष्यन्ते । यद्यपि आन्तरतम्यपरीक्षायां हकारस्य नोपयोगस्तथापि तत्स्वरूपपरिचयस्तु अवश्यं विधेय इति कृत्वा स उपन्यस्तः ।

तानि च स्थानानि १. हनू, २. उत्तरोष्ठः, ३. तालुः, ४. वर्स्वाः ।

१ तत्र हनू—आस्यपार्श्वभागौ ।

४ वर्स्वाः—दन्तपङ्क्तेरुपरिष्टादुच्चप्रदेशः ।

(तै० प्रा० २।१८–त्रिभाष्यरत्नम्) इति ।

रेफटवर्गस्थानयोर्मध्यप्रदेशाः (वैदिकाभरणम्) (तै० प्रा० अ० २ सू० १८) ।

तालौ जिह्वामध्यमिवर्णे (तै० प्रा० अ० २ सू० २२) ।

३ तालुपदेन जिह्वाया अधस्तनः प्रदेश उच्यते (वैदिकाभरणम्) ।

तुल्यास्यसूत्रे 'किंपुनरास्ये भवम् ? स्थानं करणञ्च' इति भाष्ये स्थानकरणयोर्निर्देशोऽत्यावश्यक इति मया तैत्तिरीयप्रातिशाख्यानुसारं प्रदर्शिते ते । प्रदीपे तु करणपदेन स्पृष्टतादीत्युक्त्वा प्रयत्नपदेन तद्ग्रहणसिद्धौ जिह्वाया अग्रोपाग्रमध्यमूलानां ग्रहणं निश्चितम् ।

अत्र वर्णोच्चारस्थानानि तैत्तिरीयप्रातिशाख्ये—

'हनुमूलं जिह्वामूलेन कवर्गे स्पर्शयति' (तै० प्रा० २।३५) ।

तालौ जिह्वामध्येन चवर्गे (तै० प्रा० २।३६) ।

जिह्वाग्रेण प्रतिवेष्टच मूर्धनि टवर्गे (तै० प्रा० २।३७) ।

जिह्वाग्रेण तवर्गे दन्तमूलेषु (तै० प्रा० २।३८) ।

ओष्ठाभ्यां पवर्गे (तै० प्रा० २।३९) ।

तालौ जिह्वामध्यान्ताभ्यां यकारे (तै० प्रा० २।४०) ।

रेफे जिह्वाग्रमध्येन प्रत्यग्दन्तमूलेभ्यः (तै० प्रा० २।४१) ।

दन्तमूलेषु च लकारे (तै० प्रा० २।४२) ।

ओष्ठान्ताभ्यां दन्तैर्वकारे (तै० प्रा० २।४३) ।

स्पर्शस्थानेषूष्माण आनुपूर्व्येण (तै० प्रा० अ० ३।४४) ।

करणमध्यं तु विवृतम् (तै० प्रा० २।४५) ।

कण्ठस्थानौ हकारविसर्जनीयौ (तै० प्रा० २।४६) ।

उदयस्वरादिसस्थानो हकार एकेषाम् (तै० प्रा० २।४७) ।

पूर्वान्तसस्थानो विसर्जनीयः (तै० प्रा० २।४८) ।

नासिक्या नासिकास्थानाः (तै० प्रा० २।४९) ।

मुखनासिक्या वा (तै० प्रा० २।५०) ।

तत्र शब्द विषये त्रीणि दर्शनानि सन्ति । तानि च वाक्यपदीये—

**वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।**
**कैश्चिद् दर्शनभेदो हि प्रवादेष्वनवस्थितः[1] ॥**

इति कारिकायां वायुः शब्दः, अणुः शब्दः, ज्ञानं शब्द इत्येवंभेदभिन्नानि त्रिविधानि मतानि प्रतिपादितानि सन्ति । इमानि त्रीण्यपि दर्शनानि अस्मच्छास्त्रीयान्येव मन्तव्यानि ।

यच्च मञ्जूषादिषु **'अणुः शब्द इत्यार्हता मन्यते'** इत्युक्तम्; तन्न सम्यक् । बहुषु स्थलेषु वाक्यपदीयटीकायाम्—**'अविक्रियाधर्मकं हि शब्दतत्त्वं ध्वनिं विक्रियाधर्माण-मनुविक्रियते । तच्च सूक्ष्मे व्यापिनि ध्वनौ करणव्यापारेण प्रचीयमाने स्थूलेन अभ्र-संघातवदुपलभ्यमानेन नादात्मना प्राप्तविवर्तेन तद्विवर्तानुकारेण अत्यन्तमविवर्तमानं विवर्तमानमिव गृह्यते[2]**—इत्यादिसन्दर्भेषु शब्दतत्त्वस्य, ध्वनौ विकृते सति, अभ्रसमूह इव प्रचीयमाने नादात्मना विवृत्ते अविवर्तमानत्वं विवर्तमानत्वमिव गृहते, इत्याद्युक्ति-भिरणूनामित्ययं पक्षोऽपि वैयाकरणकुलस्यैव नत्वार्हतानामेव । एतत्सर्वं पीठिकायां विस्तरेण विवेचयिष्यते ।

**वर्णविशेषसृष्टिः, स्थानप्रयत्नविवेकः**

ननु स्थानैक्येऽपि कथं वर्णभेदः ककारखकारयोरुभयोरपि कण्ठस्थानीयत्वात् ? अत्रोच्यते—

**अनुप्रदानात् संसर्गात् स्थानात् करणविन्यासात् ।**
**जायते वर्णवैशेष्यं परिमाणाच्च पञ्चमात्[3] ॥**

इति तैत्तिरीयप्रातिशाख्योक्त्या अनुप्रदानादिरूपनिमित्तभेदस्य वर्णभेदे करणत्वमवधेयम् ।

तथाहि—१. अनुप्रदानं नादादि, २. संसर्गो वायोः स्थानेष्वभिघातः । स च वायुस्त्रिप्रकारः—अयःपिण्डनिभः, दारुपिण्डसंकाशः, ऊर्णापिण्डसदृशश्चेति । स्पर्शानां यमानां चाभिव्यञ्जको वायुरयःपिण्डवत्, अन्तस्थानामुद्भावकोऽसौ दारुपिण्डवत्, ऊष्मणां स्वराणां च व्यञ्जक ऊर्णापिण्डवत् स्थानान्यभिहन्ति । स्थानं हनुमूलादि, ४. करणम् ओष्ठादि । तस्य वैविध्येन स्पर्शनं स्पृष्टतादि । ५. परिमाणं मात्रादिकालः । एभ्यो निमित्तेभ्यो वर्णानाम् असाधारणरूपेण भेदः सम्पद्यते ।

**परिमाणत्वेन वर्णविभागः स्वरवर्णमात्रविषयः**

तैत्तिरीयप्रातिशाख्ये तु—**'परिमाणरूपं निमित्तं तु स्वराख्यवर्णमात्रविषयम् । अत एव तत् पार्थक्येनोक्तम् । तेन व्यञ्जनानां ङकारानुस्वारादीनां कालभेदे वर्णा-न्यत्वं न भवति'[4]** इत्याद्युक्तम् ।

१. वा० प० १।१०८ ।	२. वा० प० १।४८—टीकायाम् ।
३. तै० प्रा० २३।२ ।	४. तै० प्रा० २३।२ ।

एवं च तैत्तिरीयाणां मतेऽनुस्वारस्य द्विमात्रत्वेऽपि न तद्वर्णद्वैविध्यमित्यायाति। पाणिनीयशिक्षादीक्षितानां तु चतुःषष्टित्वसम्पादने तद्द्वैविध्यमेव कारणम्। अत एव तत्तच्छाखादिभेदेन वर्णसंख्यापि भिद्यते।

**स्थानैक्येऽपि अनुप्रदानप्रयुक्तो भेदः**

एवं च ककारखकारयोः स्थानैक्येऽपि अल्पप्राणमहाप्राणरूपानुप्रदानभेदात्तयोर्भेदः सूपपादः। खकारघकारयोर्महाप्राणत्वेऽपि अघोषघोषरूपानुप्रदानभेदाद् भेदः सुकरः। कगयोरल्पप्राणत्वेऽपि अघोषघोषरूपानुप्रदानभेदाद् भेदः समर्थनीयः। अनयैव रीत्या सर्वेषु वर्णेषु भेदो बोद्धव्यः। विस्तरभिया नाधिकमुच्यते।

**विवारसंवारयोरेवोपादाने आन्तरतम्यसिद्धौ अन्येषामुपादानस्यावश्यकता**

ननु—'**खरो विवाराः श्वासा अघोषाश्च। हशः संवारा नादा घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः**'[1] इत्येवंरूपेण वर्णानां प्रयत्नविभागे विवारश्वासाघोषेषु संवारनादघोषेषु चैकेन विचारेण संवारेण चापेक्षितकार्यनिष्पत्तौ कथमन्ययोर्द्वयोरुपादानम्? अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानां च बाह्यप्रयत्नः क इति चेदत्र प्रक्रियाकौमुदीटीकायां प्रसादे समुपन्यस्त एव सन्दर्भः शङ्कोत्तरणेऽनुसन्धेयः। तथाहि संज्ञाप्रकरणे—'**तुल्यास्यप्रयत्नं सवर्णम्**'[2] इति सूत्रोपरि 'तत्र नाभिप्रदेशात् प्रयत्नप्रेरितः प्राण ऊर्ध्वमाक्रामन् कण्ठप्रभृतीनामन्यतरस्मिन् स्थाने प्रयत्नेन विधार्यमाणः स्थानमभिहन्ति। तस्मात् स्थानाभिघाताज्जातो ध्वनिः साकाशे वर्णश्रुतिः। स वर्णस्यात्मलाभः। तत्र ध्वनावुत्पद्यमाने यदा कण्ठादिस्थानं जिह्वाग्रोपाग्रमध्यमूलानि करणानि प्रयत्नेन परस्परं स्पृशन्ति, सा स्पृष्टता। ईषद् यदा स्पृशन्ति, सा ईषत्स्पृष्टता। सामीप्येन यदा स्पृशन्ति, सा संवृतता। दूरेण यदा स्पृशन्ति, सा विवृतता। एते आभ्यन्तरत्वं त्वेषां स्थानकरणप्रयत्नव्यापारेणोत्पत्तिकाल एव भावात्।

बाह्याः प्रयत्नाः सवर्णसंज्ञायामनुपयोगिन इत्याचार्यवर्यैर्नोक्ताः। अस्माभिस्तु वर्णानामान्तरतम्यज्ञानायोच्यन्ते। ते चैकादश--विवारः, संवारः, श्वासः, नादः, घोषः, अघोषः, अल्पप्राणः, महाप्राणः, उदात्तः, अनुदात्तः, स्वरितश्चेति। तत्र पूर्वोक्त एव वायुर्यदा मूर्ध्नि प्रतिहतो निवृत्तः कोष्ठमभिहन्ति, तत्र यदा गलबिलस्य संवृतत्वं तदा संवारो नाम वर्णधर्मो जायते। यदा विवृतत्वं तदा विवारः। संवृते गलबिले अव्यक्तशब्दो नादः। विवृते श्वासः। श्वास उपरिवर्ती वायुः। तौ श्वासानुप्रदानौ अनुप्रदानमित्याहुः। अनु पश्चात् प्रदीयते इति। तत्र यदा स्थानाभिघातजे ध्वनौ नादोऽनुप्रदीयते, तदा श्वासध्वनिसंसर्गादघोषः। महति वायौ महाप्राणः। अल्पे अल्पप्राणः।

---

१. सि० कौ० संज्ञाप्रकरम्। २. अष्टा० १।१।९।

यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रः स्यात्, तदा गात्रस्य निग्रहः कण्ठविवरस्य चाणुत्वं स्वरस्य च रौक्ष्यं स्यात्तमुदात्तमाहुः। यदा तु मन्दः प्रयत्नः स्यात्, तदा गात्रस्य स्रंसनं कण्ठविवरस्य महत्त्वं स्वरस्य च स्निग्धता स्यात् सोऽनुदात्तः। उदात्तानुदात्त-सम्बन्धात् स्वरितः। वर्णोत्पत्तिकालानन्तरमुत्पत्तेर्बाह्यत्वमेषाम्।

तत्र वर्गाणां प्रथमद्वितीयाः शषसा विसर्जनीय ᳵक ᳶपा विवृतकण्ठाः श्वासानु-प्रदाना अघोषाः। वर्गाणां तृतीयचतुर्था अन्तस्था नासिक्या ह्यनुस्वारौ च संवृतकण्ठा नादानुप्रदाना घोषवन्तश्च। वर्गाणां प्रथमतृतीया अन्तस्थाश्च अल्पप्राणाः। इतरे सर्वे महाप्राणाः। यथा तृतीयास्तथा पञ्चमाः। आनुनासिक्यमेषामधिको गुणः। एते बाह्याः प्रयत्नाः। तत्र यमा नाम वर्गेष्वादितश्चतुर्णां पञ्चमेषु परतो ये त एव नासिक्याः जायन्ते। यथा—'पलिक्क्नीः', 'चख्ख्नतुः', 'आग्ग्मं जघ्घ्नतुः' अप्नस्वतीत्यादौ कुं खुं गुं घुं इति[1] इति।

### तैत्तिरीयप्रातिशाख्यानुसारं वर्णोत्पत्तिप्रक्रिया

तैत्तिरीयप्रातिशाख्यानुसारं तु कोष्ठ्यस्य वायोः शरीरे यत्समुत्थानं प्रयोज्य-व्यापारः, तस्मादित्यर्थः। यद्वा समीरणादित्यत्र ण्यन्तात् ल्युट्प्रत्ययः। तथा च तस्य वायोः शरीरे यत् समुत्थापनं प्रयोजकव्यापारस्तस्मादित्यर्थः। एवं च कण्ठस्य उरसश्च मध्याकाशे शब्दस्योत्पत्तिर्भवति। तस्य सामान्यरूपस्य शब्दस्य विशेषरूपप्राप्तौ उरः, कण्ठः, शिरो मुखं नासिका इति पञ्च स्थानानि।

तत्र मुखपदेन उत्तरदन्ताः, तन्मूलमुत्तरोष्ठो हनुमूलं तालु च। नासिकापदेन नासिकाच्छिद्रयोः कण्ठासन्नप्रदेश उच्यते। एतानि स्थानानि तस्य वर्णात्मकस्य शब्दस्य विशेषरूपनिष्पत्त्यर्हाणि भवन्ति।

**'वर्णोत्पत्त्यनन्तरभावी सवर्णसंज्ञानुपयुक्त आन्तरतम्यपरीक्षोपयुक्तश्च बाह्य-प्रयत्नः'**[2] इत्यर्थकं यदुक्तं व्याकरणस्य बहुषु पुस्तकेषु तन्न सम्यक्; बाह्यप्रयत्नमन्तरा वर्णविशेषोत्पत्तेर्दूरापास्तत्वात्। वक्ष्यमाणतैत्तिरीयप्रातिशाख्ये तथानुक्तेः।

तत्र हि त्रिविधा वर्णाः—केचन नादप्रकृतयः, अपरे श्वासप्रकृतयः, अन्ये च हकारप्रकृतयः। तत्र संवृते कण्ठे यः शब्दः क्रियते स, नादसंज्ञो भवति। संवरणं नाम कण्ठस्य सङ्कोचः। स खलु संवारो नाम बाह्यप्रयत्नः। तस्मिन् प्रयत्ने सति नादाख्यो बाह्यः प्रयत्नो जायते। विवरणं कण्ठस्य विस्तरणम्, स एव विवाराख्यो बाह्यः प्रयत्नः। तस्मिन् सति श्वासो नाम बाह्यः प्रयत्नः क्रियते।

---

१. अष्टा० १।२।९—सूत्रस्योपरि प्रक्रियाकौमुदी—प्रसादटीका—पृ० १८।
२. शब्देन्दुशेखरः—पृ० २९—नित्यानन्दपर्वतीयसंस्करणम्।

तद्ध्वनिसंसर्गादघोषो नाम बाह्यः प्रयत्नो जायते। मध्ये नाम प्रकृतिस्थे नापि संवृते नापि विवृते कण्ठे हकारो नाम बाह्यः प्रयत्नः क्रियते। तेन च व्यञ्जनेषु घोषो जायते।

**बाह्यानां न वर्णोत्पत्त्यनन्तरभावित्वम्**

ते नादश्वासहकारा वर्णानां विशेषरूपोत्पत्तौ प्रथमकारणानि। तथा चोक्तं प्रातिशाख्ये—**'ता वर्णप्रकृतयः'**[1] इति सूत्रे। अत्र कृतिशब्दः करणसाधनः, कर्तुमारभ्यन्ते आभिर्वर्णा इति प्रकृतयः प्रथमकारणानीत्यर्थः। एवं च प्राग्भावित्वात् कारणानां बाह्यप्रयत्नरूपकारणानां न हि वर्णोत्पत्त्यनन्तरभावित्वम्।

तथा च स्वरेषु घोषवत्सु च वर्णेषु नादोऽनुप्रदानं भवति। अयं भावः—कोष्ठ्यवायुसमुद्भावात् परं मूर्ध्नि प्रतिघातान्निवृत्ते तस्मिन् वायौ कण्ठस्य संवारादयो यथोक्तास्तिस्रोऽवस्था भवन्ति। तदा प्रदीयन्ते स्थानेषु निवेश्यन्ते एभिर्वर्णा इत्यनुप्रदानानि।

हकारे चतुर्थेषु वर्णेषु च हकारः अनुप्रदानं भवति। तथा च हचतुर्था घोषवत्सु महाप्राणाः। इतरे अल्पप्राणाः। अघोषेषु श्वासः अनुप्रदानं भवति।

**'भूयान् प्रथमेभ्योऽन्येषु'**[2] इति सूत्रेण प्रथमव्यतिरिक्तेषु अघोषेषु प्रकृष्टः श्वासः अनुप्रदानं भवति। ततश्च प्रथमा अल्पप्राणाः, इतरे तु महाप्राणाः। पूर्वोक्ते सन्दर्भे रूपविशेषहेतवो बाह्यप्रयत्ना उक्ता दर्शिताश्च। स्वरविशेषहेतवस्तु उदात्तादयो वक्ष्यन्ते।

**स्थानकरणाभ्यन्तरप्रयत्नानामुपन्यासः, तत्र स्वराणां स्थानादीनि**

अथात्र स्थानकरणे आभ्यन्तरप्रयत्नाश्च वक्ष्यन्ते। १. तथा च अकारस्य हनू स्थानम्, ओष्ठौ करणम्, संवृतः प्रयत्नः। २. दीर्घप्लुतयोरवर्णयोस्तु स्थानकरणे ते एव, विवृतस्तु प्रयत्नः। ३. इवर्णस्य तु तालु (जिह्वाया अधस्तनः प्रदेशः) स्थानम्, जिह्वामध्यं करणम्। **'तालु जिह्वा च इवर्णस्य करणम्'** (अ० २ सू० ३२) इति वैदिकाभरणे। ४. उवर्णस्योत्तरोष्ठः स्थानम्, अधरोष्ठः करणम्। ५. ऋ ॠ ऌ एषां वर्त्स्वाः (दन्तमूलोन्नतभागः) स्थानम्, जिह्वा हनू च करणम्। **'ओष्ठौ हनू जिह्वा च करणम्'**[3] इति वैदिकाभरणे। ६. एकारस्य हनू तालु च स्थानम्, ओष्ठौ जिह्वामध्यं च करणम्। **'ओष्ठौ जिह्वा च करणम्'**[4] इति वैदिकाभरणे। ७. ऐकारस्य हनू तालु च स्थानम्, ओष्ठौ जिह्वा च करणम्। ८. ओकारस्य हनू उत्तरोष्ठश्च स्थानम्, ओष्ठौ करणम्। ९. औकारस्यापि पूर्वोक्तमेव सर्वम्। प्रयत्नस्तु अधस्तनानां विवृतम्।

---

१. तै० प्रा० २।७।
२. तै० प्रा० २।११।
३. तै० प्रा० २।३२।
४. तदेव–२।१६।

**तैत्तिरीये संवृतविवृतावेव प्रयत्नौ**

यद्यपि तैत्तिरीयप्रातिशाख्ये संवृतविवृतौ द्वावेव प्रयत्नौ अत्युपसंहृतातिव्यस्तपदाभ्याम् आश्लेषविश्लेषार्थकाभ्यां स्पर्शयति, शब्दसूचितः स्पृष्टप्रयत्नश्चेति त्रय आभ्यान्तराः प्रयत्नाः प्रदर्शिताः, तथापि स्पृष्टत्वव्याप्यत्वेनेषत्स्पृष्टस्यापि ग्रहणम्। एवमेव व्यापकस्य विवृतस्योपादानेन व्याप्यानाम् ईषद्विवृतविवृततरविवृततमानामपि ग्रहणं सूपपादम्। **'नाज्झलौ'** इति सूत्रयता पाणिनिना स्पृष्टेषत्स्पृष्टविवृतसंवृतरूपाश्चत्वार एवाभ्यन्तरप्रयत्नाः सूचिताः।

**तैत्तिरीयमते ऋऌवर्णयोरिति वार्त्तिकस्यानुत्थितिः**

तैत्तिरीयप्रातिशाख्ये ऋ ॠ ऌ इत्येतेषामेकस्थानजन्यत्वात् सवर्णसंज्ञासिद्धौ ऋऌवर्णयोरिति वार्त्तिकस्यानुत्थितिः। एषां तैत्तिरीयाणां मतेन ऌकारोच्चारणं वर्स्वेनैव क्रियते। तत्र वर्स्वा इति बहुवचनोपादानेन तस्य स्थानस्य शरीरं महदस्ति। ऋऌवर्णयोः स्थानभेदः स्थानैक्यं चोच्चारणस्य शैल्या भेदेन कर्तुं शक्यते।

**उच्चारणशैलीभेदात्स्थानभेदः**

अथोच्चारणरीतिः प्रदर्श्यते—ह्रस्वाकारे उच्चारणीये ओष्ठौ हनू च नात्यन्तमुपश्लिष्टे तेनायं संवृतः। दीर्घप्लुतयोस्तु तयोर्विश्लेषभूयस्त्वम्, तेन तौ विवृतौ। ओकारे उच्चार्यमाणे नातिव्यस्तता हन्वोः, ओष्ठयोस्तु उपश्लिष्टतरता, तेन विवृतप्रयत्नता। एकारोच्चारणे ओष्ठौ ईषत्प्रकृष्टौ हनू तु उपश्लेषिततरे। **'तालौ जिह्वामध्यमिवर्णे'**[1], **'एकारे च'**[2] तेनास्य हनू तालु च स्थानम्। ओष्ठौ जिह्वामध्यं च करणम्। जिह्वाया मध्यं जिह्वामध्यम्, तस्य अन्तौ ताभ्याम् उत्तराञ्जम्भ्यान् स्पर्शयति। हनुमूलयोरुपरिप्रदेशा उत्तरजम्भ्याः। अत्र अव्यञ्जनपूर्वक एकारे स्पर्शनम्। व्यञ्जनपूर्वके तु न स्पर्शनम्। दन्तपङ्क्तेरुपरिष्ठात् प्रदेशेषु ( वर्स्वेषु ) हन्वोः परस्परोपश्लेषः जिह्वाग्रस्य वर्स्वेषूपसंहारश्च कार्यः, ऋकारे ॠकारे ऌकारे चोच्चार्यमाणे।

अन्येषां मतेन अनुस्वारे हनूपसंहारः कार्यः। स्वरभक्तौ जिह्वाग्रस्य वर्स्वेषु उपसंहारः कार्य इत्यर्थः। तेषां मते अनुस्वारस्तावन्नासिक्यः। स्वरभक्तिरप्यर्कारार्धरूपेति। स्वमते तु वक्ष्यति आनुनासिक्यम्। **'अनुस्वारोत्तमा अनुनासिकाः'**[3], **'नासिकाविवरणादानुनासिक्यम्'**[4] स्वरभक्तेस्तु रेफस्थानादिकं भवति। **'रेफस्वरभक्तिः'**[5] इति हि वक्ष्यति।

इवर्णे उच्चार्यमाणे जिह्वामध्यं तालुनि जिह्वाया अधस्तनप्रदेशे उपसंहर्तव्यम्। तद ( जिह्वाया अधस्तनः प्रदेशः ) इवर्णस्य स्थानम्, जिह्वामध्यं करणम्। सव्यञ्जने

---

१. तै० प्रा० २।२२; २. तदेव—२।२३।
३. तै० प्रा० २।३०: ४. तदेव—२।५२; ५. तदेव—२१।१५।

एकारे उच्चार्यमाणे जिह्वामध्यं तालुनि उपसंहर्तव्यम्। तथा च सव्यञ्जनस्यैकारस्य तालु स्थानं जिह्वामध्यं करणम्। उवर्णे उच्चार्यमाणे ओष्ठयोरुपसंहारः परस्परं श्लेषः। अत्रोपसंहारो न हि सन्निकृष्टतामात्रम्, किन्तु सन्निकृष्टौ ओष्ठौ दीर्घौ च स्याताम्। अकारस्य अर्धम् ऐकारस्य औकारस्य च आद्यवयवो भवति। तेन तदीयाः स्थानकरणप्रयत्नास्तस्मिन्नंशे भवन्ति। एकेषां मते तु संवृतकरणतरम् अनयोरादिर्भवति। स्वमते तु संवृतकरणमेव। ऐकारस्य अवशिष्टोऽर्धः अध्यर्धमात्र इकारः। तेन तदीयाः स्थानकरणप्रयत्नास्तस्मिन्नंशे भवन्ति। औकारस्य उकारोऽध्यर्धमात्रः शेषो भवति, तेन तदीयाः स्थानकरणप्रयत्नास्तस्य भवन्ति।

अनुस्वार उत्तमाश्चानुनासिका भवन्ति। अनुस्वारोऽप्युत्तमवद् व्यञ्जनमेवास्मच्छाखायाम्[1], अर्धगकाररूपत्वात्। स्वराणां यत्रोपसंहारः संश्लेषविशेषस्तत्स्थानम्। यदङ्गमङ्गान्तरे वक्त्रा उपसंह्रियते तत् करणम्।

**अथ व्यञ्जनानां स्थानादीनि**

**'अन्येषां तु यत्र स्पर्शनं तत् स्थानम्'** [2]। स्वरेभ्योऽन्येषां व्यञ्जनानां तत् स्थानं यत्र स्पर्शनं क्रियते। यथा हनुमूलं कवर्गस्य। तालु चवर्गस्य। मूर्धा टवर्गस्य। दन्तमूलानि तवर्गस्य। उत्तरोष्ठः पवर्गस्य। तालु दन्तमूलानि दन्ता इत्यन्तस्थानाम्। ऊष्मादिषु स्पर्शनाभावादतिदेशादिना स्थानावगतिः।

**'येन स्पर्शयति तत् करणम्'**[3] व्यञ्जनानां तत्करणं येनाङ्गेन तत् स्थानं स्पर्शयति। यथा जिह्वा कवर्गादीनां चतुर्णां वर्गाणां यरलवानां च। अधरोष्ठः पवर्गवकारयोः। ऊष्मादीनां तु करणावगतिर्वक्ष्यते।

**व्यञ्जनोच्चारणप्रक्रिया**

अथ व्यञ्जनानामुच्चारणप्रक्रियोच्यते—कवर्गे उच्चार्यमाणे जिह्वामूलेन हन्वोर्मूलयोर्वर्णान् प्रापयेत्। कर्मत्वाविवक्षया अधिकरणत्वं विवक्षितं हनुमूलादीनाम्। चवर्गे कार्ये जिह्वामध्येन तालौ स्पर्शयेत्। टवर्गे कार्ये प्रतिवेष्टितेन जिह्वाग्रेण वर्णान् मूर्धनि स्पर्शयेत्। **'मूर्धशब्देन वक्त्रविवरोपरिभागो विवक्ष्यते'** इति त्रिभाष्यरत्नकृत्। **'शिरः'** इति वैदिकाभरणकारः[4]।

पवर्गे कार्ये ओष्ठाभ्याम् अन्योन्यं स्पर्शयेत्। अत्रोत्तरोष्ठः स्थानम्, उत्तरत्वसाम्यादेषां स्थानानाम्। अधरोष्ठः करणम्। तत्राधरेण तु विचाल्यतरेण उत्तरं स्पर्शयति। जिह्वाया मध्यं तस्य अन्तौ ताभ्यां तालौ स्पर्शयेद् यकारे उच्चार्यमाणे। रेफे कार्ये जिह्वाग्रस्य मध्येन दन्तमूलस्याभ्यन्तरे उपरिभागे स्पर्शयेत्।

---

१. तैत्तिरीयशाखायाम्। २. तै० प्रा० २।३३।
३. तदेव—२।३४। ४. तै० प्रा० २।३७।

**'ओष्ठान्ताभ्यां दन्तैर्वकारे'**[१] शब्देनात्र अधरोष्ठ उच्यते। ओष्ठस्य बाह्याभ्यन्तर-भेदेन द्वौ भागौ स्तः। दन्तैरिति सप्तम्यर्थे तृतीया। तथा च वकारे कार्ये उत्तरदन्तेषु अधरोष्ठस्याभ्यन्तरेणान्तभागेन स्पर्शयेदित्यर्थः सम्पद्यते। यत्र त्वसौ ओष्ठोपसंहार-योरोष्ठ्यस्वरयोर्मध्यवर्ती भवति, तत्र सामार्थ्याद् बाह्यः अन्तः करणं भवति। यकारा-दीनां चतुर्णां करणान्तव्यापारनिष्पाद्यत्वादन्तस्था इत्याख्या।

**'स्पर्शस्थानेषूष्माण आनुपूर्व्येण,'**[२] हकारस्य स्थानं पृथग् वक्ष्यते। ततोऽन्येषां पञ्चानां जिह्वामूलीय–श–ष–सोपध्मानीयानाम्। आनुपूर्व्येण कवर्गादीनां पञ्चानां वर्गाणां स्थानेषु उत्पत्तिर्भवति। तेषाम् ऊष्मणां करणमध्यं यदा विवृतं भवति, तदा ते स्वस्वरूपं लभन्ते। तेन एषां विवृतप्रयत्नता सिध्यति। तत्र प्रथमस्य ऊष्मणो हनुमूलोत्पादिनो जिह्वामूलौपलम्भात् जिह्वामूलीय इत्याख्याऽवकल्प्यते। हकारस्य तु उत्तमपरस्य अन्तस्थापरस्य च उरःस्थानं वेदितव्यम्। एतद्भिन्नश्च हकारः कण्ठ-स्थानः। तथा चोक्तं शिक्षायाम्—

**हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम्।**
**उरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्**[3] ॥ इति।

करणानुक्तौ स्थानमेव करणं वेदितव्यम्, **'शेषाः स्थानकरणाः'**[४] इत्यापिशलि-शिक्षावचनात्।

**'उदयस्वरादिसस्थानो हकार एकेषाम्'**[५] एकेषां मतेन हकारात् परस्य वर्णस्य य आदिस्तत्समानस्थानो हकारो भवतीत्यर्थः। ऐकारौकारयोरंशद्वयं भिन्नस्थानं भवति, ताभ्यां पूर्वे हकारे स्थानसंशयो मा भूदिति आदिशब्द उपादीयते।

विसर्जनीयः पूर्वस्वरस्य अन्तेन समानस्थानो भवति एकेषां मतेन। अन्तग्रहण-मपि एतदैकारौकारयोरसन्देहार्थम्।

नासिक्या यमा नासिकास्थाना भवन्ति। मुखनासिक्या वा। एवमुक्तस्य पक्षद्वयस्य व्यवस्थाऽऽश्रयितव्या। स्पर्शेभ्यः परे प्रथमादिव्यपदेशभाजो मुखनासिक्याः। हकारात् परस्तु नासिकामात्रस्थान इति।

**'वर्गवच्चैषु'**[६] अत्र ये मुखनासिक्या अनन्तरोक्ताश्च शब्दा अन्वादिष्टाः, तेषु वर्गवत् स्थानयोगो भवति।

एतदुक्तं भवति—मुखशब्देनात्र पञ्चापि वर्गस्थानानि संगृहीतानि। तत्र कवर्गीयात् परस्य नासिक्यस्य हनुमूलं तावद् द्वितीयं स्थानं भवति। चवर्गीयात् परस्य तालु। एवं तत्तद्वर्गीयात् परस्य तत्तद्वर्गस्थानं द्वितीयस्थानमित्यवगन्तव्यम्।

---

१. तै० प्रा० २।४३। २. तै० प्रा० २।४४। ३. पा० शि० १५।
४. तै० प्रा० २।४६। ५. तदेव–२।४७। ६. तदेव–२।५१।

अनुनासिका ये वर्णा अनुस्वारोत्तमास्तेषामानुनासिक्यं नासारन्ध्रस्य विस्ताराद् भवति। नासिक्येषु नासिका संवृतैव भवति। ळकारस्य तु स्थानादिकमत्र नोच्यते संहितायां तदभावात्।

**यमानां स्वरभक्तेश्च विचारः**

अत्र यमानां स्वरभक्तेश्च विचारः क्रियते। तत्र **'स्पर्शादनुत्तमादुत्तमपरादनुपूर्व्यान्नासिक्याः'**[1] उत्तमव्यतिरिक्तेभ्यः प्रथमादिभ्यः स्पर्शेभ्य उत्तमपरेभ्यः परत आनुपूर्व्यात् प्रथमादयो नासिक्या आगमा भवन्ति। तदुदाहरणानि विस्तरभयान्नोच्यन्ते। पीठिकायां विशेषतो विचारो भविष्यति। **'तान् यमानेके'**[2] तान् नासिक्यान् एके शाखिनो यमान् ब्रुवते। **'हकारान्नणमपरान्नासिक्यम्'**[3] नकारणकारमकारपराद् हकारात् परतो नासिक्यागमं केचिदिच्छन्ति।

नन्वयमागमविधिर्नोपपद्यते प्रथमानिर्देशाभावात्। नैतदस्ति—अस्ति ह्यत्र प्रथमानिर्देशः **'आनुपूर्व्यान्नासिक्याः'**[4] इति। तेनास्मिन् प्रकरणे आगमविधानमुपपद्यते। हकारादिति पञ्चमीनिर्देशश्चागमविधावेवोपपद्यते। यथा—**'अघोषादूष्मणः परः'**[5], **'स्पर्शादनुत्तमात्'**[6] अस्मिंस्तु सूत्रे द्वितीयानिर्देश एकेशब्दान्वयार्थः।

नन्वयं शब्दान्तरादेशः किं न स्यात्? विकारिणोऽनुपदेशात्। सतो हि कार्यिणः कार्येण भवितव्यम्। असति तस्मिन् कस्यादेशः स्यात्? गुणविधिस्तु नैव घटते। गुणविकारिणो गुणशब्दस्य च प्रथमानिर्देशे हि स भवति, तस्मादिह सूत्रशक्त्या वर्णान्तरागमविधिनिश्चयाच्छिक्षायामनुक्तोऽपि पञ्चमो नासिक्योऽस्माकमवश्याभ्युपगन्तव्यः। हकारस्य मकारान्तस्थापरस्योच्चारणे विशेषः शिक्षायां स्मर्यते—

**न वायुं ह्मसंयोगे नासिकाभ्यां समुत्सृजेत्।**
**न वदेदुरसाऽत्यन्तं तथा यरल्वेषु च॥**

**'रेफोष्मसंयोगे रेफः स्वरभक्तिः'**[7] रेफस्योष्मणश्च संयोगे सति तत्रोष्मसंयुक्तो रेफः स्वरभक्तिरिति जानीयात्। भक्तिः अवयवः। योऽस्य रेफस्य समानकरणः स्वरस्तद्भक्तिः स्यात्। ऋकारश्चास्य जिह्वाग्रकरणत्वेन श्रुत्या च समानधर्मा। अर्थादेकमात्रिकस्य ऋकारस्य आदिः, अणुमात्रः स्वरः मध्ये रेफः, अर्धमात्रः अन्तेऽप्यणुमात्रः स्वरभागः एतद् ऋकारस्वरूपम्। अत्र ऋकारमध्यवर्तिनि रेफे विभज्यमाने सति तौ भागौ पूर्वोत्तराणुसहितौ प्रत्येकं स्वरभक्तिनामधेयं भजेते। सा च स्वरभक्तिरर्धमात्रा। क्व का स्वरभक्तिरित्याशङ्क्य शिक्षाकारैरुक्तम्—

---

१. तै० प्रा० २१।१२। २. तदेव–२१।१३।
३. तदेव–२१।१४। ४. तदेव–२१।१२।
५. तै० प्रा० १४।९। ६. तदेव–२१।१३। ७. तदेव–२१।१५।

**शषसेषु स्वरोदयां हकारे व्यञ्जनोदयाम्।**
**शषसेषु विवृतां हकारे संवृतां विदुः ॥** इति ।

स्वरभक्त्यन्तरमपि शिक्षायामुक्तम्—

**करेणुः कर्विणी चैव हरिणी हारितेति च ।**
**हंसपदेति विज्ञेयाः पञ्चैताः स्वरभक्तयः ॥**

कीदृश्यः क्व च एता इति चेत्—

**करेणू रहयोर्योगे कर्विणी लहकारयोः ।**
**हरिणी रशसानां च हारिता लशकारयोः ॥**
**या तु हंसपदा नाम सा तु रेफषकारयोः ।**
**एवं पञ्चविधां भक्तिमुच्चरेत् स्वर्गकामुकः[1] ॥**

विस्तरस्तु पीठिकायां द्रष्टव्यः । उदात्तादिस्वरविषयकोऽपि विचारस्तत्रैव करिष्यते ।

**यजुःप्रातिशाख्यानुसारं वर्णोपन्यासः**

तैत्तिरीयानन्तरं यजुःप्रातिशाख्यमतेन वर्णोपन्यासः । तत्र अ आ इ ई उ ऊ ऋ ॠ ऌ[2] ए ऐ ओ औ आ ३, ई ३ ओ ३ इति षोडश स्वराः । तेषु अ इ उ ऋ इति चत्वारो ह्रस्वदीर्घभेदेन अष्टौ, ऌकारः एकः, सन्ध्यक्षराणि चत्वारि । संकलनया त्रयोदश । शुक्लयजुर्वेदे आ३ ई३ ओ३ इति त्रय एव प्लुताः । एवं षोडशैव स्वराः (१६) शुक्लयजुःशाखिनाम् । पञ्चविंशतिः स्पर्शाः (२५) । चत्वारोऽन्तस्थाः (४) । चत्त्वार ऊष्माणः (४) । अनुस्वारविसर्गौ द्वौ (२) । यमाश्चत्वारः (४) । तथा च माध्यन्दिनानां पञ्चपञ्चाशदेव वर्णाः सन्ति । एषां विशेषेण विचारः पीठिकायां करिष्यते । तत्र हि प्रथमेऽध्याये—

**त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ।**
**द्विचत्वारिंशद् व्यञ्जनानि एतावान् वर्णसंग्रहः[3] ॥**

**'प्लुताश्चोक्तवर्जम्'**[4], इत्यनेन **'सर्वमग्ना३'**, **'इ लाजी३ञ्छाची३निति त्रिमात्राणि च'**[5] **'प्रणवश्च'**[6], **'विवेशा ३ इति चानुदात्तम्'**[7] **'आसी ३ दिति चोत्तरं विचार'**[8] एभिः सूत्रैरुक्तेभ्यः प्लुतेभ्योऽन्ये स्वराः प्लुता न सन्ति माध्यन्दिनानाम् ।

अस्मिन् प्रातिशाख्ये प्रारम्भे वर्णसमाम्नायमनुपन्यस्य अन्तिमेऽष्टमाध्याये वर्णा उपन्यस्ता इति विशेषः । भाष्यकारेण अनन्तभट्टेन **'वर्णसमाम्नायस्य सर्वोपयोगित्वाद**

---

१. तै० प्रा० २१।१५ । २. लृकारप्रयोगोऽन्वेषणीयः । ३. शु० यजुः प्रा० ८।२८ ।
४. तदेव–८।३० । ५. तदेव–२।५० ।
६. तदेव–२।५१ । ७. तदेव–२।५२ । ८. तदेव–२।५३ ।

**यद्यपि प्रथमाध्याय एव वक्तुमुचितः, तथापि मुनेः स्वतन्त्रेच्छत्वात् अन्तिमाध्याये कथ्यते'** इत्युक्तम्। तथा च तन्मतस्यापि प्रथममस्योपन्यासः उचित इत्यायाति।

**'तस्मिलँ ळ्ह जिह्वामूलीयोपध्मानीयनासिक्या न सन्ति, माध्यन्दिनानाम्[1]' 'लृकारो दीर्घः प्लुताश्चोक्तवर्जम्[2]'** इति सूत्रप्रामाण्यात् पञ्चपञ्चाशदेव वर्णा माध्यन्दिनानां शाखायां सिध्यन्ति। पञ्चषष्टेर्वर्णानां तत्रोपन्यासस्तु सम्भाव्यमानवर्णदृष्ट्या मन्तव्यः। एषां वर्णानां स्थानप्रयत्नादिकन्तु पीठिकायां प्रदर्शयिष्यते।

ननु सति कुड्ये चित्रमिति न्यायेन वर्णोपदेशानन्तरमेव **'सिमादितोऽष्टौ स्वराणाम्[3]', 'सन्ध्यक्षरं परम्[4]', 'व्यञ्जनं कादि'** इत्यादीनां सूत्राणामुपन्यासो युक्तः।

अत्र प्रातिशाख्ये तु अष्टमाध्याये वर्णसमाम्नायो निर्दिष्टोऽस्ति। किञ्च तत्र अ इति आ इति आ ३ इतीत्येवंरूपेण प्लुतानामप्युपन्यासात् **'सिमादितोऽष्टौ स्वराणाम्[5]'** इत्यादिना सूत्रेण स पाठो ग्रहीतुं न शक्यते 'अ आ इ ई उ ऊ ऋ ॠ' इत्येवंरूपाणामेवाष्टानां वर्णानां सिम्संज्ञाया निश्चिततत्वात्, इति चेदस्यां स्थितौ **'अथ शिक्षाविहिताः[6]'** इति सूत्रस्यायमेव वक्ष्यमाणोऽर्थः स्वीकर्तव्यः। तथा हि शिक्षाविहिता वर्णाः स्थानकरणप्रयत्नादयश्चानुसन्धातव्या इति। तथा सति शिक्षां प्रथममधीत्यैव छात्रः प्रातिशाख्याध्ययने प्रवर्तेत। नन्वेवमस्य सूत्रकारस्याष्टमाध्याये वर्णोपदेशो व्यर्थ एव; किञ्च स्वानभिमतवर्णोपदेशेन युक्त्यसङ्गत एव स पाठः प्रतीयत इति चेत्, न, लोके सम्भाव्यमानानामेव वर्णानां तत्रोपन्यासस्याभिप्रेतत्वात्।

**ऋक्प्रातिशाख्यानुसारं वर्णोपन्यासः**

ऋक्प्रातिशाख्यानुसारे वर्णसमाम्नायः प्रदर्श्यते। तत्र हि लौकिको वर्णसमाम्नायो द्विविधः—प्रथमस्तावद् अ, आ, ऋ, ॠ, इ, ई, उ, ऊ, ए, ओ, ऐ, औ, ऌ, ई ३ प्लुत इति चतुर्दशैव स्वराः। १. क ख ग घ ङ। २. च छ ज झ ञ। ३. ट ठ ड ढ ण। ४. त थ द ध न। ५. प फ ब भ म। ६. य र ल व। ७. ह् श ष स। ८. अः (विसर्गः)। ᳵक इति जिह्वामूलीयः। ᳶप इत्युपध्मानीयः। अं (अनुस्वारः)। हुँ इति नासिक्यः। कुं खुं गुं घुं इति यमाः। अयं हि वर्णक्रमः सूत्रकाराभ्युपगतः। इममेव क्रममवलम्ब्य **'अष्टौ समानाक्षराण्यादितः[7]'** इत्यादीनि सूत्राणि प्रवृत्तानि।

ऋक्प्रातिशाख्यभाष्यानुसारं लौकिको वर्णसमाम्नायक्रमो द्विविध इत्यायाति। तथा च पूर्वमुपन्यस्त एकः। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ, क ख ग घ ङ, च छ ज झ ञ, ट ठ ड ढ ण, त थ द ध न, प फ ब भ म, य र ल व, श स ष ह, ᳵक

---

१. यजुः प्रा० ८।२९।   २. तदेव—८।३०।   ३. तदेव—१।४४।
४. तदेव—१।४५।   ५. यजुः प्रा० १।४४।   ६. तदेव—१।२९।
६. ऋ० प्रा० १।१।

(इति जिह्वामूलीयः), ॅप (इत्युपध्मानीयः), अं (इत्यनुस्वारः), अः (इति विसर्जनीयः), हुं (इति नासिक्यः), कुं खुं गुं घुं (इति यमाः)।

**'एते पञ्चषष्टिर्वर्णा ब्रह्मराशिरात्मवाचः**[1]' अयं चापरो लौकिको वर्णक्रमो यश्च यजुःप्रातिशाख्येऽष्टमाध्याये परिगृहीतः।

अत्रैव प्रातिशाख्ये **'इति स्थानानि**[2]', **'अत्र यमोपदेशः**[3]', एतदनन्तरं **'जिह्वामूलं तालु चाचार्य आह, स्थानं डकारस्य तु वेदमित्रः**[4]', **'द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकारः। ळहकारतामेति स एव चास्य डकारः सन्नूष्मणा सम्प्रयुक्तः। इळा साळहा चात्र निदर्शनानि वीड्वङ्गः इत्येतदवग्रहेण**[5]' इति आभ्यां सूत्राभ्यां द्वौ अपरौ अपि वर्णौ ळकारळहकारौ मन्तव्यौ। किञ्च स एव डकारो जिह्वामूले तालुस्थानो यदा ऊष्मणा हकारेण संयुज्यते, तदा ढकाररूपं धत्ते, स एव ढकार ळहकारतामापद्यते। एतेन स्पष्टं प्रतीयते यद् ढकारो नहि वर्णान्तरम्, किन्तु संयुक्त एव वर्णः। अनया रीत्या सर्वेऽपि द्वितीयचतुर्थवर्णाः, प्रथमतृतीयवर्णैर्हकारयोगेनैव निष्पद्यन्ते, इति षोडशमातृकापक्षोऽनेन दृढीभवति।

एवं च ऋक्प्रातिशाख्यमते चतुर्दशस्वराः, पञ्चविंशतिस्पर्शाः, चत्वारोऽन्तस्थाः, अष्टौ ऊष्माणः, एको हुँ इति नासिक्यः, चत्वारो यमाः, द्वौ ळकारळहकारौ सङ्कलनया अष्टपञ्चाशद् वर्णाः सञ्जाताः।

**अनुस्वारोच्चारणे विशेषः**

प्रसङ्गतोऽनुस्वारोच्चारणविषये किञ्चिदुच्यते—

**नपुंसकं यदूष्मान्तं तस्य बह्वभिधानजः।**
**अनुस्वारो दीर्घपूर्वः सिष्यन्तेषु पदेषु सः**[6]॥

अत्र हि भाष्ये—**'किमर्थमनुस्वारस्य दीर्घपूर्वस्य पदमध्ये वर्तमानस्य बहुभिः श्लोकैर्लक्षणं क्रियते। ननु पाठादेव सिद्धम्, यथाऽन्येषां वर्णानां पाठात् सिद्धम्, सत्यम्, किन्तु दुराम्नाननिवृत्त्यर्थमनयोः शिक्षापटलयोर्बहूनां वर्णानां लक्षणं क्रियते। कथं पुनर्दुराम्नानप्रसङ्गः? सन्ति ह्यतीर्थोषिता अलसा अगुणदोषज्ञा अन्योन्याध्यापकाः सर्ववर्णान्यत्वजनयितारः। तद्दोषनिवृत्त्यर्थम् आचार्येण शिष्यहितार्थमिदमारब्धम्। अनुस्वारस्य तावत् स्थाने ङकारं जनयन्ति, तस्माद् ङकारात् परं ककारमन्तःपातं जनयन्ति 'हवींषि' 'सर्पींषि', 'भासांसि'। तन्निवृत्त्यर्थम् अनुस्वारलक्षणं क्रियते**[7]' इति। तथा च **'हवींषि'** इत्यत्र **'हवीङ्क्षि'** इत्येवमुच्चारणं पूर्वं बहुभिः कृतमासीत्, तन्निवृत्त्यर्थमिदमुच्यते।

---

१. शु० यजुःप्रा० ८।१५।　२. ऋ० प्रा० १।४९।　३. तदेव–१।५०।
४. तदेव–१।५१।　५. तदेव–१।५२।　६. तदेव–१३।२२।
७. ऋ० प्रा० १३।२२–सूत्रे भाष्यम्।

**सामप्रातिशाख्यानुसारं वर्णोपन्यासः**

सामप्रातिशाख्ये तु ह्कारः, अकारः, आकारः विसर्जनीयश्च कण्ठस्थानाः। अथवा उरसि विसर्जनीयः। कवर्गऋकारॠकारजिह्वामूलीया जिह्वामूलस्थानाः। तालुस्थानाः शकारचकारयकाराः, इकार ईकार एकार ऐकारश्च। यद्यपि **'तालुनि इच्येः'**[1] इति सूत्रे भाष्ये ऐकारो न लिखितः, तथापि स तत्रैव सन्निवेश्यः। मूर्धन्याः षकारटवर्गाः। दन्त्यास्तवर्गसकारलकाराः। रेफो दन्त्यो दन्तमूल्यो वा। ओष्ठस्थाना वकार ओकार औकार उपध्मानीयपवर्गौ उकार ऊकारश्च, एवं स्थानं तेषां वर्णानां तत्रोक्तम्। प्रथमप्रपाठके च मूले दश समानानि अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ इत्येवं-रूपाणि अक्षराणि। ए ऐ ओ औ इति चत्वारि सन्ध्यक्षराणि। आ ॠ ॡ ई ऊ ऋ ऌ इ उ अ दशैते नामिनः। कादयः पञ्चविंशतिः स्पर्शाः। य र ल वा इति चत्वारोऽन्तस्थाः। ह् श ष स इत्यूष्माणो योगवाहाः चत्त्वारः। अथायोगवाहाः अः इति विसर्जनीयः, ᳵक इति जिह्वामूलीयः, ᳶप इत्युपध्मानीयः। हुमित्यनुनासिकः। कुं खुं गुं घुं इति यमाश्चत्वारः। अथानुस्वारौ अं आं इत्यनुस्वारौ। ह्रस्वाद्दीर्घः, दीर्घाद् ह्रस्वः। दशायोगवाहाः। एवं चैतन्मते त्रिपञ्चाशदेव वर्णाः सन्ति। परमत्र **'किट्-किडाकारौ हन्वाम्'**[2] इति सूत्रेण कोऽयं वर्ण उक्त इति न ज्ञायते।

तृतीये दशके प्रथमसूत्रं **'अर्धं वा'**[3] इति। अनेन यकार-वकारयोरर्धं लुप्यते, तेन पादमात्रिकाविमौ।

एवं च शाकटायनेन एकोनषष्टिर्वर्णाः सामप्रातिशाख्ये निर्दिष्टाः। एतेषां स्थान-प्रयत्नादयः पीठिकायां द्रष्टव्याः।

लकारस्य रेफः पादमङ्गुलिमित्येवमादीनाम्[4]।

**'कृपो रो लः'**[5] वालमूललध्वलमङ्गुलीनां वा लो रमापद्यते।

**अथर्वप्रातिशाख्यानुसारं वर्णोपन्यासः**

अथर्वप्रातिशाख्यानुसारं तु वर्णा नहि तत्र स्वरूपतो निर्दिष्टाः; किन्तु वर्णानां स्थानकरणादिनिर्देशस्तु कृत एव। तेनैव वर्णानामप्युपन्यासः क्रियते। तत्र टीकायाम्— **'किं पुनः स्थानम्, किं करणम्' यद् उपक्रम्यते तत् स्थानम्, येनोपक्रम्यते तत् करणम्**[6]। **'स्वराणां यत्रोपसंहारस्तत् स्थानम्**[7]**'**, (उपसंहारो नाम संश्लेषविशेषः)। **'यदुपसंहरति तत् करणम्**[8]**', 'अन्येषां तु यत्र स्पर्शनं तत् स्थानम्**[9]**', 'येन स्पर्शयति तत् करणम्**[10]**'** इति।

---

१. ऋ० प्रा० १।५। २. सा० प्रा० २।१०।
३. सा० प्रा० ३।१। ४. अथर्वप्रा० पृ० ३७८। ५. अष्टा० ८।२।१८।
६. अ० प्रा० १।१८। ७. तदेव–२।३१। ८. तदेव–२।३२।
९. तदेव–२।३३। १०. तदेव–२।३४।

तत्र हि स्थानानि वक्ष्यमाणानि निर्दिष्टानि सन्ति—१. कण्ठः, २. तालुः, ३. मूर्धा, ४. दन्ताः, ५. औष्ठौ, ६. नासिका।

करणानि च यथा—१. अधरकण्ठः, २. हनुमूलम्, ३. मध्यजिह्वम्, ४. जिह्वाग्रम्, प्रतिवेष्टितम्, ५. द्रोणिका, ६. जिह्वाग्रं प्रस्तीर्णम्, ७. अधरोष्ठम्, ८. नासिका, ९. मुखनासिकम्, १०. दन्तमूलम्, ११. स्पृष्टम्, १२. ईषत्स्पृष्टम्, १३. विवृतम्, १४. विवृततमम्, १५. अत्यन्तविवृततमम्, १६. संवृतम्, १७. तत्र कण्ठ्यानामधरकण्ठः[1]' इति सूत्रेण अकुहविसर्गाणां कण्ठः स्थानम्, अधरकण्ठः करणम्।

जिह्वामूलीयानां जिह्वामूलं स्थानम् हनुमूलं करणम्। इचुयशानां तालु स्थानम्, मध्यजिह्वं करणम्। ऋटुरेफाणां मूर्धा स्थानम्, प्रतिवेष्टितं जिह्वाग्रं करणम्। मूर्धन्यषकारस्य द्रोणिका करणम्। ऌतुलसानां दन्ताः स्थानं प्रस्तीर्णं जिह्वाग्रं करणम्। ओष्ठ्यानाम् अधरोष्ठः करणम्। नासिक्यानां नासिकास्थानम्, नासिकैव करणम्। केषाञ्चिन्मते तु अनुनासिकानां तत्तत्स्थानम्, मुखनासिकं करणम्। रेफटस्य दन्तमूलानि करणम्।

इदानीं करणैः स्थाने कीदृशः प्रयत्नो विधेय इत्यत्रोच्यते। स्पर्शानां स्पृष्टं करणम्, अन्तःस्थानाम् ईषत्स्पृष्टम्, ऊष्मणां विवृतं च, चकाराद् ईषत्स्पृष्टमपि; स्वराणां च। एके स्वराणां स्पृष्टमाहुः। यकारे ओकारे च विवृततमम्, आकारस्य अत्यन्तं विवृततमम्। अकारः संवृतः। संस्पृष्टरेफम् ऋवर्णम् दीर्घप्लुतयोः संस्पृष्टरेफं पूर्वा मात्रा भवति। ऌवर्णं लकारेण संस्पृष्टम्। संध्यक्षराणि संस्पृष्टवर्णानि भवन्ति। एकवर्णवच्च तत्र व्यवहारः। अत्र व्यञ्जनस्यापि एका मात्रा निर्दिष्टास्ति। **'लकारस्य रेफः पादमङ्गुलिमित्येवमादीनाम्[2]'।**

महाभाष्येऽपि लकारस्य रेफो विधीयते। **'बालमूललध्वलमङ्गुलीनां वा लो रमापद्यते[3]'**। बाह्यप्रयत्नविषये तु—**'द्वितीयचतुर्थाः सोष्माणः[4]'**। अर्थात् प्रथमतृतीयाः प्रतिवर्गम् अनूष्माणः, द्वितीयचतुर्थास्तु सोष्पाणः। एवं च—

**सस्थानैरूष्मभिः पृक्तास्तृतीयाः प्रथमाश्च ये।**
**चतुर्थाश्च द्वितीयाश्च सम्पद्यन्त इति स्थितिः॥** इति।

अथर्वभाष्यीयश्लोकबलाद् ऊष्मवायुसंपर्कवशादेव प्रथमास्तृतीयाश्च द्वितीयाश्चतुर्थाश्च क्रमशः सम्पद्यन्ते। **'उत्तमा अनुनासिकाः[5]'**, **'नासाप्रयत्नात्त एव तृतीया**

---

१. अथर्वप्रा० १।१९।
२. अ० प्रा० १।६०।
३. तत्रैव–पृ० ३९८ भाष्यम्।
४. अ० प्रा० १।१०।
५. तदेव–१।११।

उत्तमाः संपद्यन्ते ।' उपरिष्टाच्च—'श्वासोऽघोषेषु अनुप्रदानः[1]', 'नादो घोषवत्स्वरेषु[2]' इति । अनयोः सूत्रयोरयं भावः—यदा हि प्रयोक्ता कण्ठाद् बहिर्भवेन कण्ठसंवरणरूपेण बाह्यप्रयत्नेन वर्णमुच्चारयति, तदा काकले कश्चनापूर्वः स्पन्दो भवति, यो हि नाद-प्रयत्नपदेन व्यवह्रियते । यदा च गलबिलस्य विवारो भवति, ककाले कश्चन क्षोभो न भवति, तदा वायुः सध्र्यूङ्निःसरति, तदा तत्र नादात्मको ध्वनिर्न भवति; किन्तु केवलं श्वसनमात्रं प्रतीयते । अयं नादः स्पन्दनमुच्यते ।

**पाणिनिशिक्षानुसारं वर्णाः**

तत्र सम्प्रति प्रचलितपाणिनिशिक्षानुसारं वर्णाः प्रदर्श्यन्ते । तथा चायं श्लोकपाठः—

**त्रिषष्टिर्वा चतुःषष्टिर्वर्णाः सम्भवतो मताः ।**
**प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा ॥**
**स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।**
**यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥**
**अनुस्वारो विसर्गश्च ᳵकᳵपौ चापि पराश्रितौ ।**
**दुःस्पृष्टश्चेति विज्ञेय लृकारः प्लुत एव च ॥** इति ।

एतत् शिक्षोपरि बहवो विद्वांसः स्वस्वमतानुसारं टीकामरचन् । तेषु कश्चन अनुस्वारविसर्गजिह्वामूलीयोपध्मानीयानगणयित्वैव चतुःषष्टिं संख्यामपूरयन् । लकारं द्विःस्पृष्टपदेन निरदिशत् । लृ३कारं प्लुतं चामन्यत । सङ्कलनाज्ञानशून्यतया तदुक्तिः सर्वथा दृष्टिप्रक्षेपानर्हैव ।

अपरोऽपि कश्चन त्रिषष्टिरित्यादिसंख्या न व्यक्तीकृता; किन्तु धर्मकृतेत्यादिना स्वेनोत्थापितां शङ्कां समाधात् । तत् सर्वं वर्णविभाजकधर्माज्ञानविजृम्भितमेव । वर्णविभाजकधर्माश्च—

**अनुप्रदानात् संसर्गात् स्थानात् करणविन्ययात् ।**
**जायते वर्णवैशेष्यं परिमाणाच्च पञ्चमात्[3] ॥**

इत्यनेन सूत्रेण तैत्तिरीयप्रातिशाख्ये प्रोक्ताः ।

एवं सति वर्गे वर्गे तुल्यस्थानानां तुल्यप्रयत्नानामपि प्रथमतृतीयानामनुप्रदान-कृतः श्रुतिविशेषः । 'कचटतप', गजडदब' इति ।

तत्र तुल्यस्थानप्रयत्नानुप्रदानानामपि प्रथमद्वितीयानां तथा तृतीयचतुर्थानां तथा तृतीयपञ्चमानां च संसर्गकृतः श्रुतिविशेषः । द्वितीयचतुर्था ऊष्मणा संसृज्यन्ते अनुस्वारेण पञ्चमाः । एवं तुल्यप्रयत्नानुप्रदानानामपि स्थानकृतः श्रुतिविशेषः । **यथा**

---

१. अ० प्रा० १।१२ । २. तदेव—१।१३ । ३. तै० प्रा० २३।२ ।

अ ऋ इ उ। क च ट त प। य र ल व। ह् श ष स। तुल्यस्थानानुप्रदानानामपि इकारजकारयकाराणां करणकृतः श्रुतिविशेषः। तुल्यस्थानप्रयत्नानुप्रदानयोरपि समानाक्षरयोः परिमाणकृतः श्रुतिविशेषः। यथा—अ आ। ऋ ॠ। इ ई। उ ऊ। तथा च पूर्वोक्तपाणिनिशिक्षानुसारम्—

अ आ आ ३। इ ई ई ३। उ ऊ ऊ ३। ऋ ॠ ॠ ३। ऌ। ए ए ३। ऐ ऐ ३। ओ ओ ३। औ औ ३ इति—एकविंशतिः स्वराः। क ख ग घ ङ। च छ ज झ ञ। ट ठ ड ढ ण। त थ द ध न। प फ ब भ म इति पञ्चविंशतिः स्पर्शाः। य र ल व इति चत्वारोऽन्तस्थाः। श ष स ह् इति चत्वार ऊष्माणः। कुं खुं गुं घुं इति चत्वारो यमाः। एवम् २१+२५+४+४+४ (५८) अष्टपञ्चाशत्, अं अः, ᳵक ᳶप इति चत्वारोऽनुस्वारविसर्गजिह्वामूलीयोपध्मानीया (६२)। दुःस्पृष्टः ळकारः (ईळे) प्लुत ऌ३कारः चतुःषष्टिर्वर्णाः।

केषाञ्चिन्मते दुःस्पृष्टो नास्ति केषाञ्चिन्मते प्लुत ऌ३कारो नास्ति। तेषां मते त्रिषष्टिर्वर्णाः।

पञ्जिकाभिधे शिक्षाभाष्ये तु—

ह्रस्वादिभेदैश्चत्वारः प्रथमा द्वादश स्मृताः।
ऌकारो ह्रस्व एवैचोऽष्टौ स्वरा एकविंशतिः॥ १॥
पञ्चविंशतिरष्टाब्धिः स्पर्शाः स्युर्यादयो यमाः॥ २॥
अनुस्वारो विसर्गश्च ᳵक ᳶपौ प्लुत ऌ३ कारकः।
त्रिषष्टिरेवं वर्णाः स्युर्ह्रस्वदीर्घादिभेदतः॥ ३॥
अनुस्वारद्वयाद् वर्णाश्चतुःषष्टिरितीरिताः। इति।

एवं सति एतन्मतेन दुःस्पृष्टं ळकारं विहाय ह्रस्वदीर्घभेदेन अनुस्वारद्वयस्वीकारात् चतुःषष्टिवर्णा निर्दिष्टाः सन्ति। तत्रैव भाष्ये दुःस्पृष्टश्चेत्यस्य ईषत्स्पृष्टो वर्णधर्मो न वर्णान्तरम्, तेन दीर्घप्लुतभेदेन ईषत्स्पृष्टयोः ऋकारऌकारयोः सत्त्वात् चत्वारोऽधिकाः स्युरिति नापादनीयमिति तद्भाष्यकर्तुरभिप्राय इत्यायाति।

**पाणिनीये व्याकरणे वर्णनां स्थितिः**

अत्र संक्षेपेण किञ्चिद् विचार्यते। पूर्वोक्तया पद्धत्या शिक्षायां प्रातिशाख्ये च वर्णा निर्दिष्टाः; परं पाणिनीयव्याकरणे कियन्तो वर्णा अद्य यावदात्मलाभमाप्ताः सन्ति, तान् निर्दिशामि।

तत्र चतुर्दशसु सूत्रेषु वर्णसमाम्नाये स्वरूपतो निर्दिष्टैर्वर्णैर्येऽपरे प्रत्याय्यन्ते, ते एकविशतिः स्वराः। प्लुतम् ऌकारं च गृहीत्वा द्वाविंशतिः। स्पर्शाः पञ्चविंशतिः। यादयोऽष्टौ। एवम्—२२+२५+४+४=५५ पञ्चपञ्चाशदेव बुध्यन्ते। 'अयोगवाहा-

नास्मद्सूपसंख्यानम्[1]' इति वार्तिकेन '**के पुनरयोगवाहाः विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारनासिक्ययमा**[2]', इत्यनेन भाष्येण च इमे नव तत्र संकल्यन्ते, तर्हि चतुःषष्टिर्वर्णाः। चतुर्मात्रौ ऐचौ। दीर्घप्लुतभेदेन, ईषत्स्पृष्टयोर्ऋकारऌकारयोश्च सत्त्वाच्चत्वारोऽधिकाः।

'**व्योर्लघुप्रयत्नतरः शाकटायनस्य**[3]' इत्यनेन पादमात्रिकयोर्यकारवकारयोः सत्त्वात् पुनरपरौ द्वौ वर्णौ। एवं संकलनया द्वासप्ततिः। उरस्यस्य हकारस्यापि स्वीकारात् त्रिसप्ततिर्वर्णाः पाणिनीये मते सिध्यन्ति। यद्यपि उरस्यो हकारः पाणिनीये मते नायाति; तथापि पाणिनेरपि पूर्वं '**हयवरट्**[4]', '**हल्**[5]' इत्यनयोः सूत्रयोर्द्विविधस्य हकारस्य सत्तानुमीयते।

यद्यपि महाभाष्यकारेण द्वयोर्हकारयो रूपमेकमेव मत्वा फलं प्रदत्तम्, तथापि स्थानभेदेन वर्णभेदाङ्गीकारे बाधाभावात् किमुत वर्णैक्ये विरोधादेव द्विविधो हकारो गवेषकैरभ्युपगन्तव्य एव। यद्यप्यनुस्वारद्वैविध्यं सूत्रवार्तिकभाष्येषु नोपलभ्यते; तथापि शिक्षासु तैत्तिरीयप्रातिशाख्ये ऋक्तन्त्रे व्याकरणे तृतीयदशके 'अनुस्वारौ च'[6] इति सूत्रे ह्रस्वाद् दीर्घो दीर्घाद्ध्रस्व इति भाष्ये चानुस्वारद्वैविध्यम् शिक्षाभाष्ये पञ्चिकायां चोपलभ्यते। तदुपलम्भाद् अन्योऽप्येको वर्णोऽधिकः संग्रहीतव्यः, स च द्विमात्र इति कथयितुं शक्यते इति चेत्, न, परिमाणकृतो वर्णभेदः स्वरविषय एवेति तैत्तिरीयप्रातिशाख्यभाष्योक्त्या[7] तत्प्रयुक्तसंख्याधिक्यस्याप्रामाणिकत्वात्।

**सम्भाव्यमाना वर्णाः**

वस्तुतस्तु सम्भाव्यमानानां वर्णानां निरूपणं पद्धतिप्राप्तम्। यतो हि तत्तत्प्रातिशाख्येषु पञ्चषष्टिर्वर्णाः सम्भाव्यमानत्वेनैव निर्दिष्टाः। तथा च तद्रीत्या कियन्तो वर्णा इति चिन्तायामुच्यते—अ, इ, उ, ऋ इमे चत्वारो ह्रस्वदीर्घप्लुतभेदेन द्वादश। ऌकारो ह्रस्वप्लुतभेदेन द्विविधः। दीर्घप्लुतभेदेन एचोऽष्टौ। ईषत्स्पृष्टौ ऋकारऌकारौ दीर्घप्लुतभेदेन चतुर्विधौ। चतुर्मात्रौ ऐचौ। तथा चैवम्—१२ + २ + ८ + ४ + २ = २८। एवं संकलनयाष्टाविंशतिः स्वराः। पञ्चविंशतिः स्पर्शाः। यादयोऽष्टौ। अष्ट अयोगवाहाः। दीर्घोऽनुस्वारः। दुःस्पृष्टः ळकारः। हुँ इति नासिक्यो भाष्येऽयोगवाहेषु परिगणितः। उरस्यो हकारः। पादमात्रौ यकारवकारौ। तथा चैवम्—(२८ + २५ + ८ + ८ + १ + १ + १ + १ + २ = ७५)। एवं संकलनया पञ्चसप्ततिर्वर्णा अस्मिन् वाङ्मये विद्यन्ते।

---

१. महाभा० प्रत्याहाराह्निकम्–पृ० २८। २. महाभा० प० पृ० २८—वार्तिकम्।
३. अष्टा० ८।३।१८। ४. तदेव। ५. तदेव।
६. ऋ० त० ३।३। ७. तै० भा० २३।२।

यदि च एकमात्र एकार् ओकारश्च विद्येते, तर्हि सप्तसप्ततिर्भवेयुः। परमस्माकं संध्यक्षरविषये संस्कृतवाङ्मयानुसारमेकमात्रत्वं दोष इति न हि तयोः सम्भाव्यमानता स्वीकार्या। किञ्च ढकारस्थाने विधीयमानः ळहकारोऽपि गणनीयश्चेत् तर्हि अष्टसप्ततिर्भवेयुः। यदि तु रङ्गस्वरभक्ती अपि ग्रहीष्येते तर्हि अशीतिर्भवेयुः। यदि चैकमात्रोऽपि ङकारस्तर्हि एकाशीतिः।

अपरमपि किञ्चिदवशिष्यते। अरबीयभाषायां द्वौ हकारौ स्तः, परमस्माकं मते पञ्च ते सन्ति। तथा हि विसर्गः कण्ठ्यो हकारः, उरस्यो हकारः, पादमात्रो हकारो यो हि हार्धमात्रापदेनोच्यते। हार्धार्धमात्राऽपि हकारस्य विद्यते तन्त्रेषु। एवं सति अष्टमांशमात्र एको हकारः। तथा चोक्तं परात्रिंशिकायाम्—**'सा तु सप्तदशी देवी हकारार्धार्धरूपिणी'**[1] इति।

तन्त्रालोकेऽपि बहुत्रायं हकारो लिखितः। अस्यां स्थितौ द्वावपरावपि हकारौ संकलनीयौ चेत्तर्हि त्र्यशीतिर्वर्णाः सम्भाव्यमानत्वेन निर्देश्याः।

**सन्धिभेदाश्चत्वारः पञ्च वा**

प्रसङ्गादेषां वर्णानां योगे सन्धिर्भवति। तत्र व्याकरणे पञ्चसन्धिपदेन सन्धीनां व्यवहारो दृश्यते। तत्र कति सन्धयः शास्त्रप्रमाणगम्या इति चिन्तायामुच्यते—

याज्ञवल्क्यशिक्षायां पदपाठानन्तरं सप्तमसूत्रे **'सन्धिश्चतुर्विधो भवति लोपागमौ वर्णविकारः प्रकृतिभावश्चेति**[2]**।'** ऋक्प्रातिशाख्ये **'चतुःप्रकाराः सन्धयो भवन्ति, द्वयोः स्वरयोः; द्वयोर्व्यञ्जनयोः, व्यञ्जनस्वरयोः, स्वरव्यञ्जनयोरिति**[3]**'**। अत्र यदि **'प्रकृत्येति करणादौ प्रगृह्याः**[4]**'** इति सूत्रोक्तो याज्ञवल्क्यशिक्षायां चोक्तः प्रकृतिभावोऽपि ग्रहीष्यते, तदा पञ्च सन्धयो भवन्ति।

**त्रय एव सन्धयः**

किञ्च कातन्त्रपर्यालोचनया सन्धौ पञ्चपादा उपस्थापिताः सन्तीति। पञ्चपादः सन्धिरित्यत्र पादशब्दलोपे पञ्चसन्धिरिति पदं निष्पद्यते। वस्तुतस्तु अस्माकं मते सृष्टिस्थितिसंहारभेदात् त्रिविधः सन्धिः। तत्र **'आद्गुणः**[5]**'**, **'वृद्धिरेचि**[6]**'**, **'एत्येधत्यूठ्सु**[7]**'**, **'हशि च**[8]**'** इत्यादिसूत्रैर्वर्णानामधिकमात्रत्वसम्पादकसन्धिः सृष्टिसन्धिपदेन व्यवह्रियते। प्रकृतिभावस्तु स्थितिपदेन गृह्यताम्। **'इको यणचि**[9]**'**, **'एचोऽयवायावः**[10]**'**, **'लोपः शाकल्यस्य**[11]**'** इत्यादिभिर्निष्पाद्यः सन्धिः संहारसन्धिपदेन बोध्यः। यतो हि

---

१. परात्रिंशिका–पं० ६; पृ० २०१।
२. या० शि० १। ३. ऋ० प्रा० २।८। ४. तदेव–२।५१।
५. अष्टा० ६।१।८७। ६. तदेव–६।१।८८। ७. तदेव–६।१।८९।
८. तदेव–६।१।११४। ९. तदेव–६।१।७७। १०. तदेव–६।१।७८।
११. तदेव–८।३।१९।

**'इग् यणः सम्प्रसारणम्'**[1] इति सूत्रप्रामाण्याद् यदा यणोऽर्धमात्रिकाः सम्प्रसृता भवन्ति, तदा इको रूपम् एकमात्रं धारयन्ति। तथा च इको मूलं यणेव विद्यते। एवं स्थितौ **'इको यणचि'**[2] इत्यादिसूत्रबलाद् यदा इकः स्वकारणभूते यणि लीयन्ते, तदा संहार-सन्धित्वेन व्यवहार इति शम्।

**वैष्णवतन्त्रानुसारं वर्णस्वरूपम्**

तत्तत्प्रातिशाख्यव्याकरणानुसारं वर्णस्वरूपेऽवगम्यमाने तत्तत्तन्त्रानुसारं वर्ण-विषये संक्षेपेण किञ्चिदुच्यते। विशेषस्तु पीठिकायां द्रष्टव्यः। वैष्णवतन्त्रानुसारम् अहिर्बुध्न्यसंहितातो वर्णस्वरूपं प्रदर्श्यते। तत्र शुद्धसंविन्मयी भगवतो विष्णोः क्रिया-शक्तिः परापदेनोच्यते। तत्र यः प्रथम उन्मेषो भगवतः, स एव भाव्यभावकभेदेन द्वैविध्यं भजते। तत्र भाव्यो य उन्मेषः, स भूतिरिति कथ्यते। भावकस्तु विष्णुसङ्कल्पः सुदर्शनपदेनोच्यते। उद्यती सा क्रियाशक्तिर्नादरूपतां धत्ते। स एव नादो दीर्घघण्टा-नादोपमः समाधौ योगिभिरनुभूयते। यो हि नाद उन्मेषं प्राप्तो बिन्दुर्भवति। स च बिन्दुर्नामनामिभेदेन द्विधा भिद्यते। तत्र नामरूपेणोदयं प्राप्य शब्दब्रह्मपदेनाभिधीयते। नामिरूपेणोदिता भूतिरुच्यते।

प्रकृते सा बिन्दुमयी शक्तिर्वर्णरहिताऽपि अनुत्तररूपेण स्थिता स्वरव्यञ्जन-भेदेन द्विधा व्यवतिष्ठते। तस्या अ इत्युन्मेषः, अनुत्तरपदेनोच्यते। अनया रीत्या 'अ, इ, उ, ऋ, ऌ, ए, ओ एते सप्त स्वराः सूर्यरश्मयः। आकारादय उत्तरे सप्त स्वराः सोमरश्मयः। अधुना व्यञ्जनसृष्टिरुच्यते—ह् स ष क्ष व ल र य म भ ब फ प न ध द थ त ण ढ ड ठ ट ञ झ ज छ च ङ घ ग ख क तथा च व्यञ्जनेषु ळकारं विहाय चतुस्त्रिंशद् व्यञ्जनानि सन्ति। चतुर्दश च स्वराः सन्तीति संकलनयाऽष्टचत्वारिंशदेव वर्णा एतन्मते। तत्रापि समालोचनया चत्वारि सन्ध्यक्षराणि ऋकारऌकारौ ॠकारो दीर्घः। ऌ ३ कारश्च प्लुत इतीमेऽष्टौ स्वराः सन्धिजत्वात् स्वरमध्ये न गणनीयाः। अ, इ, उ, एते त्रय एव मौलिकाः स्वरा दीर्घभेदेन षडेवाभ्युपगम्यन्ते। तथा च संक-लनया चत्वारिंशदेव वर्णा एतन्मते।

यद्यपि षोडशाध्याये पूर्वोक्तपद्धत्या अष्टचत्वारिंशदेव वर्णाः प्रतिपादिताः सन्ति, तथाऽपि सर्वेषां मूलभूतौ बिन्दुविसर्गावपि क्वचित्सन्निवेशनीयावेव[3]। एवं सति पञ्चाशद् वर्णा भवन्ति। अत एव सप्तदशाध्याये स्वरेषु **'ओंकारः', 'अनुस्वारः', 'विसर्गः'** इतीमे त्रयोऽधिकाः सन्निवेशिताः। व्यञ्जनप्रकरणेऽपि अनुस्वारविसर्गौ निर्दिष्टौ स्तः। एवं सति अनुस्वारविसर्गौ स्वरौ व्यञ्जने च।

---

१. अष्टा० १।१।४५। २. तदेव–६।१।७७।

३. एतत् सर्वमहिर्बुध्न्यसंहितातो गृहीतम् (अहिर्बुध्न्यसंहिता–अ० १६)।

प्रातिशाख्यादिष्वपि स्वरव्यञ्जनयोरुभयत्र गणना दृश्यते। तथा सति सप्तदश-स्वराश्चतुस्त्रिंशद् व्यञ्जनानीति सङ्कलनया एकपञ्चाशद् वर्णा भवेयुः। तथा च द्वयोर-ध्याययोः संवादार्थं यथा लकारस्य न वर्णान्तरत्वम्, तथैव ओंकारस्य न वर्णविभाज-कत्वम् अनुस्वारविसर्गयोस्तु वर्णत्वमभ्युपगन्तव्यमेव। अनुस्वारविसर्गयोरुभयात्मकत्व-सूचनायैव उभयत्र तयोः सन्निवेशः। एवञ्च पञ्चाशद् वर्णाः स्वीकर्तव्या एतन्मते।

परमत्र येन क्रमेण वर्णाः (व्यञ्जनानि) निर्दिष्टाः, नेनैव क्रमेण वक्ष्यमाणतत्त्व-रूपता तेषां बोध्या। तथा हि हादिक्षान्ताः पञ्चब्रह्मेति शब्दिताः। क्षकारं विहाय अन्ये स्वस्वपूर्ववर्णानां कारणानि सन्ति अन्तस्थपुरुषेशयत्वाद् इमे अन्तस्था उच्यन्ते। मरूपा मातृका सर्वेषां चेतनानां समष्टिरुच्यते, तस्माद् भकारः प्रकृतिवाचकः। अनया रीत्या बकारो बुद्धितत्त्वम्, फकारः अहंकारः, पकारो मनः, नकारः श्रोत्रेन्द्रियम्, ततो धकारः त्वगिन्द्रियम्, ततो दकारश्चक्षुरिन्द्रियम्, ततस्थकारो रसनेन्द्रियम्, ततस्तकारो घ्राणेन्द्रियम्, ततः कर्मेन्द्रियवाचकत्वं टवर्गस्य ञादिचान्तं तन्मात्रवाचकम् ङादिकान्ता वर्णसंहतिर्भूतपञ्चकात्मिकेत्यवधेयम्।

**शैवशाक्ततन्त्रानुसारं वर्णाः**

इदानीं शैवशाक्ततन्त्रानुसारं वर्णविषयो विचार्य्यते। तथा हि साधकमूर्द्धन्येन श्रीभास्कररायापरनाम्ना भासुरानन्दनाथेन वरिवस्यारहस्यस्यादौ समुपन्यस्तां वर्ण-विभाजनपद्धतिं प्रदर्शयामि। वटवृक्षीयसूक्ष्मरूपतुल्यशब्दसृष्टिसूक्ष्मरूपशालिनी पूर्वोक्त-रूपा त्रिपुरसुन्दर्येव[1] परापदवाच्या, सैव मातृकापदेनोच्यते। ततः स्रष्टव्यपदार्थानालोच्य **'तदैक्षत बहु स्यां प्रजायेय'**[2] इति श्रुतिरीत्या तादृशमीक्षणमेव प्रवृत्तिनिमित्तीकृत्य तस्यां पश्यन्तीति पदं प्रवर्त्तते। तदवयवाश्च वामादयोऽष्ट शक्तयः[3]। वामा-शिखा-ज्येष्ठारूपा सा त्रिपुरसुन्दरी ज्ञानक्रियेच्छात्मिका ब्रह्मविष्णवीशरूपिणी। सैव व्यष्टि-समष्टिभेदेन नवविधा। ततो[4] नव नादा जाताः, तत्समष्टिश्च नादध्वन्यादिपदवाच्या नातिसूक्ष्मा परावत्, नातिस्थूला वैखरीवत्, अतो मध्यमाख्या मातृका। ततो नव-भिर्नादैः अकचटतपयशळाख्यवर्गनवकवती वैखरी मातृका जाता। इदं वाणीचतुष्टयं यथा स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमभेदम्, तथैव तद्वाच्या अर्था अपि तथा तथोन्नेयाः।

**तत्रत्यः सृष्टिक्रमः**

अत्रायं सृष्टिक्रमो यथा सूर्याभिमुखदर्पणे तदन्तःप्रविष्टकिरणाद् उभयकिरण-संकलनारूपः तेजोबिन्दुविशेषः कुड्यादौ प्रादुर्भवति, तथा प्राण्यदृष्टवशात् स्वान्तःसंहृत-

---

१. व मा ज्येष्ठा रौद्री अम्बिका (अनुत्तरांशभूता) इच्छा ज्ञानक्रिया शान्ता (ऊर्ध्वावयवा) एता अष्ट शक्तयः परासहिता नव।

२. तै० उ० २६।

३. तन्त्रालोकः—३, पृ० ७८।

४. नव नादाः चिणीति प्रथमः, चिणिचिणीति द्वितीयः घण्टानादस्तृतीयः, शंखनादश्चतुर्थः, पञ्चमस्तन्त्रीनादः, षष्ठस्तालनादः, सप्तमो वेणुनादः, अष्टमो भेरीनादः, नवमो मृदङ्गनादः।

विश्वसिसृक्षया प्रकाशरूपं ब्रह्म स्वीयां शक्तिमवलोकयितुं तदभिमुखीभूय तदन्तस्तेजो-रूपेण प्रविश्य शुक्लबिन्दुभावमयते, ततस्तं बिन्दुं रक्तरूपा शक्तिः प्रविशति। तेन सम्मिश्रो बिन्दुरुच्छूनो भवति, स च बिन्दुः समष्टिरूपेणैको व्यष्टिरूपेण द्वयम्। तत्र शुक्ल इन्दू रक्तोऽग्निरिति बिन्दुद्वयात्मकत्वाद् विसर्ग इति च व्यवह्रियते तत्र समष्टि-बिन्दो रवित्वम्।

एवं च कामाख्यो बिन्दुः; विसर्गः, हार्दकला (हार्धकला) चेति त्र्यवयवक एकः पदार्थोऽणादिप्रत्याहारवत् कामकलेत्युच्यते। इदमेव च समस्तसृष्टिबीजम्। एतन्मूलभूतं ब्रह्म तुरीयं बिन्दुरित्युच्यते। इयमेव प्रकाशविमर्शमयी परा शक्तिः पञ्चभूतात्मिका उत्तरोत्तरवृद्धिद्वारा पञ्चदशसंख्याकमात्राक्षरतिथ्यभिमानदेवतास्वरूपिणी सञ्जाता। तत्रायं क्रमः—प्रकाशाख्य एक एव परमेश्वरः तस्य शक्तिर्विमर्शाख्या, सा च पाञ्चविध्यं समागता। सैव अ इ उ ऋ ऌ इति पञ्चात्मना व्यवस्थिता। पुनरपि आ ई ऊ ॠ ऌ३ इत्येवं संकलनया दश। तत ए ओ ऐ औ अं इति पञ्चदश विसर्ग इति षोडश स्वराः। कादयः पञ्चवर्गाः पञ्चविंशतिः। यरलवाश्चत्वारः, शषसहाश्चत्वारः क्षकारेण सह पञ्चाशन्मातृकाः सम्पन्नाः।

**तन्त्रालोकानुसारम्**

तन्त्रालोके तु अयमेव विषयो भङ्ग्यन्तरेण वर्णितोऽस्ति[1]। अथ प्रकाश-स्वरूपस्य बिन्दोः प्रकाशेनैव सर्वं प्रकाशते। तत आविर्भूतायाः पश्यन्त्यास्तस्मिन् बिन्दौ प्रतिबिम्बितत्वम्। यथा मुखस्य दर्पणे प्रतिबिम्बितत्वम्, तथाऽस्य शब्दस्य नभसि प्रतिबिम्बमस्ति। यथा दर्पणसम्मुखीभावे एव मुखस्य तत्र प्रतिबिम्बं गृह्यते, तथैव यत्र श्रोत्राकाशस्य सान्निध्यं तत्रैव श्रोत्राकाशरूपे नभसि तस्य प्रतिबिम्बं दृश्यते।

तथा चास्यां संविदि सर्वं विश्वं प्रतिबिम्बीभवति। स्वातन्त्र्यं हि विमर्शः, स चास्य प्रकाशस्य मुख्यः स्वभावः। न हि निर्विमर्शः प्रकाशः सम्भवति। स एव प्रतिभानुत्तरादिशब्दैरभिधीयते। तस्यैव भगवतः परमेश्वरस्य प्रकाशरूपया चिच्छक्त्या स्वातन्त्र्याभिधयाऽऽनन्दशक्त्या आनन्दचमत्कारात्मिकया इच्छाशक्त्या आमर्शात्मिकया ज्ञानशक्त्या सर्वाकारोपयोगिन्या क्रियाशक्त्या जुष्टस्याष्टैश्वर्यात्मकमूर्त्तेः परिपूर्णस्य शिवशक्त्यादिभेदासहिष्णोर्विश्वमवबिभासयिषोः प्रथमं शिवशक्तिरूपताऽऽत्मन्येव भास्यते। स एवानुत्तरो हतादनाहताच्च शब्दात् सदा द्योतमानो योगिभिरनुभूयते समाधौ।

तस्य परैव शक्तिः शिवेन संघट्टमासाद्योत्थिता सती इच्छाज्ञानक्रियारूपतां धत्ते। तथा चानुत्तराख्यः प्रकाशो बिन्दुः, स्वातन्त्र्यात्मके विमर्शाभिधे विसर्गे

---

१. तन्त्रालोकः—३, पृ० २३४।

परिणमते। तथा च बिन्दो रूपद्वयम् अकारोऽनुस्वारश्च। एवं विसर्गस्यापि उभयी वृत्तिः विसर्जनीयो हकारश्चेति। एतौ चाकारहकारौ अविभक्तभावेन शिवशक्त्यात्मकौ सदावभासेते। स एवानुत्तर आनन्दशक्तिमभिव्यञ्जयन्नकाररूपं धत्ते। तस्य सिसृक्षातः परामर्शस्योदये इच्छा शक्तिः इकारः। ईशित्री सैवेच्छा ईकारः। उन्मिषन्नुकारः। यदा ज्ञेयापेक्षया ज्ञानमूनं भवति, तदा ऊकारस्योदयो भवति। तथा चैतदेव विमर्शात्मकं परामर्शषट्कं बीजपदेनोच्यते। तथा चोक्तम्—

**स्वराणां षट्कमेवेह मूलं स्याद् वर्णसन्ततौ।**
**षड् देवतास्तु ता एव ये मुख्याः सूर्यरश्मयः[1]॥**
**आसामेव समावेशात् क्रियाशक्तितयोदितात्।**
**संविदो द्वादश प्रोक्ता यासु सर्वं समाप्यते[2]॥** इति।

**'एवं च शक्तयोऽस्य जगत् सर्वम्[3]'** इत्युक्तरीत्या अ आ इ ई उ ऊ इत्येतेषामेव सर्वं जगत् शक्तिरिति। एवं चेयमिकाररूपा अक्षुब्धा क्षुब्धा च दीर्घरूपा इच्छा शक्तिः रेफलकारोभयेच्छायाधारित्वाद् ऋ ॠ ऌ ॡ३ इत्येतद्वर्णचतुष्टयरूपं धत्ते।

अस्मिन् ऋकारादिचतुष्टये क्षोभोदयाभावाद् वर्णान्तरोत्पत्त्यसंभवान्न बीजत्वम्। क्षोभाधारत्वाभावाद् योनित्वाभावस्यापि निश्चयाद् बीजयोनिवैलक्षण्यमेषाम्। एवम् इच्छोन्मेषशक्तिभ्याम् इकारोकाराभ्याम् अनुत्तरानन्दयोः संघट्टे एकार ओकारश्च सम्पद्येते। एवमेव यदा अनुत्तरानन्दशक्ती वृद्धिप्ररोहावाप्नुतः, तदा एकारयोगे ऐकार ओकारयोगे औकारश्च सम्पद्येते।

**इच्छैवानुत्तरानन्दयाता शीघ्रत्वयोगतः।**
**वायुरित्युच्यते वह्निर्भासनात् स्थैर्यतो धरा[4]॥**

इत्युक्तरीत्या यरलवानामन्तःस्थानां वायुसूर्यधरावरुणरूपाणामुदयः। अत्रोन्मेषस्यापि ग्रहणाच्चतुष्कोद्भूतौ न किञ्चिद् बाधकम्। सैवेच्छा शक्तिः स्वोष्मणा स्वात्मस्वातन्त्र्यप्रेरणात्मना बहिर्भाव्य शषसत्रितयात्मना स्फुरति। विसर्गस्यैव यथा स्थूलेन हकारात्मना स्थितिः, तथैव अनुत्तरादयः कादिसान्तत्वेनावभासन्ते[5]।

तथा हि—अनुत्तरात् पञ्चात्मनः कवर्गस्य प्रसवः, एवमिच्छाशक्तेः चवर्गस्य। द्विरूपाया ऋ ऌ इत्येवं रूपं प्राप्ताया इच्छाया एव टतवर्गोत्पत्तिः। उन्मेषात्पवर्गोत्पत्तिः। तथा च कषसंयोगात् क्षकारोत्पत्तिः। एवं सति पञ्चविंशतिः स्पर्शाः, चत्वारोऽन्तस्थाः, चत्वार ऊष्माणः, षोडश स्वराः संकलिताः क्षकारेण पञ्चाशद् वर्णाः सञ्जाताः। तत्रानुस्वारविसर्गौ स्वरेषु गणनीयाविति षोडश स्वराः सम्पद्यन्ते। तदुक्तं तन्त्रालोके टीकायाम्—

---

१. तन्त्रालोकः–३।१८४–८५।　　२. तदेव–३।२५०–५१।
३. परात्रिंशिका–पृ० ४०।　४. तन्त्रालोकः–३।१५७।　५. तदेव–३।१४८–४९।

**अकाराज्जात आकार इकाराद् ई इति स्मृतः।**
**ऊकारश्च उकारात् स्याद् ऋकाराच्च नपुंसकम् ॥**
**एकार ऐस्वरश्चैव ओकार औकार एव च।**
**अंकारश्च अनुस्वारः अः विसर्ग इति स्मृतः[1] ॥**

एतच्च सर्वं विसर्गादुत्पन्नं विसर्ग एव तत्तदामर्शात्मना प्रस्फुरित इत्यर्थः। स एव हि परप्रमात्रैकरूपोऽशेषविश्वक्रोडीकारेण अनुत्तरहकारात्मना प्रस्फुरन्नन्तर्वही-रूपतया नरशक्तिशिवात्मतामाभासयेत्[2]।

**मातृकाचक्रानुसारं वर्णोपन्यासः**

अधुना मातृकाचक्रविवेकानुसारं वर्णाः प्रदर्श्यन्ते। तत्र हि पञ्चभ्यो भूतेभ्यः क्रमशः पञ्चानां वर्गाणामुत्पत्तिः। अर्थात् कण्ठ्यतालव्यमूर्धन्यदन्त्यौष्ठ्यात्मका वर्णाः क्रमश आकाशवायुतेजोजलपृथिवीसम्बन्धिनः। तथा चैतन्मते 'लं' जलबीजम्। 'वं' धराबीजमित्यायाति। परं टीकायां स्वीयसंस्कारानुसारं 'वं' जलबीजम्, 'लं' तु पृथिवीबीजमित्युक्तम्[3]।

अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः इतीमे स्वरा निर्दिष्टाः। इकारोकारयोः संकुचद्रूपौ यकारवकारौ, ॠऌवर्णयोः संकुचद्रूपौ रलौ च निर्दिष्टाः।

---

१. तन्त्रालोकः—३।२२२—टीकायाम्।

२. (क) अनुत्तरानन्दभुवामिच्छाद्ये भोग्यतां गते।
सन्ध्यक्षरागामुदयो भोक्तृरूपश्च कथ्यते ॥ (तन्त्रा० ३।१८९–९०)

(ख) स्वराणां षट्कमेवेह मूलं स्याद् वर्णसन्ततौ। (श्लो० १८४)

(ग) षड् देवतास्तु ता एव ये मुख्याः सूर्यरश्मयः।
सौराणामेव रश्मीनामन्तश्चान्द्रकला यतः ॥ (श्लो० १८५)

(घ) अतोऽत्र दीर्घत्रितयं स्फुटं चान्द्रमसं वपुः। (श्लो० १८६)
तासां नामानि—

(ङ) दहनी पाचनी धूम्रा कर्षिणी वर्षिणी रसा। (पृ० १८१ टीका)

३. (क) षडेव हि स्वरा मुख्याः कथिता मूलकारणम्।
ते च प्रकाशरूपत्वाद् विज्ञेयाः सूर्यरश्मयः ॥ (तन्त्रा० पृ० १८१ टीका)

(ख) इच्छाशक्तिश्च या द्वेधा क्षुभिता क्षुभितत्वतः।
सा विजातीयशक्त्यंशप्रोन्मुखी याति यात्मताम् ॥

(ग) सैव शीघ्रतरोपात्तज्ञेयकालुष्यरूषिता।
विजातीयोन्मुखत्वेन रत्वं लत्वं च गच्छति ॥ (तन्त्रा० ३।१५४–५५)

(घ) तद्वदुन्मेषशक्तिर्द्विरूपा वैजात्यशक्तिगा।
वकारत्वं प्रपद्येत सृष्टिसारप्रवर्षकम् ॥ (श्लो० १५६)

अकारस्य संकुचद्रूपः कवर्गः, इकारस्य चवर्गः, ऋकारस्य टवर्गः, ऌकारस्य तवर्गः, उकारस्य पवर्ग इति। ऊष्माण इत्यनेन शषसहा उक्ताः। उक्तं च—**'श्लिष्टं पुरः स्फुरितसद्द्वयकोटिळक्षरूपं परस्परगतञ्च समं च कूटम्'**[1] इत्यनेन ळक्षौ उक्तौ।

तथा चैतन्मते षोडश स्वराः, पञ्चविंशतिः स्पर्शाः, चत्वारोऽन्तःस्थाः, चत्वार ऊष्माणः, दुःस्पृष्टः ळकारः। कूटस्थः क्षकार इति संकलनया एकपञ्चाशद् (१६ + २५ + ४ + ४ + २ = ५१) वर्णा निर्विष्टाः सन्ति।

परमत्र अकारादीनां संकोचे कवर्गादय उत्पद्यन्ते इति यदुक्तम्, तन्न सम्यक्, हयरलवानां तैर्बीजत्वस्वीकारेण स्वोक्त्यैव विरोधात्। अनुत्तराद् अल्पमात्रतोऽधिक-मात्रवर्णोत्पत्तिस्वीकाराच्च।

किञ्च संकुचद्रूपः कवर्ग इत्युक्त्या लयस्यैव प्रतीत्या न हि अधिकमात्रेभ्यो वर्णेभ्योऽल्पमात्रवर्णानामुत्पत्तिरिहाभिप्रेता। विस्तरेणैतत् पीठिकायां प्रकटयिष्यते।

**सर्वेऽपि विषया आर्षप्रभावप्रभवाः**

अथ भूमिकायां पीठिकाया विषयान् संक्षेपेण प्रदर्श्य प्रतिमाविषया अत्यन्तं संक्षिप्ततया प्रदर्श्यन्ते। न हि भूमिकायां सर्वेऽपि विषया आमूलचूडं सन्निवेशिताः; तथा सति पीठिकाप्रतिमयोर्वैयर्थ्यापत्तिः। अतो भूमिकायां यावदुक्तं तावतैव सन्तोष्टव्यम्। अधिकं जिज्ञासुभिः पीठिका प्रतिमा च द्रष्टव्ये।

अस्मिन् हि अस्मदीये दर्शने योगजसामर्थ्यमेव—**'ईश्वरप्रणिधानाद्वा'**[2] इति सूत्रसूचितं मूलमवधार्यम्। स्वस्मिन् पात्रतासम्पादनेन भगवदिच्छया यथाकालं पतन्तः कारुण्यपारावारशीकराः स्वात्मानमाप्याययिष्यन्ति। तद्बलेनैव विशुद्धा दृष्टिः पदार्थान् स्फोटयिष्यति। नाहमात्मनः शक्तेरुपरि लब्धाभिमानः किञ्चिदपि स्फोटयितुं प्रभवामि। केवलं सर्वं भारं तदुपरि संस्थाप्य तदीयज्ञानप्रणालिकामात्मनि सम्भाव्य पूर्वाचार्यपरम्पराप्राप्तान् विषयान् सन्तक्ष्योपस्थापयामि।

**आधुनिकदर्शनानां मूलं संग्रह एव**

इह हि पुरा पाणिनीये व्याकरणे दाक्षायणेन व्याडिनोपरचितं सकलदर्शनसूत्र-रूपं ग्रन्थलक्षपरिमाणं संग्रहाभिधानं नाम निबन्धनमासीत्। तच्च कालवशात् सुकुमार-बुद्धीन् सूत्रवृत्तिमात्ररटनपटून् वैयाकरणान् लब्ध्वा निष्ठामुपागमत्। ते हि सुकुमार-बुद्धयो वैयाकरणा अशितबुद्धयो दार्शनिकगूढार्थाविबोधेऽक्षमाः, प्रतिभाविरहिताः सम्प्रदायागतयथार्थज्ञानलेशहीनाः संग्रहाध्ययनोपेक्षाप्रधानास्तदध्ययनं व्यजहुः। एवं रीत्या संग्रहे निष्ठां गते कियत्कालानन्तरं साधुत्वज्ञानौपयिकतया धर्मसाधनत्वेनोप-जातोपयोगाय व्याकरणस्मृतेरविच्छेदाय करुणाप्रयुक्तेन भगवता पतञ्जलिना वार्तिक-

---

१. मातृकाचक्रविवेके–पृ० १२१। २. योगसूत्रम्–१।२३।

व्याख्यानपुरःसरं महाभाष्यनिबन्धनमुपरचितम्। तदपि महाभाष्यं कालवशात् परस्परवैमत्यादागमसंज्ञाविरहेण च परिभ्रष्टं सद् दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितम् आसीत्। ततः पश्चात् चन्द्राचार्यवसुरातप्रभृतयो गुरवो व्याकरणागममिमं बहुशाखत्वमनयन्।

तथा च भर्तृहरिः स्वयं गुरुपूर्वकत्वं व्याकरणागमस्य प्रदर्शयति—

**न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम्।**
**प्रणीतो गुरुणाऽस्माकमयमागमसंग्रहः**[1] ॥ इति।

तथा चात्र वाक्यपदीयग्रन्थेषु सूत्रेषु वार्त्तिकेषु च विप्रकीर्णान् विषयान् संकलय्य दर्शयामि। नाहमत्र दर्शनान्तरीयसंस्कारसंस्कृतचेता विषयानुपस्थापयितुं समीहे; किन्तु आर्षव्याकरणसमालोचनया तदविरुद्धपद्धतिप्रभूतांश्च प्रमेयप्रमाणव्राता-नत्रोपन्यसितुं यतिष्ये। यथासम्भवं श्रुतिमूलका एव विषया अस्मद्दर्शने स्थानं लभेरन्। एवं सत्यपि वाक्यपदीयसंस्कारोऽवश्यमेव मां स्प्रक्ष्यत्येव।

**सत्तैव मूलं सत्त्वम्**

तत्र सच्चिदानन्दस्वरूपस्य परब्रह्मणोऽभिन्ना येयं सत्ता नाम, सैव सत्ता विविधानि रूपाणि धारयति। सैव सर्वास्वपि क्रियास्वनुस्यूताऽऽपामरमनुभूयते। अह-मस्मीति प्रत्ययस्य आगोपालाङ्गनासु प्रसिद्धेर्निष्प्रत्यूहत्वात्। तथा च सत्ता चिद् आनन्द इतीयं त्रयी अन्यानि त्रीणि रूपाणि प्रसूते। तत्र आनन्द इच्छारूपम्, चित् तु ज्ञानरूपम्, सत्ता च क्रियारूपं धत्ते। तासु शक्तिषु सत्ताया ब्रह्मरूपत्वात् तामगणयित्वा शक्तिपञ्चकमेव तान्त्रिकग्रन्थेषु समुद्घोष्यते।

सर्वोऽपि क्रियाकलापः सत्ताया एव विवर्त्तः परिणामो वेति मनसि निधाय, इत्यादिना भर्तृहरिः सर्गप्रतिसर्गौ निरदिक्षत्।

**सैव भावविकारेषु षडवस्थाः प्रपद्यते।**
**क्रमेण शक्तिभिस्ताभिरेवं प्रत्यवभासते**[2] ॥

अन्यच्च **'षड् भावविकारा भवन्तीति ह स्माह भगवान् वार्ष्यायणिः'** इति निरुक्तकारः। तत्र च परमार्थरूपस्य सत्तात्मकस्य भावस्य द्विविधः परिणामः, एकोऽनु-लोमः, अपरश्च प्रतिलोमः। एतावेव द्वावुपादाय भगवान् वार्ष्यायणिः **'जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति'** षड् भावविकारानाह। तत्र वृद्ध्यन्तोऽनु-लोमः, अपक्षीयते विनश्यतीत्याभ्यां प्रतिलोमः स प्रतिपादितस्तेन।

भूवादिसूत्रे एतद्व्याख्यावसरे कैयटः **'भावस्य क्रियायाः षट्प्रकारा इत्यर्थः। तेषु च अस्तिः पठित इति तस्यापि क्रियात्वमित्यर्थः। अथवा भावस्य सत्ताया एते**

---

१. वा० प० २।४९०।  १. वा० का० ३ जातिसमुद्देशे श्लो०–३६।

**प्रकारा:। सत्तैवानेकक्रियात्मिका साधनसम्बन्धादवसीयमानसाध्यरूपा जन्मादि-रूपतयाऽवभासते। एते च भावविकारा[1] निरुक्ते निपुणं व्याख्याताः। इह तु प्रकृता-नुपयोगान्न व्याख्यायन्ते'[2]।**

तत्रैव अथवेति प्रतीकमुपादाय 'उत्पत्तिविनाशयोरपि सूक्ष्मरूपेण वस्तुनो भावात् तेषामपि सत्तात्मकत्वम् इति बोध्यम्। भावस्य सत्ताया ब्रह्मसत्ताया एते विकाराः क्रियाप्रकारा मायावशात् त इव भासमाना इति वार्ष्यायण्युक्तेरित्यर्थः। सत्तैवेत्यादि। सत्तैव = ब्रह्मसत्तैव। अनेकक्रियात्मिका = अनेकक्रियाविवर्तात्मिका। साधनैः = कारकैः संवन्धादवसीयमानसाध्यस्वरूपा जन्मादिरूपतया भासत इत्यर्थः। एतच्च निरुक्तभाष्येस्पष्टम्'[3] इति नागेशभट्टेन अधस्तनः सन्दर्भः समुट्टङ्कितः।

एवमेव **'सैव भावविकारेषु'**[4] इति कारिकायाष्टीकायां हेलाराजः 'षड भाव-विकारा भवन्तीति ह स्माह भगवान् वार्ष्यायणि इति निरुक्तकारः। तत्र च भावस्य परमार्थरूपस्य जन्मादयो विकारा इत्यर्थः। सन्मात्रस्वभावा हि सत्ता उत्तरोत्तर-विकारापत्तौ जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति व्यपदेश-मासादयति'।

'प्रथमतरं च सन्मात्ररूपम् अस्तिशब्देन नाभिधीयते, अपि तु जन्मोत्तरभावी तस्या अवस्थाविशेषः। जन्मानन्तरभावि हि रूपं तस्या लोके सदिति व्यवहार्यम्। ततः प्राक् पश्चाद् भाविन्यः पुनरवस्था जन्मविपरिणामादिरूपेण व्यवहार्याः। तथा हि स्वशक्तिमाहात्म्यात् पूर्वं जायत इत्यवसीयते, पश्चादस्तीति। अवस्थितस्य विकारापत्ति-रिति विपरिणमते, तच्च विपरिणमद् मुहूर्तमपि नावतिष्ठते इति, वर्धते यावदनेन वर्धि-तव्यम्। ततोऽपक्षीयते मुहूर्तमप्यनवस्थानादेव। अत एवोक्तं ततोऽपायेन युज्यते इति। ततोऽपि विनाश इत्येवं क्रमस्थितिः। एवंभूतास्तस्याः काश्चन शक्तयो विद्यन्ते, येनैकैव सती तथा विचित्ररूपेण प्रतिभासते।

न च परिणतिदर्शनाभिप्रायेणायं विकारशब्दः अनित्यत्वप्रसङ्गात्, अपि तु विवर्तपर्यायोऽयम्। तथा हि सर्वशक्त्यात्मभूतत्वाद् ब्रह्मणोऽनेकविकारप्रदर्शनसामर्थ्य-लक्षणा अविद्याख्या शक्ति कार्यभेदादुपचरितनानात्वा समस्तीत्यागमविदः।

इत्थं च स्वाभिरेव शक्तिभिरनतिरिक्ताभिर्जन्मादिरूपतयाऽविद्यायामाभासते। तदेव ब्रह्म सर्वभावेषु समानरूपं सत्तात्मकम्। अन्यस्य तद्व्यतिरिक्तस्याभावादित्येषोऽ-त्रार्थः'[5] इत्युक्तवान्।

---

१. विकारशब्दः प्रकारवाचीति नागेशः पृ० १२४। २. अष्टा० १।३।१।
३. महाभाष्यम्—१।३।१—नागेशभट्टटीकायाम्। ४. वा० प० ३।३।३६।
५. वा० प० ३।३।३६—इति कारिकोपरि हेलाराजटीका।

एतत् सर्वमन्यद् वा एतादृशं षड्भावविकारा भवन्तीत्यादेर्व्याख्यानं स्वीयानिर्वचनीयतावादविवर्तवादादिसंस्कारसंस्कृतमनसां पक्षपातधीकालुष्यकलङ्कितया हेयमेव।

यतो हि पस्पशाह्निके **'अथवा नेदमेव नित्यलक्षणम्। ध्रुवं कूटस्थमविचाल्यनुत्पत्त्यव्ययवृद्धियोगि यत्तन्नित्यमिति तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते'**[1] इत्येतद्भाष्यव्याख्यानप्रवृत्ते उद्द्योते 'उत्पत्तेः सत्तापर्यन्तत्वाद् अनुत्पत्तीत्यनेन जन्मसत्तारूपौ भावविकारौ निरस्तौ, अवृद्धीत्यनेन तृतीयो वृद्धिलक्षणः, अनुपजनेति चतुर्थः परिणामः, अनपायेति पञ्चमोऽपचयः, अव्ययेति षष्ठो विनाशः एतद्रूपविकाररहितमिति तदर्थः' इति नागेशभट्टोक्त्याऽपि वार्ष्यायणिप्रदर्शितषड्भावविकारा यस्मिन् न भवन्ति तदेव नित्यम्।

तथा च स्पष्टमेव षड्भावविकारा भवन्तीति ग्रन्थेन ब्रह्मणो भिन्नाया एव प्रकृतेः स्वरूपावगमार्थं षण्णां भावविकाराणामुपन्यासः कृतः। तद्भिन्नस्यैव ब्रह्मणश्चितो वा नित्यत्वस्वीकारात्। एतादृशविकारशून्यं यत्तन्नित्यमितीदृशं नित्यत्वं ब्रह्मण्येव सन्तिष्ठते। तथा च द्विविधं नित्यत्वम्—एकं षड्विधविकारशून्यत्वम्, अपरं च आश्रयप्रवाहाविच्छेदप्रयुक्तम्। एवं स्थितौ षड्भावविकारा भवन्तीत्यस्य विवर्तवादमाश्रित्य व्याख्यानं दर्शनान्तरसंस्कारेणैवेति ध्येयम्।

यच्च हेलाराजेन **'न च परिणतिदर्शनाभिप्रायेणायं विकारशब्दः अनित्यत्वप्रसङ्गात्, अपि तु विवर्तपर्यायोऽयम्'**[2] इत्युक्तम्, तत्तु **'अथवा नेदमेव नित्यलक्षणम्–ध्रुवं कूटस्थेत्यादि'** भाष्यविरोधाद्धेयमेव। तेन हि भाष्येण षड्विधभावविकारयुक्तस्य अनित्यत्वस्वीकारात्। तथा चास्माकं व्याकरणदर्शने परिणामवाद एवेति सिद्धान्तः। विवर्तशब्दोऽप्यस्माकं परिणामार्थक एव मन्तव्यः।

**द्विविधो विवर्तः**

विवर्तवादे तु द्विविधो विवर्तः—द्रव्यरूपेण सिद्धविवर्तः, क्रियारूपेण साध्यविवर्तः। तथा चोक्तम्—

**तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।**
**सा नित्या सा महानात्मा तामाहुस्त्वतलादयः**[3] ॥ इति।

तथा च महासत्तयाऽनया अवियोगात् प्रातिपदिकमात्रवाच्या सत्ता। तदुक्तम्—**'प्रातिपदिकार्थः सत्तेति'**। अयमेव सिद्धविवर्तः धातुभिरपि साधनाधीनलब्धजन्मसु क्रियाव्यक्तिषु समवेता यथोपाध्यनुगृहीतनानात्वा सत्तैवाधेयत्वमापद्यते,

---

१. महाभाष्यम्–पस्प० पृ० ७। २. वा० प० ३।३।३६–हेलाराजटीका।
३. वा० प० ३।३।३४।

अयं साध्यविवर्तः। तथा च सच्छब्दात् तल्प्रत्यये सत्ता त्वप्रत्यये च सत्त्वमिति[1] निष्पद्यते। प्रत्ययभेदेन च अर्थभेदः। वस्तुतस्तु नास्ति तथार्थभेदः। प्रातिपदिकस्थले सत्त्वपदेन सा सत्ताऽभिधीयमाना द्रव्यार्थिका, धातुस्थलेऽभिधीयमाना क्रियार्थिका इति तस्या एव द्विधा विवर्तः।

**परिणामवादोऽस्माकं वैयाकरणानाम्**

एवं विवर्तवादपरिणामवादयोरुभयोरपि आधुनिकव्याकरणग्रन्थेषु उपलब्धतया वास्तविके परिणामवादे कया रीत्या सत्तायाः परिणाम इति पूर्वमत्यन्तं संक्षिप्ततया संस्पृष्टोऽपि विषयोऽधुना वितन्यते।

**'सदेव सोम्येदमग्र आसीद्[2]'** इति रीत्याऽस्माकं मते एक एवानन्तापरिमित-शक्तियुक्तः सत्पदार्थः परिस्फुरितस्वातन्त्र्यापरपर्यायकालाख्यशक्तिविशिष्टो विराजते। तदा स **'एकोऽहं बहु स्यां प्रजायेय[3]'** इति पद्धत्या कर्तृरूपं धत्ते। अस्यामवस्थायां धातूनामकर्मकत्वम्। तदानीं कालाख्यैव शक्तिः करणभावं भजते। तथा च स्वस्मिन्नधिकरणे स्थित्वा कालाख्येन करणेन प्रकृतिं स्वस्वरूपं भिन्दन् क्रीडति, तदा चिदानन्दात्मकं पत्रद्वयं शक्तिद्वयं वा समुज्जृम्भयति। तयैव पद्धत्या तदन्तर्लीनमेव तच्छक्तिद्वयं ततः प्रादुर्भवति। तयोश्च शक्त्योः परस्परमभेदः पुरासीत्। इदानीं तु तयोर्भेदे सत्यपि परस्परमाभासः समुन्मिषति। एवं त्रिकोणरूपं दधत् सत् स्वात्मनि चिति आनन्दे च स्फुरत् चितो ज्ञानम् आनन्दाद् इच्छां चाविर्भावयति। अस्यामवस्थायां कर्मणोऽपेक्षणाद् धातूनां सकर्मकत्वम्। अनयोर्ज्ञानेच्छयोर्भेदेऽपि परस्परमाभासः पूर्ववदेव विजृम्भितः। तदनन्तरं ते द्वे ज्ञानेच्छे शक्ती क्रियारूपं धत्तः। एवं तस्मिन् सति सत्ता चिदानन्दज्ञानेच्छाक्रियाशक्तिरूपा परापदव्यवहार्याऽत्यन्तं सूक्ष्मा स्वस्यामेकस्यां षड्रूपा सती एकत्वेन क्रियात्मना भासमाना प्रकाशस्वभावा विमृशन्ती पश्यन्तीरूपं धत्ते। तस्यां च सूक्ष्मौ शब्दार्थौ भासमानावास्ताम्। ततो मध्यमावस्थां प्राप्तौ शब्दार्थौ परस्परं सङ्घटमानौ वैखरीरूपं धत्तः।

तस्यामेव वैखर्यां कारणात्मना अपरास्तिस्रो वाचोऽपि लब्धास्पदाः सन्ति। तत्र स्थूलरूपं दधती पश्यन्ती बहिः सृष्टिं कर्तुं प्रभवति। तत्र च परम्पराद्वयं प्रचलति। एका शब्दपरम्परा, अपरा च अर्थपरम्परा। अनयोः परम्परयोः सम्बन्ध-परम्पराऽपि न जहाति द्वयोर्धर्मम्। असम्बद्धा च नहि क्षणमपि स्थातुमर्हति। अनेन क्रमयोगेण स्थूलपश्यन्त्यां सृष्टिः प्रवर्तते। तस्यामेव जन्मादयः षड् विकाराः सन्ति। ते एव भावभेदस्य योनयः। उपरिष्टाच्च यथावसरं ते प्रदर्शयिष्यन्ते।

---

१. सत्त्वशब्दः सदेस्त्वन्यपि उणादौ निष्पन्नो गुणाश्रयत्वप्रवृत्तिनिमित्तकः। परमयमर्थोऽत्यन्तं रहस्यभूतः।

२. छा० उ० ६।२।१। ३. तदेव—६।२।३।

**सत एव सर्वमुत्पद्यते**

तत्र प्रथमं सत्पदवाच्यं शब्दब्रह्म[1] रवात्मकमभवत् । स एवास्माकं मते रविरुच्यते । तस्मान्नादः समुत्पद्यते । तद्यथा—

**उत्तरो देवो नादः दिव्यः सूर्यो रविः रवो वा ।**
**शब्दब्रह्मैव उत्तमं ज्योतिरित्ययं वैदिकक्रमः ॥** इति ।

अन्यच्च—

**सूक्ष्मामर्थेनाऽप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम् ।**
**उतान्ये विदुरमृतामिव च पूतां नानारूपामात्मनि सन्निविष्टाम्[2] ॥**

अस्याः श्रुतेरयमर्थो निःसरति यत् सैवैका वाणी अर्थेनाविष्टा भेदवतीव चित्ते नानारूपा भासते । तथा च—'शब्दार्थयोः स एव नित्यस्तादात्म्याख्यः सम्बन्धो न हीश्वरकृतः, किन्तु सर्गादिभुवां महर्षिदेवतानामीश्वरेण बोधितस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्सङ्केतः[3]' इति न्यायवाचस्पत्ये उक्तम् । तत्र कृत इत्यस्य प्रकाशित इत्यर्थः ।

तथा च योगवाचस्पत्ये **'सर्वे च शब्दाः सर्वार्थाभिधानसमर्था इति सर्वैरर्थैः शब्दानां सम्बन्ध ईश्वरसङ्केतस्तु प्रकाशकः[4]'** इति ।

अत एव **'नित्यः शब्दार्थसम्बन्धः[5]'** इति तान्त्रिकाः (वैयाकरणाः) । सर्वैरर्थैः सर्वशब्दानां सम्बन्धश्च योगिगम्य एव । तेषां योगबलेन शब्दार्थोभयरूपायाः परायाः प्रत्यक्षात् ।

युक्तं चैतद् एकस्यैव स्फोटस्य शब्दब्रह्मरूपस्य सर्वशब्दतदर्थोपादानत्वेनोभयरूपतया ( शब्दार्थोभयरूपतया ) तत्कार्ययोः ( शब्दब्रह्मकार्ययोः ) उभयरूपत्वात् ( प्रत्येकमुभयरूपत्वात् ) ।

तथा चोक्तम्—

**क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम् ।**
**प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत् परा[6] ॥** इति ।

---

१. इदं शब्दब्रह्म उत्तमज्योतिःपदेनापि व्यपदिश्यते । उद्वयमित्यादि (यजुः०अ० २० म० २१) मन्त्रेण योगाभ्यासप्रक्रियायां चत्वारि चक्राणि सन्तीति ज्ञायते । तत्र हार्धमात्रा प्रतिमापदेन धृतिपदेन वा गृह्यते । तथा च सा तमः प्रतिमा, धृतिर्वा कथ्यते । स्वः =(शब्दः तेजश्च) बिन्दुपदेन गृह्यते ।

उत्तमज्योतिषो दिव्यः सूर्यः, तस्मादुत्तरो देवस्तस्माद् रवः, ततस्तमः । अयं प्रतिलोमक्रमम् ।

२. वा० प० १।१—टीकायाम् ।
३. न्या० वाचस्पत्यम्—२।१।५५—टीका ।
४. योगवैशारदी—समाधिपादे—२ ।
५. वा० प० १।२३ ।
६. लघुमञ्जूषा—पृ० ४९ ।

'अयं भावः—मायानुपहितं ब्रह्म निर्गुणम्, मायोपहितं सगुणम्। तच्च ब्रह्म-जगदुपादानकारणम्, तदेव बिन्दुशब्दवाच्यम्। स च बिन्दुः कारणरूपः सूक्ष्मः। कार्यरूपस्तु त्रिविधः—बिन्दुः, बीजम् नाद इति। बिन्दुर्ब्रह्मरूपः, शक्तिर्बीजम्, तयोः क्षोभ्यक्षोभकाख्यः संवन्धो नादः'[1] इति मञ्जूषायाम्[2]।

**निरुक्तमूलकः शब्दार्थसृष्टिक्रमः**

अधुना यावत् शब्दार्थौ अत्यन्तं संसृष्टावास्ताम्। ततश्च प्रकाशमयो बिन्दुः प्रकृतिः, अस्यामेव प्रकृतौ लीनः प्रत्ययो निःसृत्य बिन्द्वंशसंपृक्तहार्धमात्रारूपं धारयति। सैव हार्धमात्रा धृतिः प्रतिभा वा कथ्यते। ततः सैव विसर्गात्मना महत्तत्त्वरूपं दधाति। अनया रीत्या शब्दार्थसृष्टिर्लब्धास्पदा भवति। तस्माद् विसर्गादुरस्यो हकारोऽहंकार-रूपम्, विद्यारूपं वा धत्ते। ततः कण्ठ्यो हकारो मनोभावमासादयति। तथा च तस्या एव हार्धमात्राया उद्भूतस्य विसर्गस्य रूपत्रयमस्ति। विसर्गः, उरस्यो हकारः, कण्ठ्यो हकारश्चेति[3]।

स एव कण्ठ्यो हकारो मनःस्वरूपः शब्दतन्मात्ररूपेण परिणमते। स एवाग्रे प्रसरन् तालुस्थानं संप्राप्य स्पर्शतन्मात्ररूपे यकारे परिणतो भवति। स एव मूर्धानं गत्वा रूपतन्मात्ररूपेण रेफेण परिणम्यते। ततो दन्तस्थानं लब्ध्वा रसतन्मात्रेण लकारेण विवर्तते। तत ओष्ठस्थानमासाद्य गन्धतन्मात्रे वकारे स्वीयं रूपमाविर्भावयति। तथा चायमेव विसर्गो हयरलवेति पञ्चात्मना व्यवतिष्ठते। ततश्च स एव विसर्गः कचट-तपेति पञ्चानां ज्ञानेन्द्रियाणां रूपं दधाति। गजडदबेति कर्मेन्द्रियपञ्चकरूपं च बिभर्ति। इमाः सविसर्गाः षोडश मातृकाः। **'अर्धमात्रास्थिता नित्या यानुच्चार्या विशेषतः[4]'** इति मार्कण्डेयपुराणे निर्दिष्टाः सन्ति।

---

१. (क) अस्या बिन्दुरूपिण्याश्चिदचिन्मिश्रायाः प्रकृतेः शब्दब्रह्म पराऽभवत्।
(ख) अत्रेदं तत्त्वम्—तान्त्रिकसंस्कारसंस्कृतचेतसा भट्टनागेशेन शब्दब्रह्मणः परायाश्चोत्पत्तिः कण्ठरवेणोक्ता। वस्तुतस्तु अस्माकं परमवैदिकानां मते उद्वयम् (यजुः अ० २० म० २१) इति मन्त्रोक्तं स्वरेव (शब्दः तेजश्चे) प्रकृतिपदेन बिन्दुपदेन वा गृह्यते। आस्माकीनं शब्दब्रह्म तु उत्तमज्योतिःपदेन गीयते, तच्च बिन्दोरूर्ध्वं चतुर्थसोपाने चकास्ति। विस्तृतं चैतत् प्रतिमायां द्रष्टव्यम्।

२. मञ्जूषा—पृ० ५०।

३. अत्रेदं रहस्यम्—यदि हि हार्धमात्रापदेन धृतिः प्रतिमा वा गृह्यते, तदा हार्धार्धपदेन (यो हि तान्त्रिकग्रन्थेषु बहुत्र प्रयुज्यते) बिन्दुः प्रकृतिर्वा गृह्यताम्। तथा सति हार्धार्धमात्रा नाम मात्राया अष्टमोंऽशः हार्धमात्रापदेन चतुर्थोंऽशः, विसर्गपदेन तु अर्धमात्रा। अन्यत् सर्वं मूले निरूपितम्।

४. दुर्गासप्तशती—१।५५।

**स्वरसृष्टिः षोडशमातृका स्वरूपं च**

यदा च हयरलवेति पञ्चकं संप्रसृतं भवति, तदा स्वीयमर्धमात्रात्मकं रूपं वर्धयित्वा एकमात्रारूपं दधत् भूतपञ्चकरूपं धारयति। एवमेता एव पञ्चमातृका अ इ ऋ ऌ उ रूपेण परिणमन्ते। **'इग् यणः संप्रसारणम्'** इति सूत्रयन् भगवान् पाणिनिरिममर्थं परिपुष्णाति। एवं हकाररूपमातृकया यदा वर्गपञ्चकप्रथममातृकाः संयुज्यन्ते, तदा ख छ ठ थ फेति स्थूलानि पञ्चज्ञानेन्द्रियाधिष्ठानरूपाणि भवन्ति। एवमेव यदा वर्गपञ्चकतृतीयमातृका हकाररूपमातृकयाऽऽश्लिष्यन्ते, तदा घ झ ढ ध भेति पञ्चानां कर्मेन्द्रियाणामधिष्ठानानि सम्पद्यन्ते। बिन्दुना पित्रा यदा प्रत्येकवर्गतृतीयमातृकाः संसृज्यन्ते, तदा ताभ्यो वर्गाणां पञ्चमा वर्णाः सञ्जायन्ते। इमे पञ्चमा वर्णा न हि मातृकाः; किन्तु पुरुषा एव।

तथा हि एको बिन्दुः पितृस्थानीयस्तस्य षोडश मातृकाः स्त्रियः सन्ति। यदा हकाररूपमातृकया संसृज्य कादयो गादयश्च पञ्च पञ्च वर्णाः खादीन् घादींश्च पञ्च पञ्च वर्णान् सुवते, तदा ता आयुर्वेदपद्धत्यनुसारं स्त्रिया सह स्त्रियाः संयोगे जायमाना वर्णा नहि पुम्भावमापन्नाः; किन्तु नपुंसकतामेवासादयन्ति। अनयैव रीत्या चत्वारो यमाः पञ्चमो यमश्च तैत्तिरीयप्रातिशाख्योक्तः, तदा वर्गाणां पञ्चमा वर्णा दशसु ज्ञानेन्द्रियकर्मेन्द्रियेषु पुंस्त्वमादधते, तदा तानि पुरुषाणां दशेन्द्रियाणि स्त्रीणामिन्द्रियापेक्षया वैशिष्ट्यमधिकां च पुंस्त्वशक्तिमासादयन्ति। विसर्गस्य कचटतपरूपमातृकातः पूर्वं स्थितौ जायमाना जिह्वामूलीयशकारषकारसकारोपध्मानीयाः पञ्च ऊष्मविभूतयः स्त्रीणां ज्ञानेन्द्रियेषु पञ्चसु वैशिष्ट्यमादधते। कर्मेन्द्रियेषु **'पादरहितेषु'** तासां वैशिष्ट्यं तु एकार ओकार ऐकार औकारश्च निदधते।

पूर्वस्मिन् मदीये लेखे प्रतिभाविद्याशब्दौ धृत्यहंकारसमानार्थौ मयोपात्तौ। तत्राऽस्मदीये दर्शने च निरुक्तमपि मूलम्। **'व्याकरणस्यैव कात्स्न्यं निरुक्तम्'**[2] इति यास्कोक्त्या यो ह्यंशः पाणिनीये व्याकरणे नोपलभ्यते, स चावश्यं निरुक्ताद्याश्रयणेन पूरणीयः।

**सृष्टिक्रमे मूलभूतनिरुक्तयोपन्यासः**

**अपश्यं गोपामनिपद्यमानम् आ च परा च पथिभिश्चरन्तम्।**
**स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः**[3] **॥**

'आवरीवर्ति भुवनेष्वन्तः' इति। अथैष महानात्मा सत्त्वलक्षणस्तत् परं तद् ब्रह्म तत् सत्यं तत् सलिलम्, तदव्यक्तम्, तदस्पर्शम्, तदरूपम्, तदरसम्, तदगन्धम्,

१. अत एव स्त्रीणां पादेषु पुरुषपादापेक्षया शक्तिसंकोचः।
२. निरुक्तम्—१।१५।    ३. ऋ० सं० १।१६४।३१।

तदमृतम्, तच्छुल्कम्, तन्निष्ठो भूतात्मा। सैषा भूतप्रकृतिरित्येके। तत् क्षेत्रं तज्ज्ञानात् क्षेत्रज्ञम् अननुप्राप्य निरात्मकम्। अथैष महानात्मा त्रिविधो भवति, सत्त्वं रजस्तम इति। सत्त्वं तु मध्ये विशुद्धं तिष्ठति अभितो रजस्तमसी। रज इति कामः, द्वेषस्तम इत्त्यविज्ञातस्य विशुध्यतो विभूतिं कुर्वतः क्षेत्रज्ञपृक्त्वाय कल्पते।

प्रतिभालिङ्गो महानात्मा, आत्मलिङ्गा विद्या, प्रकाशलिङ्गं मनो निश्चयलिङ्ग आकाशः। आकाशगुणः शब्दः, आकाशाद् वायुर्द्विगुणः स्पर्शेन। वायोर्ज्योतिस्त्रिगुणं रूपेण ज्योतिष आपश्चतुर्गुणा रसेन। अद्भ्यः पृथिवी पञ्चगुणा गन्धेन। पृथिव्या भूतग्रामस्थावरजङ्गमाः। तदेतदहर्युगसहस्रं जागर्ति। तस्यान्ते सुषुप्स्यन्नङ्गानि प्रत्याहरति। भूतग्रामाः पृथिवीमपियन्ति। पृथिवी आपः, आपो ज्योतिषम्, ज्योतिर्वायुम्, वायुराकाशम्, आकाशो मनः, मनो विद्याम्, विद्या महान्तमात्मानम्, महानात्मा प्रतिभाम्, प्रतिभा प्रकृतिम्। सा स्वपिति युगसहस्रं रात्रिः। तावेतौ अहोरात्रौ अजस्रं परिवर्तेते। स कालः तदेतदहर्भवति।

**सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः[1]॥**

अत्रेदं रहस्यम्—**'षड् भावविकारा भवन्तीति वार्ष्यायणिः[2]'** जायते, अस्ति, विपरिणमते, वर्धते। एते अनुलोमा भावविकाराः। त एव चतुर्दशेऽध्याये निरुक्ते[3] **'तदेतदहर्युगसाहसं जागर्ति'** इत्येतेन ग्रन्थेन प्रतिपादिताः सन्ति **'तस्यान्ते सुषुप्स्यन् अङ्गानि प्रत्याहरति'** इत्यादिना तु प्रतिलोमा भावविकारास्तत्रैव चतुर्दशेऽध्याये प्रतिपादिताः। ये हि प्रथमेऽध्याये **'अपक्षीयते नश्यति'** इत्यनेन निर्दिष्टाः। एते च विकाराः प्रकृतेर्भवन्ति, यतो हि निरुक्ते प्रथमम् **'अथैष महानात्मा सत्त्वलक्षणस्तत् परं तद् ब्रह्म तत् सत्यम्[4]'** इत्यादिना परब्रह्मणः प्रतिपादनानन्तरम् **'तन्निष्ठो भूतात्मा सैषा भूतप्रकृतिरित्येके'** इत्यादिना प्रकृतेरेवोपक्रमात्। उपसंहारेऽपि प्रकृतावेव प्रतिभायां, लयप्रदर्शनाच्च, क्षेत्रज्ञस्य क्षेत्ररूपप्रकृतिभिन्नत्वेन व्यवस्थापितत्वाच्च।

पूर्वोक्ते निरुक्ते विद्यापदेन अहंकारस्य प्रतिभापदेन धृतेश्च ग्रहणम्। इयं हि धृतिर्नहि विस्तरेण कस्मिन्नपि ग्रन्थे प्रतिपादिताऽस्ति, किन्तु गीतायाम् सात्त्विकी-

---

१. श्रीमद्भगवद्गीता–८।१७।　　२. निरुक्तम्–१।२।८।

३. तथा च परब्रह्मणोऽन्तःस्था प्रकृतिरिति सूच्यते।　　४. निरुक्तम्–१४।३।

५. इयं प्रतिभा वाक्यपदीयोक्तप्रतिभातः 'प्रातिभं वा सर्वम्' इत्युक्तप्रतिभातश्चान्या। प्रतिभायामेतस्या भिन्नायाः प्रतिभायाः स्वरूपमुपपादयिष्यते।

धृतिर्नाम सुखे दुःखे यया नाप्नोति विक्रियाम्।
तां भजेत सदा प्राज्ञो यं इच्छेद् भूतिमात्मनः॥

इत्यनेन यद् धृतेर्लक्षणमुक्तम् सा धृतिरितोऽन्या।

राजसी-तामसीभेदेन त्रिविधो भेदो धृतेः प्रदर्शितः। सा च धृतिर्भगवता शंकरेण **'ज्ञानं बुद्धेर्वृत्तिः। बुद्धिस्तु वृत्तिमती। धृतिस्तु वृत्तिविशेष एव बुद्धेः'** इत्यनेन ज्ञानमिव धृतिरपि बुद्धिवृत्तिरेवेत्युक्तम्। परं धृतेर्बुद्धिवृत्तित्वे पार्थक्येन धृतेः प्रदर्शनमसङ्गतं स्यात्।

भगवता श्रीरामानुजाचार्येणापि भाष्ये धृतेः स्वरूपं न सम्यग् वर्णितम्। तट्टीकाकर्त्रा वेदान्ताचार्येणापि स एव पन्था अवलम्बितः **'अयमपि संकल्पदार्ढ्यादिरूपो बुद्धिस्वभावविशेष एव'** इत्यादिना। तथा च चिरादिमां धृतिं गीतोक्तामन्विष्यन् निरुक्ते प्रतिभापदव्यपदिष्टां संप्राप्य परं प्रमोदमावहम्। सा च धृतिः (सत्त्वरजस्तमसां त्रयाणां गुणानां समाहारः प्रकृतिरिति) गुणानां वैषम्ये सत्त्वप्राधान्ये प्रकृतेरुदेति, रजःप्राधान्ये तु बुद्धिः। तमःप्राधान्ये त्वहंकारस्य समुदयः। गुणवैषम्येऽपि त्रयो गुणा यदा परस्परमहमहमिकया संमिश्रिताः साम्यमिवापन्ना भवन्ति, तदा मनस आविर्भावो भवति।

यद्यपि धृतेर्बुद्धेश्च सत्त्वप्राधान्ये एव समुदयः, तथापि यदा क्षोभोन्मुखा सा भवति, तदा धृतिरुदेति। क्षुब्धायां च तस्यां बुद्धिरुदेति इति उत्तरप्रदेशशिक्षामन्त्रिणः श्रीसम्पूर्णानन्दमहोदयाः।

**बुद्धौ ज्ञानस्य प्राधान्यं धृतौ तु क्रियायाः**

यद्यपि **'प्रवृत्तिं च निवृत्तिं च'** इत्यादिषु त्रिषु श्लोकेषु गुणत्रयभेदभिन्नाया बुद्धेर्लक्षणे 'वेत्ति', 'प्रजानाति', 'मन्यते' इति ज्ञानार्थकैस्त्रिभिर्धातुभिर्बुद्धेः कार्यनिर्देशेन बुद्धौ ज्ञानस्य प्राधान्यं प्रतिभाति। **'धृत्या यया धारयते'** इत्यादिषु त्रिषु श्लोकेषु त्रिविधाया धृतेर्लक्षणे 'धारयते', 'न विमुञ्चति' इति धारणार्थकधातोरुपादानेन क्रियायाः प्राधान्यं धृतौ प्रतीयते। एवं स्थितौ **'बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च'**[1] इति गीताबलेन च विशुद्धज्ञानेन विशुद्धया धृत्या च कर्तव्यावाप्तिः सम्भवति।

किञ्च धृतिर्बुद्धेरर्वाग्भाविनीति च सिध्यति, तथापि निरुक्तप्रामाण्याद् बुद्धेः कारणभूतैव प्रतिभा धृतिपदेन ग्राह्या। तस्यां च प्रतिभायां क्रियायाः प्राधान्यं ज्ञानं तु गुणीभूतम्। किञ्च प्रकृतावपि क्रियाया एव प्राधान्यं विशुद्धं चैतन्यं तु गुणीभूतम्। अत एव सा प्रकृतिः कथ्यते प्रतिभायामपि सैव कृतिः प्रकृतेस्तत्त्वं प्रधानभूतम्, इति प्रकृतेः सन्निहिता प्रतिभा। बुद्धिस्तु व्यवहिता तस्यामवस्थायां बुद्धिर्नहि कृत्युन्मुखीभवति। अपि चेयं क्रिया सैव ग्राह्या, या हि कर्तृत्वव्यपदेशे मूलभूता। सर्वा अपीमाः

---

१. 'क्रियाशक्तिप्रधानायाः' इत्यादिपूर्वोक्तः श्लोकोऽत्रानुसन्धेयः। ज्ञानेच्छाकृतिषु पूर्वापरीभावसत्त्वेऽपि प्रकृतौ प्रतिमायां बुद्धौ वा तत्प्रयुक्तः पूर्वापरीभावो न युक्तः।

शक्तयः परस्परं संश्लिष्टा विश्लिष्टाश्च भवन्ति। कार्यभेदात् सृष्टावासां विश्लेषो लये संश्लेष इत्यवगन्तव्यम्।

**सृष्टिविसृष्ट्योः स्वरूपम्**

यद्यपि तन्त्रालोकादितान्त्रिकग्रन्थेषु व्यापकस्य सङ्कोच एव सृष्टिः। यथा व्यापकमाकाशं सृष्टौ वाय्वादिक्रमेण पृथिवीरूपं धत्ते, तस्यां च पृथिव्यां व्यापकस्याकाशस्य रूपं सङ्कुचितं जातम्। विसृष्टौ तु यदा सैव पृथ्वी जलादिक्रमेण आकाशे लीयते, इति सङ्कुचितं तस्या रूपं विस्तृते व्यापके आकाशे लीनं भवतीति सङ्कोच एव सृष्टिः, विकासश्च लयः।

तथापि व्यावहारिकदृष्ट्या सूक्ष्मरूपेण विसृष्टिर्भवति, स्थूलरूपेण सृष्टिरिति द्वयोर्मदुक्तेस्तान्त्रिकोक्तेश्च सामञ्जस्यं विधेयम्।

**षोडशमातृकाविषये तान्त्रिकाणामस्माकं च मतभेदः**

षोडशानां नित्यानां मातृकाणां विषये तु तान्त्रिकैः सहास्माकं वैयाकरणानां नास्ति सामञ्जस्यम्; तैः षोडशानां स्वराणामेव नित्यषोडशिकात्वेन व्यवहृतत्वात्। तस्य स्फोरणं च पीठिकायां प्रतिमायां च भविष्यति।

किञ्च तेषां मते शुक्लशोणितात्मकबिन्द्वंशभूताद् अरुणाद् बिन्दोर्नादोत्पत्तिरुच्यते। परमस्माकं वैयाकरणानां मते 'उद्वयं तमसः परि स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यम्'[1] इति वैदिकमन्त्रमूलिका उत्तमज्योतिः, दिव्यः सूर्यः, उत्तरो देवः, स्वः, तमः[2] इत्येवं क्रमिकं भावमापन्ना विसृष्टिरेवाभिमता।

तथा हि उत्तमज्योतिःस्वरूपं सूक्ष्मादपि सूक्ष्मं शब्दब्रह्म स्वकं रूपं साधकानां कृते रविरूपेण स्वात्मकेन दिव्येन सूर्येण स्फोरयति। ततो नादात्मना उत्तरदेवरूपेणाविर्भवति, ततः स्वारूपेण बिन्दुना प्रकृतिरूपेण जागर्ति, ततस्तमोरूपेण[1] ह्रार्धमात्रारूपेण प्रतिभात्मना धृत्यपरपर्यायेण परिणमते, ततो विसर्गात्मना बुद्धिरूपेणाविर्भवतीति प्रक्रिया पूर्वग्रन्थभावस्फोरकत्वेन मन्तव्या ( अन्यत्तु पूर्ववत् सांख्यप्रक्रियानुकूलमेव। )

परमत्र यदान्तःकरणस्य निरोधावस्था, तदा निरुद्धं तत्स्वात्मनि विकसितं वृत्त्यात्मना परिणमते। तत्रापि पञ्चसु वृत्तिषु आद्या प्रमाणाख्या वृत्तिरधिक्रियते, सैव वृत्तिरधुना भवतां पुरः स्थापयितुं प्रयत्यते।

अस्माकं वैयाकरणानां मतेऽन्तःकरणपरिणामविशेषस्यैव प्रमाणत्वात् प्रमाणमपि प्रमेयान्तःपातित्वेनैव व्यवतिष्ठते।

---

१. शु० य० २।२१। २. इदं तमो तमोगुणाद् भिन्नम्।

**किञ्चित्प्रमाणविषये विचार्यते**

तत्र प्रत्यक्षानुमानार्थापत्तिशब्दानुपलब्धयः प्रमाणानि। अस्माकं वैयाकरणानां मते शब्द एव प्रमाणानां मूर्धन्यः[1]। तथा चोक्तं महाभाष्ये **'शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम्। शब्दश्च शब्दज्ञाने धर्ममाह'**[2] इत्यादि।

तत्र लोके प्रत्यक्षरूपप्रमाणस्य प्राधान्यं राजते। अनुमानस्यापि तन्मूलकत्वाद् अनुमानमपि न हि प्रत्यक्षापेक्षया बलवत्। तदेव प्रत्यक्षं प्रथममालोच्यते। किं भो! भवता प्रत्यक्षं प्रमाणं प्राधान्येन स्थापयितुं शक्यते? ओमिति चेत्, हृदये हस्तं निधाय ब्रवीतु भवान्, किं पुरोवर्तिवस्तु चक्षुःसन्निकृष्टं भवान् द्रष्टुं शक्नोति, नेत्येव मनसि धारणीयम्। न हि कश्चिदपि वस्तु सर्वतोभावेन द्रष्टुं शक्नुयात्। तथा चोक्तं वाक्यपदीये—

**दुर्लभं कस्यचिल्लोके सर्वावयवदर्शनम्।**
**कैश्चित्त्ववयवैर्दृष्टैरर्थः कृत्स्नोऽनुमीयते**[3] ॥

युगपत् सर्वावयवदर्शनस्यासम्भवात् कतिपयावयवदर्शनेन सकलार्थपरिच्छेद-स्तत्रानुमानिक एवेति प्रत्यक्षमपि नैव सकलमर्थस्वरूपं परिच्छिनत्ति[4]।

---

१. यद्यपि वैयाकरणैः शब्दस्य मुख्यं प्रामाण्यं स्वीकृतम्, तच्चास्मिन्नेव प्रघट्टके मूले मया सन्दर्शितम्। तथापि केवलशब्दप्रामाण्येन नास्माकं सकलेष्टसिद्धिः। प्रत्यक्षप्रमाणमन्तरा शब्दस्य श्रावणप्रत्यक्षाभावे मूलोच्छेदः। अनुमानं विनाऽपि अनुमानेनैव सिद्धानां बह्वीनां परिभाषाणां विलयापत्तिः। किञ्च वैयाकरणैर्व्यवहारपथान्न स्खलनीयम्। प्रत्यक्षानुमानप्रामाण्यमन्तरा पदे पदेऽन्धकूपे पातः।

२. महा० भा० १; पृ० ११। ३. वा० प० २।१५।

४. (क) किञ्च स्वयं भगवान् पतञ्जलिरपि उपलब्धिम् (अनुमानात् पार्थक्येन) अनुमानञ्च प्रामाण्येनाभ्युपागच्छत्। 'आदिरन्त्येन सहेता' (अ. १।१।७१) इति सूत्रेऽर्थापत्तिरपि ध्वनिता। प्रत्यक्षमपि तथाऽभ्युपगतवान्।

(ख) उपमानविषये तु वाक्यपदीये वृत्तिसमुद्देशे भर्तृहरिस्तट्टीकाकारश्च—

अनिर्ज्ञातस्य निज्ञानं येन तन्मानमुच्यते।
प्रस्थादिकेन मेयात्मा साकल्येनाभिधीयते ॥
अनिर्ज्ञातं प्रसिद्धेन येन तद्धर्म गम्यते।
साकल्येनापरिज्ञानादुपमानं तदुच्यते ॥ (वा० प० ३।१४।३५९-६०)

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्। तथा हि अप्रसिद्धम् अनिर्ज्ञातं गवयादि प्रसिद्धेन गवा सादृश्यतस्तद्धर्मः तस्यैव धर्मो यस्य तदिवेति परिच्छिद्यते। सादृश्यमात्रेण परिच्छेदो नारोहपरिणाहसाकल्येन विशिष्टात्मनाऽपि। अत एव सादृश्यं प्रत्यक्षेण स्फुटमत्रा-वधार्यते, इति तदपेक्षोपमानस्येति नेदं मानम्, अपि तु तस्य समीपं किञ्चिद्रूपतया परिच्छेदात्।

**शब्दस्य मुख्यं प्रामाण्यम्**

तत्र प्रत्यक्षानुमानोपमानशब्दानुपलब्धिप्रभृतीनि तेषु तेषु शास्त्रेषु स्वस्वाभिमतानि प्रतिपादितानि सन्ति, परमस्माकं वैयाकरणानां मते शब्द एव प्रमाणानां मूर्धन्यः। तथा चोक्तं महाभाष्ये **'शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्। शब्दश्च शब्दज्ञाने धर्ममाहेति'** ।

लोके तु प्रत्यक्षरूपप्रमाणस्य प्राधान्यं राजते। अनुमानस्यापि तन्मूलकत्वात् तदनुमानमपि नहि प्रत्यक्षापेक्षया बलवत्। तदेव प्रथममालोचितम्[1]।

अपि च अतिदूरस्थं वस्तुनो रूपं कियन्मितमिति न वक्तुं पार्यते। एवं सति प्रत्यक्षप्रमाणविलये अनुमानप्रमाणस्य गर्भस्राव एव स्यात्। तथा सति कया रीत्या व्यवहर्तव्यमिति चिन्तायामुच्यते—**'नहि एषु प्रत्यक्षमस्त्यनृषेरतपसो वा, पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तात्। मनुष्या वा ऋषिषु उत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति? तेभ्य एतं तर्कमृषिं प्रायच्छन्[2]'** इति निरुक्तोक्तिमनुसृत्य व्यवहर्तव्यमस्माभिः।

**ऋषि-मुनि-मनुष्य-पशुभेदभिन्नाश्चतुर्विधा मानवाः**

तथा च मनुष्येषु चत्वारो भेदाः सन्ति। ऋषिः, मुनिः, मनुष्यः, पशुश्चेति। तत्र ये सर्वतोभावेन विषयान् पश्यन्तीति त एव ऋषयः। ये च ऋषयो दृष्ट्वा मननं कुर्वन्ति, ते मुनय उच्यन्ते। ये विषयानंशतो दृष्ट्वा मननेनावगच्छन्ति, ते मनुष्या उच्यन्ते। ये च परान् स्पशन्ते बाधन्ते ते पशवो भवन्ति। तथा च स्पशतेरेव पशुशब्दो व्युत्पादनीयः। अस्यामवस्थायां प्रत्यक्षप्रमाणविलयमेवालोच्यः। तथा च—

---

१. 'अत एव उपमानस्य प्रामाण्येऽपि विवदन्ते किल इत्यादि' किञ्च **'उपमानानि सामान्यवचनैः'** (२।१।५५) इति सूत्रे महाभाष्ये 'मानं हि नाम अनिर्ज्ञातार्थमुपादीयते, अनिर्ज्ञातमर्थं ज्ञास्यामीति तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानं गौरिव गवय इति। गौर्निर्ज्ञातो गवयोऽनिर्ज्ञातः। उद्द्योतः—'मानं हीति—अनिर्ज्ञातार्थस्य साकल्येन ज्ञापकत्वं हि तत्त्वम्। यथा प्रस्थादि अज्ञातस्य परिमाणरूपार्थस्य साकल्येन ज्ञापकम्, न तथोपमानम्। गौर्हि गवयं कतिभिश्चिद् धर्मैरेव तद्गतैर्ज्ञापयति न साकल्येन' इति।

अस्यां स्थितौ भाष्यादिपर्यालोचनया यथोपलब्ध्यनुमानादीनां प्रामाण्यं सिध्यति, न तथोपमानस्य। कण्ठरवेणैव भगवता भाष्यकारेण मानसामीप्यमेवोपमानस्य प्रतिपादितम्। अतोऽस्माभिरुपमानस्य प्रमाणान्तरत्वं नाङ्गीक्रियते। विस्तरेणैतद् विचारयिष्यते प्रतिमायाम्। 'आदिरन्त्येन सहेता' (अ० १।१।७१) 'सम्बन्धिशब्दैर्वा तुल्यम्' (मा० १ भा० पृ० ६२ प० २१) इति वार्त्तिकभाष्यादिसमालोचनयाऽर्थापत्तिरपि प्रमाणम्, सा च परस्परविरुद्धत्वेन प्रतिसन्धीयमानधर्मद्वयघटितसाध्यानुमितिरूपात्मिका।

२. निरुक्तम्—१३।१२।

**'ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवः तद् यद् एनान् तपस्यमानान् दृष्ट्वा ब्रह्म स्वयम्भ्वनार्षत् । ते ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते[1]'** इति । तद्भाष्ये च ऋषिर्दर्शनात् पश्यति ह्यसौ सूक्ष्मानप्यर्थान् 'स्तोमान् ददर्शेत्यौपमन्यवः' मन्त्रास्तोमास्तानसौ तारकेण ज्ञानेन पश्यत्येवं औपमन्यव आचार्यो मन्यते। ब्राह्मणमपि चैतस्मिन्नर्थे दर्शयति 'तद् यद् एनान्' इत्यादि तदेतद् उच्यते—यत्कृतमृषीणामृषित्वम् । यत् यस्मात् एनान् तपस्यमानान् तप्यमानान् ब्रह्म ऋग्यजुःसामाख्यं स्वयम्भु अकृतकम् अभ्यागच्छत् आविर्भूतमित्यर्थः । अनधीतमेव तत्त्वतो ददृशुस्तपोविशेषेण । तदृषीणामृषित्वम्' इत्युक्तम् ।

एतादृश एव ऋषिः **'पृषोदरादीनि यथोपदिष्टम्[2]'** इति सूत्रे महाभाष्ये शिष्टपदेन निर्दिष्टः । भर्तृहरिणापि—

> **अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।**
> **ये भावान् वचनं तेषां नानुमानेन बाध्यते[3] ॥**

इत्यनेनापि स एव शिष्टो लक्षितः । अस्यां स्थितौ तादृशानाम् ऋषीणामभावात् किं कर्त्तव्यमिति समालोच्यैव निरुक्ते **'तर्कमृषिं प्रायच्छन्'** इत्युक्तं तथा च **'यत्किञ्चन अनूचानोऽभ्यूहति आर्षं तद्भवति[4]'** इति च निष्कृष्टोऽर्थस्तत्र प्रदर्शितः । तद्भाष्ये च 'अपि श्रुतितः अपि तर्कतः श्रुतिभ्यो ब्राह्मणेभ्यो निगमशेषेभ्यश्चोन्नीतार्थाभिधानसामर्थ्येभ्यो वाक्यार्थसामर्थ्यात् तस्योपरि पर्यायस्तर्कोऽभ्यूहो लक्षणा न्याय' इत्युक्तम् ।

यद्यपि निरुक्ते वेदार्थविषय एवायं मार्गः प्रदर्शितः, तथापि लोकेऽपि तदनुसरणं ज्यायः । अन्यथा स्वप्रत्यक्षबलेन व्यवहरणे व्यवहारोन्मूलनमेव भविष्यति । अद्यत्वेऽपि सर्वे पाश्चात्त्या यान् तर्कानवलम्बन्ते, तान् विहाय एतद्देशीयैरपि पदार्थसाक्षात्कारे व्यवहर्तुं न शक्यते । अतस्तस्मिन्नंशे तेषां शिष्टत्वं नापह्नोतुं पार्यते ।

तथा च शब्दस्य मुख्यं प्रामाण्यं लोके जागर्ति । प्रायो हि शब्दस्यैव प्रामाण्यमधिकमधुनाऽपि अनुभूयतेऽस्माभिः ।

**प्रत्यक्षप्रमाणविषये महाभाष्ये**

**'मनसा युक्तानीन्द्रियाण्युपलब्धौ कारणानि भवन्ति'[5]** भगवता पतञ्जलिना मनःसंयुक्तेन्द्रियार्थसंनिकर्षोत्पन्नज्ञानस्य प्रत्यक्षत्वं प्रदर्शितम् । तत्रैव उद्द्योते मनसेति प्रतीकमादाय **'यद्यपि पातञ्जलानामन्तःकरणं व्यापकम्, तथापि तत्परिणामविशेषो**

---

१. निरुक्तम्—२।११ । २. अष्टा० ६।३।१०१ । ३. वा० प० १।३८ ।
४. निरुक्तम्—१३।१२ । ५. महा० भा० ३।२।११५ ।

**मनश्चिरस्थायि मध्यमपरिमाणं संकोचविकासशालि ज्ञानकरणमिति भावः। अत एव सदा न ज्ञानयौगपद्यं कदाचिद् यौगपद्यमपि'**[1] इत्यनेन वैयाकरणानां नये एकस्मिन्नपि काले ज्ञानयौगपद्यं भवतीति सूच्यते।

किञ्च लघुमञ्जूषायां तिङर्थनिरूपणे—'वस्तुतोऽण्वेव मनः। तथा च—

**लक्षणं मनसो ज्ञानस्याभावो भाव एव च।**
**वैधृत्यान्मनसोऽज्ञानं सान्निध्यात्तच्च वर्तते॥**
**अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ**[1]।

इति चरके पतञ्जल्युक्तेः[2]।

परमेतद् द्वयमपि न युक्तम्। वस्तुतो मनोऽपि व्यापकमेव। अत एव योगिनां दूरस्थविप्रकृष्टानां बहूनां वस्तूनां समकालमपि ज्ञानं भवति। अस्माकं मनस्तु तमसा आवृतत्वाद् विषयानवबोधयितुं नालमिति प्रतिमायां विस्तरः।

**अनुपलब्धिरपि प्रमाणम्**

किञ्च **'तस्य भावस्त्वतलौ'**[3] इति सूत्रे **'न ह्यन्यदुपलभ्यते'** इति भाष्यात् **'एवञ्चानुपलब्धिप्रमाणेनान्यत्वाभावनिश्चय इत्यर्थः'** इति कैयटाच्च उपलब्धिलक्षणं प्रमाणमेव सत्त्वनिश्चायकम्। उपलब्धिलक्षणात्प्रमाणात्प्राप्तसत्त्वनिश्चययोग्यस्यानुपलम्भादसत्त्वनिश्चय इत्यर्थः। एवञ्च वैयाकरणानां मतेऽनुपलब्धिरपि प्रमाणान्तरम्।

**प्रत्यक्षं द्विविधम्**

तत्रेन्द्रियजन्यं प्रत्यक्षम् अतीन्द्रियप्रत्यक्षमिति भेदद्वयभिन्नं द्विविधं प्रत्यक्षम्। तयोः सेन्द्रियप्रत्यक्षमवलम्ब्य तत्स्वरूपं प्रदर्श्यते। तानि चेन्द्रियाणि ज्ञानेन्द्रियकर्मेन्द्रियभेदेन द्विविधानि सन्ति। एषामिन्द्रियाणां पञ्चानां तन्मात्राणाञ्चोत्पत्तिः अहङ्कारादेव सञ्जायते। तत्रापि मतद्वैविध्यम्। सहभावेन[4] क्रमिकतया चेति। तत्र सहभावेनोत्पत्तिर्न हि व्याकरणदर्शनानुमोदिता, नापि वेदपद्धत्यनुकूला, कण्ठादीनां पञ्चानां स्थानानां स्थितिक्रमानुसारेण तत्तत्स्थानाभिव्यक्तानां वर्णानां तन्मात्रादिभिस्तैस्तैरिन्द्रियैस्तैस्तैर्भूतैश्च सम्बन्धस्य बहुधा प्रतिपादितत्वात् तेषामुत्पत्तिः क्रमिकैवानुसन्धेया। एवं सति पञ्चभिर्ज्ञानेन्द्रियैः प्रत्यक्षीकृतेषु विषयेषु तारतम्यमप्यवश्यमभ्युपगन्तव्यम्।

तथा च प्रत्यक्षानुमानागमानां प्रमाणानामन्तःपाति आगमरूपं प्रमाणमेव शाब्दत्वेन स्वीकार्यम्। तेषां पञ्चानां प्रत्यक्षाणां शाब्दं प्रत्यक्षं नाम तादृशानुपूर्वीकस्य

---

१. चरके मनसोऽणुत्वं योगे तु व्यापकत्वं स्थिरीकृतम्। व्याकरणेऽपि व्यापकत्वमेवाभ्युपगम्यते तस्य। अत एव 'अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा' (वाक्य० का० १ श्लो० ५१) इति हरेरुक्तिः संगच्छते। तथा च पतञ्जलिर्भाष्यकारः चरकश्च परस्परं भिन्नावेव।

२. ल० म० पृ० ८७१।

३. अष्टा० ५।१।११९।

४. सहभावेनैवोत्पत्तिः सांख्यादिदर्शनेषु प्रतिपादिताऽस्ति।

शब्दस्य प्रत्यक्षमित्यर्थः। अनया रीत्या श्रुत्या शब्दस्य त्वचा स्पर्शस्य, चक्षुषा रूपस्य, रसनया रसस्य, नासया गन्धस्येत्येवं बाह्यं शाब्दादिप्रत्यक्षं भवति। अस्यां स्थितौ **'शब्दप्रमाणका वयमिति'** भाष्यस्य कोऽर्थः ? किं प्रत्यक्षादपि शब्दप्रमाणं बलीयः ? ओमित्येव ब्रूमः। अलातचक्रादौ प्रत्यक्षप्रमाणस्य व्यभिचरात्। एवञ्च यो हि विषयः प्रत्यक्षेण ग्रहीतुं न शक्यते, तत्र शिष्टोपदेशत एव विषयो ग्राह्यः। तथा च शिष्टैरुपदिष्टे शब्दे या हि वर्णानामानुपूर्वी श्रूयते, सा च श्रावणप्रत्यक्षविषयीभूता। यो हि शब्दः श्रुतस्तदर्थे एव शिष्टोपदिष्टशब्दप्रमाणगम्यः।

**प्रत्यक्षेऽपि तारतम्यम्**

अत्र हि पञ्चस्विन्द्रियेषु श्रवणेन्द्रियं चक्षुरिन्द्रियञ्च। ईदृशं बलवद् यत्तत्र शब्दो रूपञ्च दूरस्थमप्यागच्छति। अन्यौ च स्पर्शगन्धौ दूरस्थावपि वायुना नीयेते इन्द्रियाणां सन्निधाने। यद्यपि रसं वायुरानेतुं न शक्नोति, तथापि सूक्ष्मं रसमानयत्येव। अत एव समुद्रतटे स्थितस्य पुरुषस्य लवणरसप्रतीतिर्भवति। तथा चाकाशेन्द्रियमपि श्रवणं नहि रूपादीन् ग्रहीतुं समर्थम्। तेषां सामर्थ्यस्य स्वस्वविषयग्रहण एव परिसीमितत्वात्।

परमेतदत्र रहस्यमस्ति यच्छब्दतन्मात्रा अन्यासु स्पर्शादितन्मात्रासु अनुस्यूता कर्णपथमन्या अपि मात्रा आनयति। एवं सत्यपि अस्माकं श्रवणेन्द्रियं नहि तादृशशक्ति-विशिष्टं यत्तास्तन्मात्रा ग्रहीतुं शक्नुयात्। ऋषीणां तु सर्वाणीन्द्रियाणि सर्वानपि विष-यानवबोद्धुं शक्नुवन्ति। अत एवोक्तं वाक्यपदीयटीकायां हेलाराजेन—**'सर्वज्ञा हीन्द्रि-यान्तरेणेन्द्रियान्तरव्यापारं कुर्वन्ति। तथा चागमः 'नेदानीमिन्द्रियैरेव पश्यति। घ्राणतः शब्दं शृणोति, पृष्ठतोऽपि रूपाणि पश्यति, अङ्गुल्यग्रेण सर्वार्थानुप-लभते**[1]' इति।

एतत्तु निर्विवादं यच्चक्षुरिन्द्रियं श्रवणेन्द्रियञ्च दूरस्थमपि स्वविषयं ग्रहीतुं शक्नुतः। नहि तथा त्वग्रसनाघ्राणादीनीन्द्रियाणि तथा कर्तुं प्रभवन्ति। अत्र को हेतुरिति विचारणीयम् ? तत्र श्रवणेन्द्रियविषये विचार्यते। श्रवणेन्द्रियं हि नाभसम्। तच्च नभो व्यापकम्। एवञ्च व्यापकाकाशदेशस्थः शब्दः श्रोत्रपथमागच्छतीति शब्दस्य प्रत्यक्षं भवति। अनया रीत्या दूरस्थमपि रूपं चक्षुरिन्द्रिये पतति। तच्चेन्द्रियं विषय-मन्तर्भाव्यं रूपं गृह्णाति। नहि स्पर्शः सम्बन्धमन्तरा स्वप्रत्यक्षं प्रति कारणं भवति। अनया गन्धो रसश्च वायुसम्बन्धं विना नहीन्द्रियसान्निध्यं भजतः। तथा च वायुना नीता एव परमाणवः स्वीयप्रत्यक्षं प्रति कारणभावं भजन्ति।

---

१, वा० प० ३।१।४६।

**भाष्ये प्रत्यक्षस्यानुमानस्य चोपन्यासः**

ननु च **'प्रत्यक्षमुपलभ्यते**[1]**', 'प्रत्यक्षमाख्यानमुपदेशो गुणैश्च प्रापणमुद्देशः**[2]**', 'अन्यथाजातीयकः खल्वपि प्रत्यक्षेणार्थसंप्रत्ययोऽन्यथाजातीयकः सम्बन्धात्। राज्ञः सखा राजसखः। सम्बन्धादेतद् गन्तव्यं नूनं राजाप्यस्य सखेति**[3]**', 'एते प्रत्यक्षं कंसं घातयन्तीति**[4]**'** एषु स्थलेषु प्रत्यक्षं प्रमाणं भाष्ये समुपलभ्यते। किञ्च अनुमानमपि **'सम्बन्धादेतद् गन्तव्यम्**[5]**'** इत्यनेन प्रतीयते। किञ्च **'कोऽसावनुमानः**[6]**', 'क्रियापृथक्त्वे च द्रव्यपृथग्दर्शनमनुमानमुत्तरत्रानेकशेषभावस्य**[7]**'** इत्यादौ च भाष्ये अनुमानप्रमाणमप्युपलभ्यते। **'धूमं दृष्ट्वा अग्निरत्रेति गम्यते, त्रिविष्टब्धकं दृष्ट्वा परिव्राजक इति**[8]**'।** एतेनापि अनुमानप्रमाणं सूच्यते। किञ्च **'प्रत्यक्षादप्यनुमानबलीयस्त्वम्। तद्यथा—अलातचक्रं प्रत्यक्षं दृश्यते अनुमानाच्च गम्यते नैतदस्तीति**[9]**'** इत्यादौ भाष्ये अनुमानस्यापि प्रामाण्यमभ्युपगतम्। किमुत प्रत्यक्षादपि तस्य बलीयस्त्वं प्रदर्शितम्[10]।

**साम्प्रतं वैयाकरणमतेन मोक्षो निरूप्यते**

तत्र मया सृष्टिर्लयश्च निरुक्तमवलम्ब्यात्यन्तं संक्षिप्ततया प्रतिपादितौ। परमनया रीत्या संसृतिचक्रं भ्राम्यत्येव न कदापि तदुपरमो भवेत्। **'इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः**[11]**'** इत्युक्त्या तु तदुपरतिर्न सम्भावनीया। तथा सति व्याकरणमेव मोक्षस्य सरलो मार्ग इति निश्चीयते। कया रीत्या व्याकरणेन मोक्षप्राप्तिर्भवतीति विचारणीयम्। यद्यपि भगवता पतञ्जलिना **'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति**[12]**'** इत्यादिना साधुशब्दप्रयोगेण कामपूर्त्तिः प्रतिपादिता। किञ्च—

**नाकमिष्टसुखं यान्ति चतुर्भिर्वाडवै रथैः।**
**अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः**[13] **॥**

इत्यनया चोक्त्या स्वर्गप्राप्तिरपि साधुशब्दप्रयोगेण परिदर्शिता, तथापि मोक्षावाप्तिः कया रीत्या भवतीति भाष्याक्षरसमालोचनया नावगम्यते।

---

१. महा० भा० १।२।३०। २. तदेव–१।३।२। ३. तदेव–२।१।२४। ४. तदेव–३।१।२६। ५. महा० भा० १।१।९। ६. तदेव–१।३।१। ७. तदेव १।४।१०८। ८. तदेव–३।२।१३। ९. तदेव।

१०. तथा च नैकान्ततः कस्यचिद् बलीयस्त्वमेव न वाऽन्यापेक्षयाऽन्यस्य दुर्बलत्वमेव, किन्तु स्थानभेदेन बलीयस्त्वं दुर्बलत्वं चावधार्यम्। वस्तुतस्तु आर्षं प्रत्यक्षमेव सर्वेषां मूलम्। व्यवहारपथे तु परस्परं प्रमाणानि समुपस्थाप्य यथार्थपदार्थनिर्णयो विधेयः।

११. वा० प० १।२६। १२. महाभा० ६।१।८४। १३. महाभाष्ये–३।१।२८–उद्धृतम्।

अस्यां स्थितौ किञ्चिदुच्यते, पश्यन्तु भवन्तो व्याकरणस्य प्रयोजनानि । तत्र **'रक्षोहागमलध्वसन्देहाः प्रयोजनम्'**[1] इति प्रयोजनप्रतिपादके भाष्ये न हि मोक्षो निर्दिष्टः । अत उपरिष्टाद् द्रष्टव्यम् । तत्र त्रयोदश प्रयोजनानि भाष्ये समुट्टङ्कितानि सन्ति । परमत्र कश्चन प्रत्यवतिष्ठेत किं भो वैयाकरणनिकायेऽप्यस्ति बन्धमोक्ष व्यवस्था, यत्तेषां मतेन मोक्षनिरूपणं प्राप्तावसरं भवेत् ? अत्र ब्रूमः !

**आधुनिकानि दर्शनानि संग्रहमूलकानि**

महाशयाः कालचक्रस्यैवायं महिमा यद् भवादृशा वैयाकरणानप्यधिक्षिपन्ति । विदितमस्ति भवतां यत् पुरा लक्षश्लोकात्मकं सकलन्यायबीजगर्भितं दाक्षायणेन व्याडिनोपरचितं संग्रहाभिधानं नाम निबन्धनमासीत् । तत्र हि प्राचीनैर्दार्शनिकैर्दृष्टाः पदार्थाः स्वयं दृष्टा वा निरूपिता आसन् । कियता कालेन संग्रहमूलभूतेषु पाराशर्यकर्मन्दादिदार्शनिकैः प्रणीतेषु ग्रन्थेषु क्षयं नीतेषु अर्वाग्भाविनो दार्शनिकाः संग्रहादेवापेक्षितांशानुपादाय स्वकीयं स्वकीयं दर्शनं निरमासिषुः । तस्मिश्च संग्रहे कालवशात् क्षयं गमिते वर्षासु मण्डूका इवेतस्ततो रटन्तो मनुजा आत्मानं दार्शनिकं मन्यमाना दृश्यन्ते । अहं च तमेव भ्रष्टं व्याकरणागममुद्दिधीर्षुस्तेषां मतेन मोक्षस्वरूपं परिदर्शयिष्ये ।

तत्र वेदान्तकल्पलतिकायां मोक्षनिरूपणैकफलिकायाम्—**'औपनिषदास्तु भगवता नीलाचलनायकेन नारायणेनानुगृहीता निरतिशयानन्दबोधरूप आत्मैवानाद्यविद्यानिवृत्त्युपलक्षितो मोक्ष इत्याचक्षते'** इति मोक्षस्वरूपं लक्षितम् । तथा च **'शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्'**[2] ।

**अस्माकं वैयाकरणानां श्रुतेः प्रामाण्येन मोक्षक्रमः**

भाष्यसूचितानां श्रुतिप्रमाणकानामस्माकं मते श्रुतिरेव भगवती यदाह तत् प्रमाणम् । एवं च महाभाष्ये **'चत्वारि'**, **'उत त्वः'**, **'सक्तुमिव'** इत्यादिश्रुतिभिर्निर्दिष्टं मोक्षस्वरूपं दर्शयामि । तत्रासु अन्यतमामेव श्रुतिमवलम्ब्य हरिवृषभेण—

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।**
**प्राहुर्महान्तं वृषभं येन सायुज्यमिष्यते**[3] ॥ इति ।

एतेन सर्वेश्वरः सर्वशक्तिसम्पन्नो वृषभः, तस्मिन् खलु वाग्योगवित् शास्त्रजशब्दज्ञानपूर्वकप्रयोगेण क्षीणपापः पुरुषो विच्छिद्याहङ्कारग्रन्थीन् अत्यन्तं संसृज्यते ।

यद्वा त्रिषु स्थानेषु नाभावुरसि कण्ठे बद्धः पुरुषो यदा ज्ञातया त्रिविधया वाचा विशिष्टो भवति, तदा त्रिविधबन्धापगमे शुद्धो बन्धरहितोऽवतिष्ठते, स एव मोक्षपदेन व्यवह्रियते ।

---

१. पस्पशा० १, पृ० १४ । २. महाभा० १; पृ० ३६६ । ३. वा० प० १।१३१ ।

यद्वा **'शुङ्गेन सन् मूलमन्विच्छ सौम्य'**[1] इति श्रुत्युक्तपद्धत्या साधको वैखरी-मध्यमापश्यन्तीरूपान् ग्रन्थीन् भिनत्ति, तदा सा चिच्छक्तिः परा प्रकाशते इति सैव मोक्षावस्था ।

किञ्चेह द्वौ शब्दात्मानौ नित्यः, कार्यश्च । तत्र कार्यो विवृत्तोऽनित्यो यो हि लोकव्यवहारोपयोगी स हि पुरुषस्य वागात्मनः प्रतिबिम्बमुपगृह्णाति । नित्यस्तु अविवृत्तः साध्यसाधनव्यवहारस्य प्रतिसिद्धान्तं पदपदार्थव्यवहारस्य च योनिः कारणम् क्रमरहितः सर्वेषामन्तः सन्निवेशी विकाराणां प्रसवः कर्मणामाश्रयः सुखदुःखयोरधिष्ठानम् (तस्यैवानुग्रहोपघाताभ्यां सुखदुःखे उत्पद्येते) सर्वत्राऽप्रतिहतकार्यशक्तिः शब्दवृषभः तस्मिन् वाग्योगविदः अहंकारग्रन्थीन् विच्छिद्य अत्यन्तनिर्विभागेण संसृज्यन्ते । तथा चोक्तं वाक्यपदीये—

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।**
**प्राहुर्महान्तं वृषभं येन सायुज्यमिष्यते ॥**
**तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।**
**तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते[2] ॥**

**ब्रह्मामृतप्राप्तिः केषाम्**

अयं भावः—उपदर्शितमाहात्म्यस्य शब्दस्य योऽयमपभ्रंशेभ्यो विवेकेनावस्थानम्, स एव नित्यस्य ब्रह्मणः सिद्ध्युपायः । तस्य शब्दब्रह्मणः प्रवृत्तेः क्रियायास्तत्त्वं सत्तां प्रतिभाख्यां यो जानाति, स एव ब्रह्मामृतमश्नुते । अर्थात् तदनन्तरं प्रतिभोत्पद्यते । सा च प्रतिभा का ? इत्यत्र यस्याः षड्भावविकाराः, सैव प्रतिभेत्युच्यते । सैव प्रतिभा षण्णां भावविकाराणां प्रकृतिः, सैव च प्रतिभा ।

**स्वभावाचरणाभ्यासयोगादृष्टोपपादिताम् ।**
**विशिष्टोपगतां चेति प्रतिभां षड्विधां विदुः[3] ॥**

इत्युक्तरीत्या षड्विधा । अस्याः स्वरूपमन्यत्र प्रतिमायां वा निरूपयिष्यते ।

अपि च—

**सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।**
**अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि[4] ॥**

इति ऋगर्थानुसन्धानपूर्वकम्—'ये शास्त्रतः प्रकृतिप्रत्ययविभागपुरस्सरं साधून् ज्ञात्वा शास्त्रार्थध्यानवन्तो मानसज्ञानेन वाचमसाधुभ्यः पृथक् कृतवन्तः, ते तज्ज्ञान-

---

१. छा० उ० ६।७।६ ।　　२. वा० प० १।१३१–३२ ।
३. वा० प० २।१५४ ।　　४. ऋ० सं० १०।७१।२ ।

पूर्वकसाधुशब्दैर्लब्धान्तःकरणशुद्धयोऽत्र य एष दुर्गो मार्गो ब्रह्मरूपस्तत्रात्मना सह समानख्यातयस्त्यक्तभेदभावनाः सख्यानि सायुज्यानि जानते प्राप्नुवन्ति। यत एषां वाचि वेदाख्ये ब्रह्मणि या भद्रा लक्ष्मीः सर्वभासकब्रह्मरूपा सा अधि अधिकं निहिता भवति। एतच्छास्त्रसाध्यप्रयोगव्यङ्ग्यस्य ध्वनिरूपवैखरीरूपरूपितस्यैव तैर्वाचकत्व-स्वीकारेण तस्य चात्यन्तविचारे ब्रह्मातिरेके मानानुपलम्भेन तत्तदुपाधिभिन्नचित्त एव बोधकतया तैर्ग्रहात्। एवं सर्वबोधकेषु ब्रह्मबुद्धौ जातायां तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मबुद्धिर्वैयाकरणानाम्'[1] इतीत्यादिनोद्द्योते नागेशभट्टेन मोक्षप्राप्तिर्वैयाकरणाना-मुपपादिता।

**बन्धमोक्षस्वरूपम्**

वस्तुतस्तु जडचैतन्ययोरपृथग्भावेन अहंकारग्रन्थिग्रथितस्य वार्त्तज्ञानमेव बन्धः। यद्वा तस्याश्चिच्छक्तेः पश्यन्त्यादिरूपेण परिणामे नाभौ उरसि कण्ठे च शब्द-ब्रह्मणो वृषभस्य बन्धः, तथासति मोक्षो दुर्लभः। ततस्तत्त्रितयग्रन्थिविमोके हि सर्वथा प्रयतितव्यम्।

एवं च सर्वतः प्राथम्येन शब्दब्रह्मणो रूपं प्रदर्शनीयम्। तेन कल्पितेन रूपेण ज्ञातेन सता वक्ष्यमाणपद्धत्त्या विशुद्धयर्थं वैदिकी पद्धतिरलम्बनीया। तथा चोक्तं तत्स्वरूपं वेदे—

**चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।**
**त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यानाविवेश**[2]॥ इति।

अस्या अयमर्थः—अस्य देवस्य द्वे शीर्षे आन्तरो बाह्यश्च स्फोटः। चत्वारि शृङ्गाणि दिक्-साधन-क्रिया-कालाः, इतीमानि। त्रयो जाति-व्यक्ति-सम्बन्धाः पादाः। द्रव्यगुणपुरुषसंख्योपग्रहलिङ्गवृत्तयो हस्ताः। एवं षोडशभिरङ्गैर्विशिष्टः पुरुषो हि त्रिषु स्थानेषु नाभौ उरसि कण्ठे च बद्धः। एतत्स्वरूपं परिज्ञाय बन्धच्छेदनार्थं प्रयतनीयम्। तत्रायं क्रमः—**'चित्रं देवानाम्'**[3], **'उद्वयम्'**[4], **'उदु त्यम्'**[5] इति मन्त्रैः प्रतिपाद्यते।

तथाहि देवानां देवशीलानां पश्यन्ती-मध्यमा-वैखरीरूपाणां त्रिधावस्थितानां रश्मीनाम् चित्रा परया वाचा त्रायत इति चित्रम्, अनीकम् परया वाचाऽऽप्यायितः समूहः उदगात् उद्भूतमित्यर्थः। अर्थादिकैव परा वाणी दिवि नाभौ सूर्यरूपेण पश्य-न्त्यात्मनाविर्भवति। तदेवोच्यते मित्रस्य चक्षुः प्रख्यापकमिति यावत्। सैवान्तरिक्षे उरसि मध्यमात्मना विद्युद्रूपेण विद्योतते। वरुणस्य व्यापकमित्यर्थः। सा हि विद्युद् इरम्मदोऽप्युच्यते। सैव जलीयांशो वरुण इत्यर्थः। सैव पृथिव्यां कण्ठे वैखर्यात्मना अग्निरूपेण ज्वलति। सैव सूर्यो ज्योतीरूप इत्यर्थः।

---

१. महामा० पस्पशा० पृ० ४४। २. ऋ० सं० ४।५८।३।
३. शु० य० ७।४२। ४. तदेव–२०।२१। ५. तदेव–७।४८।

जगतः चरस्य, तस्थुषः, अचरस्य च आत्मा व्यापक इत्यर्थः। द्यावापृथिवी अन्तरिक्षं च स आप्रा व्याप्नोदिति यावत्।

**यदाप्नोति यदादत्ते यच्चात्ति विषयानिह।**
**यच्चास्य संततो भावस्तेनात्मेति स उच्यते[1] ॥**

**मोक्षप्राप्तौ रीतिः**

एवं च सैव चिच्छक्तिः परब्रह्मरूपा त्रिविधबन्धभेदनेन प्रकाशते। अनया पद्धत्या यदा तेषां ग्रन्थीनां साक्षात्कारो भवति, समाधौ तदा त्रिविधवाक्प्रलये ब्रह्मरूपा परावशिष्यते, सैव मोक्षः, बन्धस्य च्छेदे तत्स्वरूपं विद्योतते। तत्र साधनक्रमश्च **'उद्वयम्'** इति मन्त्रेणोच्यते।

तथा हि साधको गुरूपदिष्टमार्गेण प्रथमं तमः पश्यति। तदनन्तरं तमसि विलीने स्वः शब्दं तेजश्च पश्यति (स्वृ शब्दोपतापयोरिति निष्पन्नः स्वःशब्दः)। तदनन्तरं तस्मिन्‌ शब्दे तेजसि च लयं गते उत्कृष्टतरो देवः प्रकाशते। पूर्वोक्ते शब्दतेजसी तस्मिन् देवे विलीने भवतः। तस्मिन्नप्युत्तरे देवे लयं गते दिव्यः सूर्यो, नायं दृश्यमानः सूर्यः, प्रकाशते, यतो हि प्रतिक्षणमेतादृशा असंख्येयाः सूर्या अनन्तब्रह्माण्डकोटिनायकस्य नाटके उत्पद्यन्ते विलीयन्ते च। अस्मिन्नेव दिव्ये सूर्ये उत्तरदेवस्य लयः। ततः पश्चाद् उत्तमं ज्योतिरुद्गतं भवति। इदमेव ज्योतिः **'आख्यातोपयोगे[2]'**। इति सूत्रे भाष्ये **'ज्योतिर्वज्ज्ञानानि भवन्ति'** इत्यादिना समुट्टङ्कितम्। तेन ज्यौतिषा ज्ञानरश्मिद्वारा समाधिप्राप्तौ विश्वदर्शनसामर्थ्यमुदेति साधकानाम्। तथा चोक्तम्—**'उदु त्यं जातवेदसं देवं वहन्ति केतवो दृशे विश्वाय सूर्यम्'**[3] इति श्रुतौ त्यं वितर्क्यं जातं वेदो ज्ञानं यस्मात् तं जातवेदसं ज्ञानागारं सूर्यं केतवो रश्मय उद्वहन्ति समाधापयन्ति। किमर्थम्? विश्वाय दृशे विश्वं द्रष्टुम् इत्यर्थिकायाम्। अयमेव मोक्षः।

तथा च मोक्षविषयिण्यः श्रुतयः काश्चन प्रदर्श्यन्ते—**'चत्वारि'[4], 'उत त्वः'[5], 'सक्तुमिव'[6], 'चित्रं देवानाम्'[7], 'उद्वयम्'[8] 'उदु त्यम्'[9]** इतीमाः श्रुतयः सततमनुसन्धेया वैयाकरणैः। एतावदुक्तावपि किञ्चिदवशिष्यते तत् सर्वं विस्तरेण प्रतिमायां प्रतिपादयिष्यमाणमपि संक्षेपेणाशङ्क्य ब्रवीमि।

किं तदेव मोक्षस्वरूपं भवतां वैयाकरणानामप्यभिमतं यद्धि वेदान्तकल्पलतिकायां मधूसूदनसरस्वतीमहोदयैः प्रदर्शितम्? अत्रोच्यते—न हि तदेवास्माकं मोक्षस्वरूपमभिप्रेतम्। यतो ह्यस्माकं परमवैदिकानां मते—

---

१. वा० ५।३४। २. महाभा० १।४।१२८।
३. शु० य० ७।४१। ४. ऋ० सं० १०।१३।४।४५। ५. तदेव–१०।७१।४।
६. तदेव–१०।७१।२। ७. शु० य० ७।४२। ८. तदेव–२०।२१।
९. तदेव–७।१।

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति[1]॥**

इति श्रुत्या सायुज्येऽपि नहि मुक्तस्य पुरुषस्य परमात्मनि चिति वा विलयः; किन्तु बन्धनिर्मोकात् साम्येनावस्थितिः।

परमत्रापि किञ्चिद् विचार्यते। भगवन् यदि चित्स्वरूपैव परा, तर्हि एकेनाखण्डेन अभ्युपगतेन ज्ञानेन सर्वेष्टसिद्धौ ज्ञानस्य व्यक्तिः किमिति स्वीकार्या।

अत्रोच्यते—**'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'**[2] इति श्रुत्या यद्यपि शक्तिमत्पदार्थः कश्चनान्यः शक्तेरित्यायाति, तथापि **'राहोः शिरः'** इतिवत्तत्र षष्ठी उपपादनीया। न हि अस्माकं मते परायां शक्तौ स्वीकृतायाम् अन्तर्गडुना शक्त्याश्रयेणास्ति किंचित् प्रयोजनम्। सैव शक्तिरसंख्येयाः शक्तीः प्रसूते। एवं स्थितौ अंशांशिभावोऽपि पराया अस्या विविधायाः शक्तेरुद्भवे एव चकास्ति। मोक्षावस्थायामपि न हि विविधानां शक्तीनां विलयः स्वीक्रियते; किन्तु तासां शक्तीनां यथावज्ज्ञानावस्थैव मोक्षः। त्रिधा बन्धराहित्यस्य मोक्षशब्दार्थत्त्वात्।

अथ संक्षेपेण विभिन्नप्रकारैः पदार्थो निरूप्यते, तत्र संक्षेपेण स्फोटमुपस्थाप्य तत्संगत्या पदार्थानामुपन्यासः क्रियते।

**स्फोटायनः स्फोटस्य स्मर्ता**

तत्र भगवान् स्फोटायनः स्मर्ता, स हि स्फोटं प्रत्यक्षमपश्यत्। शाकटायनस्तु वैयाकरणः सर्वदा ध्यानमास्थितो व्याकरणतत्त्वमधिजगाम। यथोक्तम्—**'परोक्षे लिट्'**[3] इति सूत्रे भाष्ये **'अथवा भवति वै कश्चिज्जाग्रदपि वर्तमानकालं नोपलभते। तद्यथा वैयाकरणानां शाकटायनो रथमार्गे आसीनः शकटसार्थं यान्तं नोपलभते। किं पुनः कारणं जाग्रदपि वर्तमानकालं नोपलभते। मनसा संयुक्तानीन्द्रियाणि उपलब्धौ कारणानि भवन्ति, मनसोऽसान्निध्यात्'**[4] इति। एतादृशा एव वैयाकरणा ऋषिकल्पा अखण्डस्फोटं विभज्य शब्दसाधुत्वज्ञानौपयिकान् ग्रन्थान् निर्ममुः। परं सम्पूर्णस्याखण्डस्य स्फोटस्य ज्ञानं समाधिमन्तरा दुर्लभम्। तथापि व्याकरणागमानुसारं स्फोटो द्विविधो नित्यः, कार्यश्च। तत्रापि पिण्डब्रह्माण्डयोरैक्याद् नित्योऽपि स्फोटो द्विधा विभज्यते आन्तरो बाह्यश्चेति। तत्रान्तरस्य पिण्डस्थस्य ज्ञानेन ब्रह्माण्डव्यापकस्य बाह्यस्य ज्ञानं सञ्जायते। एकस्य बाह्यस्य स्फोटस्य प्रतिपादनेन आन्तरोऽपि तथा प्रतिपन्नो भवति। खट्वाया एकपार्श्ववानेनापरपार्श्ववानमिव। आन्तर एव बाह्यरूपेण स्वात्मानं प्रकाशयति।

---

१. ऋ० सं० १।१६४।२०।    २. श्वे० उ० ६।८।
३. अष्टा० ३।२।११५;    ४. महाभा०—तदेव।

**अधुना नित्यस्य तस्य स्वरूपपरामर्शः**

तत्र शब्दोच्चारणे द्वावर्थौ ज्ञानविषयौ भवतः। एकः स्फोटः, अपरश्च नादो ध्वनिर्वा। तत्र ध्वनिर्द्विविधः, प्राकृतो वैकृतश्च। तत्रापि स्फोटो व्यङ्ग्य इति हि नियमः। तत्र द्रुतादिवृत्तिकालस्य भेदो वैकृतध्वनिप्रयुक्तः। प्राकृतध्वनिकृतश्च ह्रस्वादिकालः। तथा चोक्तं भर्तृहरिणा स्वोपज्ञटीकायाम्—'**नादो हि प्राकृतः शब्दात्मनि प्रत्यस्यमानस्थितिरूपो भेदस्याग्रहणार्थं ह्रस्वदीर्घप्लुतकालभेदव्यवहारहेतुः। वैकृतस्तु नादो बाह्यद्रुतादिवृत्तिकालव्यवस्थां कल्पयति**'[1] इत्युक्तम्। एवं च नित्यानां स्थितौ सहकारिण्याः कालशक्तेर्व्यापारो न विद्यते। तथा चानित्या एव पदार्थाः कालशक्त्यानुगृहीताश्चिरमवतिष्ठन्ते। यदा च कालशक्तिः प्रतिकूला भवति, तदा ते शीघ्रं विनश्यन्ति। नित्येषु तु कालशक्तेर्व्यापारो नास्ति। स्वातन्त्र्यापरपर्याया कालशक्तिर्नहि नित्यस्य स्फोटस्य भेदं कर्तुं शक्नुयात्।

**स्फोटतत्त्वं जानतामेव सर्वे सर्वार्थवाचका इति ज्ञानम्**

अत्रेदं रहस्यम्—लोके यस्य कस्यचिद् वस्तुनो यदा प्रत्यक्षेणोपलब्धिर्भवति, तदा प्रत्यक्षविषयीभूतस्य पदार्थस्य यो ह्यपलब्धेः पूर्वकालो यश्चोपलब्धेः पश्चाद्भावी कालस्तयोर्द्वयोरवस्थयोर्ये वर्णपदवाक्यस्फोटाः सन्ति, तेषां प्रचिताप्रचितरूपाणां बुद्ध्यानुगम्यमानतत्त्वानां नास्ति कश्चन भेदः, स्वीयायां स्थितौ सदैकरूपेणावस्थानात्। तथा च लोकव्यवहारेणैव तत्र ह्रस्वत्वादिव्यवहारः, न तु स्फोटे कश्चन भेदलेशोऽस्ति, आकाशस्येव तस्य नित्यत्वात्। अयं हि स्फोटोऽखण्डो नित्यश्च। यथा एकस्याप्याकाशस्य घटादिभिरुपाधिभिस्तद्रूपेण प्रतीतिर्भिद्यते, तद्वदेकस्याप्यखण्डस्य नित्यस्य स्फोटस्य वर्णपदवाक्यादिपरिच्छेदकवशाद् भेदेन प्रत्ययो जायते। तथा च यस्य कस्यचिद् योगिनस्तादृशस्य स्फोटस्य प्रत्यक्षं भवति, तत्कृते एव '**सर्वे सर्वार्थवाचकाः**' इति ज्ञानमाविर्भवति।

**वीचितरङ्गन्यायकदम्बगोलकन्यायविमर्शः**

अनित्यत्वपक्षे तु स्थानकरणयोः संयोगविभागाभ्यां प्रथमं यः शब्दो ज्ञानगोचरीभवति, स स्फोट इत्युच्यते। तस्माद् जातास्तु सर्वासु दिक्षु ये वर्णश्रुतिं जनयन्ति, ते ध्वनय इत्युच्यन्ते। तत्र हि वीचितरङ्गन्यायेन शब्द उत्पद्यते, इत्येकः पक्षः। अस्मिन् पक्षे वातेनेरिता एका वीचिरुत्पद्यते, तदनन्तरं तयैव तरङ्गान्तरमिति तरङ्गपरम्परा कूलदेशमायाति। एवमेव भेरीदण्डसंयोगाद् वेणुदलविभागाद्वा जायमानः शब्दः असमवायिकारणतया शब्दान्तरं जनयतीति कृत्वा जायमाना शब्दपरम्परा श्रोत्रपथमवतरति। अस्मिन् पक्षे शब्दोत्पत्तिपक्षं केचन समर्थयन्ति।

---

१. वा० प० १।१०२—स्वोपज्ञटीकायाम्।

वस्तुतस्तु वीचितरङ्गन्यायस्य स्वरूपं न हि तैरवबुध्यते। यथा कदम्बगोलके ग्रन्थिदेशः सर्वासु दिक्षु केसरान् प्रसूते, तथैवाद्यः शब्दो दशसु दिक्षु बहून् शब्दानुत्पादयति तेऽप्यपरान् तेऽप्यपरान् इत्यनया रीत्या शब्दजशब्दपरम्परा व्यवतिष्ठते। परमियं पद्धतिर्न हि समीचीना। न हि कदम्बगोलके एकस्मात् केसरादन्यः केसर उत्पद्यते, ततश्चान्यस्ततश्चान्य इति केसरपरम्परोद्भवति, किन्तु एकस्मादेव ग्रन्थेर्बहवः केसरा उत्पद्यन्ते, ते च प्रत्येकं दशसु दिक्षु प्रसरन्ति, अनेकं श्रोत्रपथं च गच्छन्ति। नेयं रीतिः शब्दविषये संघटते। तत्र हि यदा प्रथमो नादः सञ्जातस्ततो वैकृतध्वनिरभूत्, ततश्चापरस्ततश्चान्य इति द्वयोर्नहि साम्यं परिदृश्यते। प्रत्युत वीचितरङ्गन्यायेनैव शब्दजशब्दन्यायस्य साम्यं विद्यते। यतो हि वीचितरङ्गन्यायेन सर्वदिक्कास्तरङ्गाः प्रत्येकस्मादुत्पद्यन्ते। यथा कस्मिंश्चित् सरसि निर्वातावसरे यदि एको लोष्टः प्रक्षिप्यते, तदा सर्वदिग्भागतस्तरङ्गा उत्पद्यन्ते, इत्ययमेव न्यायो युक्तो मे प्रतिभाति।

तथाचोक्तं वाक्यपदीये—

**यः संयोगविभागाभ्यां करणैरुपजन्यते।**
**स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः**[1] ॥ इति।

विस्तरस्तु पीठिकायां प्रतिमायां वा द्रष्टव्यः।

अत्रायं निर्गलितोऽर्थः—शब्दविषये वीचितरङ्गन्याय एव दृष्टान्तत्वे साधुः। यतो हि सरसि प्रक्षिप्तो लोष्टो जले परितः सर्वासु दिक्षु मण्डलं रचयन् तटे वर्तुलमेव तरङ्गात् तरङ्गान्तरं जनयति। कदम्बमुकुले तु ग्रन्थेरुद्भवन्तः केसरा न हि केसरान्तरमुत्पादयन्ति। अनया रीत्या केसरा इव यदि बहवः शब्दा एकदैवोत्पद्येरंस्तदा शब्दानां क्षणद्वयस्थायित्वात् तृतीयक्षणे शब्दान्तरानुत्पत्त्या तच्छब्दज्ञानं सर्वथाऽसम्भवि। एतदर्थमिमं दृष्टान्तं विहाय वीचितरङ्गन्याय एव दृष्टान्ततया ग्रहीतव्यः। शब्दो हि अणुपरिमाणत्वेनाभ्युपगतोऽपि वर्तुलमेव शब्दं जनयति, स च ततो महापरिमाणम्। पुनरपि स शब्दः शब्दान्तरमित्यनया रीत्या सर्वदिक्स्थितिकाः शब्दाः कर्णपथं गन्तुं प्रभविष्यन्ति।

**स्फोटस्य विभागः काल्पनिकः**

अनया रीत्या साधारण्येन शब्दस्वरूपेऽवगते व्यवहारमार्गे समासीनैरस्माभिः साधुशब्दज्ञानार्थं तु कश्चन यत्नो विधेय एवेति विचार्य स्वीयस्वीयपद्धत्या अपोद्धारपदार्थरीत्या स्फोटविभागं ते चक्रुस्तैर्थिकाः। तेषु कश्चन चतुष्टयी शब्दानां प्रवृत्तिः जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दाश्चेत्येवमभिमत्य चतुर्भिः प्रकारैः शब्दानां प्रविभागमकार्षीत्।

---

१. वा० प० १।१०२।

अपरश्च न सन्ति यदृच्छाशब्दा इति सिद्धान्तं स्थिरीकृत्य सर्वाणि नामानि धातुजानीति मनुते । एतन्मते त्रयी शब्दानां प्रवृत्तिः । तथा च वाक्यपदीये—

**द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधाऽपि वा ।**
**अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत्[1] ॥**

इत्यनेन नामाख्यातभेदेन पदद्वैविध्यमप्युपपादितम् ।

उपसर्गनिपातौ पृथक्कृत्य सङ्कलनया पदानां चातुर्विध्यं च स्वीकृतम् । कर्मप्रवचनीयं च ततो विभज्य पाञ्चविध्यमपि तेषां व्यवस्थापितम् । अनया रीत्या पदार्थोपक्षेपोऽपि वाक्यपदीये—

**अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः ।**
**अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः[2] ॥**

इत्यादिभिः कारिकाभिः कृतः ।

तत्र प्रथमं नामाख्यातभेदेन वाक्ये द्वैविध्यमेव पदानां स्वीकृत्य व्याकरणप्रक्रियां प्रदर्शयामि । एवं द्विधाऽखण्डस्फोटस्य विभागे नामविषये समस्तानि पदानि बृहन्ति विभक्तानि विधायार्थभेदं च समालोच्य तत्तत्समासाख्याभेदभिन्नानव्ययीभावादिसमासानुपस्थापयामासुस्ते शाब्दिकाः । तदनन्तरं तदवान्तरभूतेषु शब्देषु तद्धितस्त्रीप्रत्ययान्तान् शब्दान् राशीकृत्य तत्र प्रकृतिप्रत्ययाद्यवान्तरभेदैर्लाघवेन साधुत्वज्ञानार्थं पदानि व्यभजंस्ते । तत्रापि कांश्चन शब्दान् व्युत्पन्नान्, कांश्चन चाव्युत्पन्नान् कल्पयित्वा केचनाचार्या राशिद्वयं विधाय व्युत्पन्नान् शब्दान् कृदन्तराशौ प्राक्षिपन्, अव्युत्पन्नांस्तु प्रकृतिप्रत्ययशून्यत्वाद् यदृच्छाशब्दकोटौ स्थापयामासुः ।

अपरे त्वाचार्या यदृच्छाशब्देष्वपि धातुरूपं प्रकल्प्य सर्वाणि नामानि धातुजानीति नीत्या उणादीन् प्रत्ययान् तत्प्रकृतिभूतान् धातूंश्चानुमायैकामेव कोटिं प्राचीक्लृपन् ।

एवमेवाख्यातभिन्नस्थले सुबन्तानि पदानि, आख्यातस्थले तु तिङन्तानि पदानि ते कल्पयामासुः । सुपां प्रकृतिभूतानि नामानि तिङां प्रकृतिभूतान् धातूंश्च पृथक् पृथक् ते साधयामासुः ।

**अष्टानां पदार्थानां स्वरूपम्**

साम्प्रतं वाक्यपदीयानुसारं पूर्वमुपक्षिप्तान् पदार्थान् स्पष्टीकरोमि ।

**अपोद्धारपदार्था[3] ये ये चार्थाः स्थितलक्षणाः ।**
**अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः[4] ॥**

---

१. वा० प० ३।१।१ । २. तदेव—१।२४ ।

३. अपोद्ध्रियन्ते इति अपोद्धाराः पदार्थाश्चेति अपोद्धृतानां पृथक् कृतानां वा पदानामर्थाः । अपोद्धारेण कल्पिता वा अर्थाः, इति शाकपार्थिवादिः । अपोद्धारसम्बन्धिनो वा इति षष्ठीसमासः । अपोद्धारो विभागः । ४. वा० प० १।२४ ।

**कार्यकारणभावेन योग्यभावेन च स्थिताः ।**
**धर्मे च प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु ॥**
**ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपवर्णिताः ।**
**स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम्[1] ॥** इति ।

एतैरधस्तादुक्तैः श्लोकैरष्टौ पदार्थाः क्रोडीकृताः सन्ति । तत्र अपोद्धारपदार्थो वृक्षादिः । स्थितलक्षणपदार्थो वाक्यार्थः, नमस्यति मुण्डयत्यादिरिति द्विविधोऽर्थः । शब्दोऽपि द्विविधः, अन्वाख्येयः शब्दः पदरूपो वाक्यरूपो वा । प्रतिपादकः शब्दः प्रकृतिप्रत्ययादिरूपः, भू ति, भू अ ति इत्येवंरूपः । सम्बन्धोऽपि द्विविधः—कार्यकारणभावरूपो योग्यतारूपोऽपि । तथा चोक्तम्—'**कार्यकारणभावेन अर्थाकारनिर्भासमात्रानुगतस्य प्रत्यस्य अर्थे प्रत्यस्तरूपस्य अर्थत्वेन अध्यवसाये तस्यार्थात्मनः शब्दो निमित्तम् । तथार्थावग्रहदर्शनं सोऽयम् इति शब्दार्थयोः सम्बन्धप्रसिद्धेर्नादाभिव्यक्तस्यान्तःकरणसन्निवेशिनः शब्दस्य प्रवृत्तौ कारणम्**[2]' इति टीकायां भर्तृहरिणा ।

एवं च—

**शब्दः कारणमर्थस्य स हि तेनोपजन्यते ।**
**तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते[3] ॥**

इति कारिकासङ्गतोऽयमर्थः । तस्यां कारिकायां श्रोतृबुद्ध्युपारूढस्यार्थस्य शब्दः कारणं जनकत्वात् ।

तथा चान्यस्माद् वक्तृबुद्धिनिवेशिनोऽर्थात् कारणभूतात् शब्दः श्रुतिविषयमनुप्राप्तः प्रतीयत इत्यर्थोऽपि शब्दकारणम् । एवं चोभयथा कार्यकारणभाववर्णनाद् वैलक्षण्येन शब्दार्थयोरभेदेन सम्बन्धोऽध्यासलक्षोऽपि प्रतिपादितो भवति, इत्यर्थिकया कारिकया शब्दो निमित्तम् इत्यन्तेन ग्रन्थेन शब्दस्य कारणत्वम् इत्येवं कार्यकारणभाव-

---

१. वा० प० १।२५–२६ । २. तदेव–१।२६–स्वोपज्ञटीकायाम् ।

३. अत्र स्थितलक्षणाः पदार्थाः वाक्यार्था वा मतभेदेन । स्थितं लक्षणमेषां स्वरूपस्य अप्रच्युतेः । अर्थात् यत्र पदार्थज्ञाने प्रकृतिप्रत्ययार्थज्ञानमुपायस्तत्र प्रकृतिप्रत्ययार्थानां तिरोधानं पदार्थस्यैव प्राधान्यात् ।

यत्र च वाक्यार्थज्ञाने प्रत्ययार्थज्ञानमुपायस्तत्र पदार्थानां वाक्यार्थज्ञाने तिरोधानमिति स्थितलक्षणा इत्यस्य मतभेदेन पदार्था वाक्यार्था वा इत्यर्थद्वयम् । मया पूर्वमखण्डस्य स्फोटस्य विभागः प्रदर्शितः । वाक्यपदीयटीकायां तु—'तानि चैकपदसरूपाणि आक्षिप्तक्रियापदानि वाक्यानीति व्याख्यायन्ते । तथा पूर्वपदार्थः, उत्तरपदार्थः, अन्यपदार्थः, प्रातिपदिकार्थः, धात्वर्थः, प्रत्ययार्थ इत्येकपदवाच्योऽपि अनियतावधिर्बहुधा प्रविभज्य कैश्चित् कथञ्चिदपोद्ध्रियते ।' (वाक्य० का० १ श्लो० २४) इत्युक्तम् ।

लक्षणं सम्बन्धमभिधाय अत्रैवाभेदलक्षणमन्तर्भावयिष्यन्नाह तथेति। अर्थावग्रहः= अर्थपरिच्छेदः, तदात्मकं दर्शनम् अर्थाकारः प्रत्ययः। तत्रार्थः कारणं शब्दः कार्यम् इति कार्यकारणभावः। यतोऽर्थाकाराया बुद्धेः शब्दाकारा बुद्धिरुत्पद्यन्ते, इत्यर्थकेन तथार्थावग्रहदर्शनमित्यादिसन्दर्भः सङ्गतो भवति। अनया रीत्या कार्यकारणभावलक्षणः अध्यासलक्षणश्चेति सम्बन्धद्वयं सङ्घटते। एवं च षट् पदार्था अधस्तनेन ग्रन्थेन समुट्टङ्किताः। एषां साधूनामर्थसम्बद्धानां शब्दानां प्रयोगेण धर्माभिव्यक्तिः, ज्ञानं च भवति। तथा चास्मिन् शास्त्रे अष्टौ पदार्थाः शास्त्रशरीरं सम्पद्यन्ते।

ते च पूर्वमुक्ता अप्यत्र संक्षेपेण प्रदर्श्यन्ते—१. अपोद्धारपदार्थो वृक्षादिः, २. स्थितलक्षणपदार्थो वाक्यार्थरूपो मुण्डयत्यादिरिति, इति द्विविधोऽर्थः। शब्दोऽपि द्विविधः, ३. अन्वाख्येयः शब्दः पदरूपो वाक्यरूपो वा, ४. प्रतिपादकः शब्दः प्रकृति-प्रत्यादिरूपः, भू ति, भू अ ति इत्येवंरूपः। सम्बन्धोऽपि द्विविधः, २. कार्यकारणभाव-रूपः, ६. योग्यतारूपो वा, ७. एषां शब्दानां प्रयोगेण धर्माभिव्यक्तिः, ८. ज्ञानं चेति।

**अपोद्धृतार्थस्वरूपम्**

अस्मिन् प्रकरणेऽधस्तादपोद्धारपदार्थो मया प्रदर्शितः। तत्र पदापोद्धारे प्रदर्शिते तदर्थस्यापोद्धृतस्य स्वरूपं प्रदर्श्यते।

तथा हि सर्वेषामपि शब्दानां पदरूपाणां जातिवादिमते जातिरेव पदार्थो न द्रव्यम्। द्रव्यवादिमते तु द्रव्यमेव न जातिः। यद्वा जातिविशिष्टं द्रव्यम्, द्रव्यविशिष्टा जातिर्वा पदार्थः। यद्वा प्राधान्येनैव भिन्नविषयतया पाणिनिदर्शने जातिद्रव्ये शब्देना-भिधीयेते। अत एव मूले कारिकायां पदार्थौ इत्युक्तम्।

उक्तं च महाभाष्ये पस्पशाह्निके—'**किं पुनराकृतिः पदार्थ आहोस्विद् द्रव्यम्। उभयमित्याह। कथं ज्ञायते ? उभयथा ह्याचार्येण सूत्राणि पठितानि। आकृतिं पदार्थं मत्वा 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्**[1]' इत्युच्यते। द्रव्यं पदार्थं मत्वा '**सरूपाणाम्**[2]' इत्येकशेष आरभ्यते इत्युक्तम्।

एते पक्षा वाक्यपदीये—

> **पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव वा।**
> **पदार्थौ सर्वशब्दानां नित्यावेवोपवर्णितौ**[3] ॥

इत्यनया कारिकया समुट्टङ्किताः सन्ति।

**वाजप्यायनदर्शने जातिः**

तत्र वाजप्यायनदर्शने गौरित्यत्र जातिरेव वाच्यतयोपतिष्ठते, सामर्थ्यात्तु द्रव्यस्य प्रतीतिर्भवति। आख्यातस्थलेऽपि क्रियाजातिरेवाभिधीयते। गुणशब्दानामपि

---

१. महाभाष्यम्–१।२।५८। २. अष्टा० १।२।६४। ३. वा० प० ३।१।२।

शुक्लादीनां गुणजातिर्वाच्या। संज्ञाशब्दानामपि जातिवाचित्वम् इति सर्वत्रैव जातिपदार्थव्याप्तिः सिध्यति। एवमेव जातिपदार्थवादिनये परमार्थसत्ये जातिर्महासत्ताख्या परब्रह्मस्वभावा, तस्या एव गोत्वादिजातिभेदेन व्यवहारः। सर्वभावेषु सद्रूपं सामान्यमनुगतम्, अभावस्यापि बुद्ध्याकारेण निरूपणात्। महासत्तयाऽनया अवियोगात् प्रातिपदिकमात्रवाच्या सत्ता। तदुक्तं **'प्रातिपदिकार्थः सत्तेति'**[1]।

धातुभिरपि सत्तैवाभिधीयते। साधनपरिस्पन्दवशात् क्रियाणां व्यक्तिस्थानीयानां विशेषशब्दवाच्यानां पौर्वापर्ये तद्गतापि जातिस्तथात्वेन प्रदिभासते। साधनसम्पर्कात्तु सत्तैव सत्त्वं द्रव्यमित्युच्यत इति प्रातिपदिकस्थले सिद्धविवर्तः, क्रियास्थले तु साध्यविवर्त इति द्विधा विवर्तः पूर्वमपि प्रदर्शितः।

यद्यपि द्रव्यपदार्थेऽपि ब्रह्मद्रव्यस्याभिधानमुपाधिभेदभिन्नस्यास्त्येव, तथापि तात्पर्यभेदादवस्थाभेदः। जातिपदार्थे सर्वत्रान्वयिरूपं जात्यात्मना ब्रह्म विवक्षितम्। द्रव्यपदार्थनये तु परिनिष्ठितरूपं परमार्थतयेति दर्शनविकल्पाश्रयम्। एवं च पक्षद्वयेऽप्येकपक्षीभावरूपः सिद्धान्तः। परमार्थदृष्ट्याऽत्र सर्वपार्षदत्वात् पुनरस्य शास्त्रस्य दर्शनान्तरोपन्यासः।

अत्रायं भावः—महाभाष्ये हि **'सर्ववेदपारिषदं हीदं शास्त्रं तत्र नैकः पन्थाः शक्य आस्थातुम्'**[2] इत्युक्त्या प्रातिशाख्यानि यथा तत्तद्वेदानां कृते तत्तन्महर्षिभिः प्रणीतानि, तथैव रीत्याऽस्मिन् व्याकरणे पदार्थविषयेऽपि तत्तद्दर्शनप्रणेतॄणामभिमताः पदार्था अपि तैस्तै रूपैः प्रतिपादिताः सन्ति। वस्तुतस्तु संग्रहे व्याडिपूर्वभाविभिर्महर्षिभिर्दृष्टाः पदार्थाः प्राञ्जलं प्रतिपादिता आसन्। संग्रहमूलभूतेषु दर्शनग्रन्थेषु क्षयं नीतेषु साम्प्रतमुपलभ्यमानानि दर्शनानि व्याडेरर्वाग्भाविनो महात्मानः प्राणैषुः।

तथा च वाक्यपदीये—

**सैव भावविकारेषु षडवस्थाः प्रपद्यते।**
**क्रमेण शक्तिभिस्ताभिरेवं प्रत्यवभासते**[3] **॥**

इत्यादिना निरुक्तकाररीत्या जन्मादिरूपतया तस्याः परिणामो विवर्तो वा। वाक्यपदीयकारमते विवर्तः परिणामो वेत्यत्र वर्तते महान् विवादः।

वस्तुतस्तु परिणाम एव विवर्तपदेनाभिधीयते। हेलाराजादिमते तु विवर्तवाद एव वेदान्तिभिरभिमतः प्रसिध्यति।

ननु महाप्रलयेऽनित्यानां सर्वेषां विनाशादाश्रयाभावे कथं जातयोऽवतिष्ठेरन् इति चेत् न, महाप्रलयेऽपि आत्यन्तिकलयस्यास्वीकारात्। यद्वा ब्रह्माण्डानामनन्तत्वाद्

---

१. काशिका—२।३।४६। २. महाभा० २।१।५८। ३. वा० प० ३।१।३६।

एकस्मिन् ब्रह्माण्डे विनष्टेऽपि ब्रह्माण्डान्तरसद्भावस्य युक्तिसिद्धत्वाद् युगपत्प्रलयो नास्ति। तथा चाहुः—**'अण्डानामीदृशानां तु परिसंख्या न विद्यते'**[1]**।'**

यद्वा प्रलयेऽपि निराश्रया एव जातयस्तिष्ठन्ति।

किञ्च बौद्धपदार्थवादिनामस्माकं बौद्धघटस्य सत्त्वात् तदाश्रयत्वं जातीनामविरुद्धम्।

**'सरूपसूत्र'**[2] भाष्ये जातिं पदार्थं वार्त्तिककारो बहुभिर्हेतुभिरस्थापयत्। तत्र प्रथमं **'प्रख्याविशेषाद्'** इत्यनेन जातिरेव बोधविषयो भवतीति प्रत्यक्षं प्रमाणं समुपन्यस्तम्। न हि गौरित्युक्ते विशिष्टा शुक्ला कपिला वा गौः प्रतीयते। तथा च विशेषानवधारणात् सामान्यस्यावसायः। एवं चात्रैव सामान्यस्योपस्थितौ **'ज्ञायते चैकोपदिष्टम्'**[3] इत्यनेनानुमानमपि तदुपोद्बलकमुक्तम्। तथा चोक्तं कैयटे 'प्रख्याविशेषादित्यनेन प्रत्यक्षं जात्यालम्बनं प्रमाणमुपन्यस्तम्। ततो विप्रतिपन्नप्रतिपादनायानुमानमिह जातिसद्भावे **'ज्ञायते चैकोपदिष्टम्'**[4] इत्यनेनोक्तम्। देशकालावस्थापिण्डान्तरेषु अबाधितप्रत्यभिज्ञाप्रत्ययोदयान्यथानुपपत्त्या सामान्यसद्भावोऽनुमीयत इत्यर्थ इति।

**अनुमानप्रयोगस्त्वित्थम्**

विमतप्रत्ययो जातिविषयको देशादिभेदेऽपि अबाधितैकाकारप्रत्ययत्वात् सम्मतवदिति। गौरित्युक्ते अव्यपवर्गस्य अविशेषस्य प्रतीतेर्मन्यामहे जातिरेव प्रतीयत इति। तथा च ब्राह्मणो न हन्तव्य इति स्मृतिकारवचनमपि तत्र चरितार्थं भवति। तथा अव्यपवर्गगतिरभ्रान्ता स्मृतिकाराणामपि तथैव व्यवहारात्। अनया रीत्या आकृतिः पदार्थः संक्षेपेण सिद्धान्तितः।

किञ्च **'द्रव्याभिधाने ह्याकृत्यसंप्रत्ययः'**[5] तथा च **'तत्रासर्वद्रव्यावगतिः' 'चोदनायां चैकस्योपाधिवृत्तेः'** इत्यनेन च जातिवादो वार्त्तिककृतैतावता सिद्धान्तितः। भाष्यकारस्तु **'एकशेषस्त्वया वक्तव्यः। त्वयापि तर्हि द्विवचनबहुवचनानि साध्यानि'** इत्यनेन पक्षद्वयमभ्यमन्यत।

निःसामान्यानि सामान्यानीति तार्किकदर्शनं वैयाकरणैर्न नियोगत आस्थेयम्। कार्यान्नीयमाना हि तेषां पदार्था इति सामान्येष्वपि सामान्यमस्ति। अभावाश्चत्वार इत्यत्रापि निरुपाख्यत्वं सामान्यं कल्पनीयम्।

**द्रव्यं पदार्थ इति पक्षो व्याडेः**

सरूपसूत्रे भाष्ये **'द्रव्याभिधानं व्याडिः'** इत्यनेन व्याडिमते द्रव्यं पदार्थः। तथा च तन्मते अर्थक्रियायां द्रव्यमेवोपयुज्यते इति तदेव प्रवर्तकमर्थिनाम्। अतः शब्देन

---

१. वा० प०—३।१।४३।　　२. अष्टा० १।२।६४।
३. अष्टा० १।२।६४–वा० ३६।　　४. तदेव–वा० ३८।　　५. तदेव–वा० ४२।

तदेवोच्यते। अनभिधीयमाना जातिरवच्छेदिका गुडशब्दे माधुर्यादय इवेति द्रव्यवादिनां दर्शनम्। द्रव्यं च द्विविधं पारमार्थिकं सांव्यावहारिकं च। सांव्यावहारिकेण च द्रव्येण व्याडिदर्शने सर्वे शब्दा द्रव्याभिधायिनो भवन्ति। अतः सांव्यावहारिकमेव द्रव्यमत्र निरूपणीयम्। **'सिद्धे शब्दार्थसंबन्धे[1]'** इत्यत्र **'द्रव्यं नित्यम्, आकृतिरन्या च अन्या च भवतीति[2]'** वदता महाभाष्यकारेण द्रव्यस्य नित्यत्वं सूचितम्। भाष्यानुसारेण विकार-भेदेऽपि नित्यत्वं विवक्षितमेवेति सर्वत्र द्रव्यव्याप्तिः।

तथा चोक्तं वाक्यपदीयेऽपि—

**सत्यं वस्तु तदाकारैरसत्यैरवधार्यते।**
**असत्योपाधिभिः शब्दैः सत्यमेवाभिधीयते[3]**॥ इति।

एतन्मते जातिर्न तावद् द्रव्येषु व्यासज्यवृत्तिः एकाश्रयनाशेऽप्रतीत्यापत्तेः, किञ्च गामालभेतेत्यादिनोदनासु सर्वद्रव्यालम्भापत्तिः। प्रत्येकसमाप्तौ तु द्रव्यान्तरे तदनापत्तिस्तत्रापि सत्त्वे एका जातिरिति प्रतिज्ञाहानिः। तस्मात् तत्तत्स्थानाद्युप-लक्षितमधिष्ठानचैतन्यमेव द्रव्यमिति नानन्त्यव्यभिचाराविति तत्तात्पर्यम्। उपरिष्टाच्च द्रव्यपदार्थसाधकानि वार्त्तिकानि भगवता पतञ्जलिना समुपन्यस्तानि[4]। तानि यथा*— १. **'तथा च लिङ्गवचनसिद्धिः'**। २. **'चोदनासु तस्यारम्भात्'** (वा० ४७)। ३. **'न चैकमनेकादिकरणस्थं युगपत्'** (वा० ४८)। ४. **'विनाशे प्रादुर्भावे च सर्वं तथा स्यात्'** (वा० ४९)। ५. **'अस्ति च वैरूप्यम्'** (वा० ५०)। ६. **'तथा च विग्रहः'** (वा० ५१)। ७. **'व्यर्थेषु मुक्तसंशयम्'** (वा० ५२)।

१. महाभा० पस्पशाह्निकम्। २. तदेव।
३. वा० प० ३।२।२। ४. महाभा० १।२।४६।

* १—आकृतौ पदार्थे न हि तत्र लिङ्गानि वचनानि च भासन्ते। व्यक्तावेव तेषां सत्त्वात्। तथा च ब्राह्मणी, ब्राह्मणः, ब्राह्मणौ, ब्राह्मणा इत्यत्र लिङ्गवचनसिद्धिः।

२—आकृतिवादिपक्षे शब्देनाकृतिश्चोद्यते, द्रव्ये तु कार्यं प्रवर्तते। अयुक्तं चैतत्। न ह्यन्य-चोदनेऽन्यस्य कार्ये क्रियमाणे यथोक्तं कृतं भवति। तस्माद् द्रव्यमेव शब्देनोच्यते इति न्याय्यम्। आकृतौ पदार्थे तु कर्मसंबन्धित्वेन आकृतौ बुद्धायां न हि तत्र क्रयो बन्धनम्, आलम्भनं वा भवेत्। अतो हि द्रव्यमेव पदार्थः।

३—न ह्येका जातिः अनेकद्रव्यगता भवितुमर्हति। न ह्येको देवदत्तो युगपत् स्रुघ्ने भवति, मथुरायां च। तथा च सत्प्रतिपक्षसंभवादत्रादित्यदृष्टान्तो न युज्यते।

४—श्वा मृत इति अभिव्यञ्जकविनाशे जाते जातेस्तिरोभावात् पिण्डान्तरे श्वा इति प्रत्ययो न स्यात्। यथा शतप्रत्यये एकापाये शतज्ञानं न भवति। यद्वा आश्रयापाये आश्रितस्या-प्यपायः। अवयवापाये अवयविन इवेति जातेर्विनाशप्रसङ्गः।

५—गौश्च खण्डो गौश्च मुण्ड इत्येकस्मिन् तत्तच्छब्दप्रतिपाद्ये विरुद्धधर्मोपपत्तेरभावाद् द्रव्यमेव पदार्थः।

६—गौश्च गौश्च गौश्च गाव इत्यत्र एकार्थत्वे पर्यायाणामिव सहप्रयोगो न स्यात्।
७—विजातीयानेकार्थसरूपशब्देषु मुक्तसंशयम् एकशेषकरणम्।

एताभिर्वार्त्तिकोक्तिभिर्जात्यभावो व्याडिमतेनोक्तः। ततश्च **'लिङ्गवचनसिद्धिर्गुणविवक्षानित्यत्वात्[1]'** इत्यादिभिर्वार्त्तिकैर्जातिवादो व्यवस्थापितः।

**द्वयोर्मतयोर्न विरोधः**

किञ्च **'न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य वा आकृतिर्न पदार्थः। उभयोरुभयं पदार्थः कस्यचित् किञ्चित् प्रधानभूतम्, किञ्चिद् गुणभूतम्। आकृतिपदार्थकस्य आकृतिः प्रधानभूता, द्रव्यं गुणभूतम्, द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतम्, आकृतिर्गुणभूता[2]'** इति भाष्यबलेन उभे अपि मते युक्ते एव। अनयोरुभयोर्मतयोर्जातिवादः पूर्वं समुपस्थापितः। एतत्प्रघट्टके तु पारमार्थिकं द्रव्यं निरूपितम्। **'आत्मा वस्तु स्वभावश्च[3]'** इति कारिकया आत्मशब्देन तदेव द्रव्यं तत्तच्छब्दैरुच्यते। आत्मैव हि उपाधिभेदभिन्नं प्रतिभासमानं द्रव्यं पदानामर्थ इति अद्वैतवादिभिरभ्युपगम्यते इति तट्टीकायां हेलाराजः।

● ● ●

---

१. महाभा० १।२।४६। २. तदेव—पृ० २४५। ३. वा० प० ३।२।१।

# शब्दार्थसम्बन्धनिरूपणाध्यायः

**सम्बन्धविमर्शः, वाच्यवाचकभावः, कार्यकारणभावश्च**

एतावता **जातिव्यक्तिदर्शनभेदेन** शब्दार्थं व्यवस्थाप्य शब्देनार्थस्याभिधाने सम्बन्धो हेतुरिति साधयिष्यते। सम्बन्धमन्तरा सर्वं सर्वेण प्रत्याय्येत, एतदर्थं स स्वीकार्यः। तथा हि प्रयोगेणाभिज्वलितैः शब्दैस्त्रितयमवगम्यते। स्वीयं रूपमर्थश्च फलसाधनः प्रयोक्तुरभिप्रायश्च। न चैतत् सम्बन्धाभावे संघटते, एतदर्थं शब्दार्थयोः स्वाभाविकः संबन्धो न तु सामयिकः।

अत एव—

**ज्ञानं प्रयोक्तुरर्थश्च स्वरूपं च प्रतीयते।**
**शब्दैरुच्चारितैस्तेषां संबन्धः समवस्थितः[1]॥**

इति कारिकायां **'समवस्थितः'** इत्युक्तम्।

तत्र अर्थस्वरूपाभ्यां शब्दस्य वाच्यवाचकभावः संबन्धः, प्रयोक्त्रभिप्रायेण तु कार्यकारणभावः। ननु वाच्यवाचकभावः संबन्धः प्रस्तुतस्तत्र कः प्रसङ्गो ज्ञान-स्वरूपयोरिति चेत्, न, सर्वपार्षदं पुनरिदं शास्त्रम् इति ये बाह्यस्यार्थस्य वाच्यत्वं नेच्छन्ति, तन्मतोपस्कारार्थं वक्त्रभिप्रायारूढस्यैव शब्दार्थत्वे कार्यकारणभावमाह। तथा च **'शब्दः कारणम्[2]'** इत्युक्त्या शब्दार्थयोः कार्यकारणभावः संबन्धः **'गामुच्चारय', 'गां बधान'** इत्युक्त्या च परस्परमध्यासश्च संबन्ध इति। अत एव **'द्विविधः सम्बन्धः पदार्थे व्यवतिष्ठते[3]'** इति हेलाराजेनोक्तम्।

**अध्यासश्च सम्बन्धः तादात्म्यम्**

किञ्च **'ज्योतिर्वज् ज्ञानानि भवन्ति'** इति **'आख्यातोपयोगे[4]'** इति सूत्रस्थभाष्य-प्रामाण्याद् ज्ञानशब्दप्रदीपरूपास्त्रयः प्रकाशाः सिध्यन्ति। तथा च प्रकाशा येनैव प्रकारेण परं प्रकाशयन्ति, तेनैव प्रकारेणात्मानमपि प्रकाशयन्ति। तथा सति ज्ञानमर्थं प्रकाशयदात्मानमपि प्रकाशयति। एवं प्रदीपोऽन्यरूपं प्रकाशयन् आत्मरूपमपि प्रकाश-यति। तथा शब्दोऽपि वाचकोऽर्थमभिधीयमानतया प्रकाशयन् सर्वस्यापि प्रत्ययस्य शब्दानुविद्धत्वादात्मानमभिधेयतयैव प्रकाशयति। तथा च अयं गौरयमर्थ इति शब्दार्थ-योरभेदेनावभासनाद् गोशब्दः स्वरूपमभिदधदेव अर्थमप्यभिधत्ते।

---

१. वा० प० ३।३।१।
२. वा० प० ३।३।३२।
३. तदेव–३।३।१–हेलाराजव्याख्या।
४. अष्टा० १।४।२९।

ननु वर्णानामानुपूर्व्येणावस्थितिर्नहि प्रतीयमानेऽर्थे समुपलभ्यते इति चेत्, सत्यम्, नास्माभिर्वैखरीरूपः शब्दो वाचकतयाऽभ्युपगम्यते; किन्तु योऽयं चिच्छक्तेर्वागात्मा व्यापार; शब्दापरपर्यायोऽश्रूयमाणोऽपि उपांशुप्रयोगे शब्द इति व्यवह्रियते। तथा च नास्माभिः साम्प्रतं पराया वाचः स्वरूपेणावस्थितायाः किञ्चित् प्रयोजनं साध्यते, नापि उद्भिद्यमानावस्थायां पश्यन्तीरूपायामपि शब्दार्थयोर्विभागेनावस्थानम्; किन्तु प्राणवृत्त्यनुप्राणितमनोभूमिसमवलम्बितनिजस्वभावस्य वाच्यवाचकरूपभिन्नशाखाद्वयावलम्बिनः समुपस्थितौ मध्यमावस्थायां परामर्शनात्मा वाचकः शब्दो भिन्नचैतन्योद्रेकात्मिकां परावस्थामभजन्नेव स्वरूपवाच्यमुखेन तत्संभिन्नमर्थं परामृशति, सामानाधिकरण्येन गौरयमर्थ इति। तथा च स वाच्योऽर्थो वाचकाध्यासवानुच्यते।

अयं च सम्बन्धः **'सिद्धे शब्दार्थसम्बन्धे[1]'** इति वार्तिकेनैव सूचितः। तत्र हि कैयटः—**'नित्यः शब्दो जातिस्फोटलक्षणो व्यक्तिस्फोटलक्षणो वा। कार्यशब्दिकानामपि मते प्रवाहनित्यतयाऽर्थस्यापि जातिलक्षणस्य नित्यत्वम्'** इति।

द्रव्यपक्षेऽपि सर्वशब्दानामसत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं वाच्यमिति नित्यता, प्रवाहनित्यतया वा सम्बन्धस्यापि व्यवहारपरम्परयाऽनादित्वान्नित्यता। शब्दार्थयोः सम्बन्धश्च शक्तिरूपं तादात्म्यमेवेति च उद्द्योते।

लघुमञ्जूषायां तु तादात्म्यमूलकस्य सम्बन्धत्वेऽर्थभेदात्तत्तादात्म्यापन्नेषु शब्देषु भेदौचित्येन अर्थभेदाच्छब्दभेद इत्युपपद्यते। समानाकारत्वमात्रेण तु एकोऽयं शब्दो नानार्थ इति व्यवहारः। तस्य (तादात्म्यस्य) निरूपकाश्रयभेदाभ्यां भेद इत्येके।

अन्ये तु एकत्रैवाम्रफले रूपरसगन्धादीनां भिन्नानां तादात्म्यवत्, एकत्रैव शब्देऽनेकार्थनिरूपितानि भिन्नानि तादात्म्यानि इत्याहुः। परे तु निरूपकभेदेऽपि तादात्म्यमेकमेवेति शक्त्यैक्यमेवेत्याहुः[2]' इति।

**तादात्म्यविषये पक्षत्रयम्**

तथा च **'हलोऽनन्तराः संयोगः[3]'**, **'सरूपाणामेकशेष एकविभक्तौ[4]'** इति सूत्रस्थभाष्याभ्यां सूचितं पक्षत्रयम्। तदार्थभेदात्तादात्म्यभेदः शब्दभेदश्चेत्येकः। अर्थभेदेऽपि शब्दैक्यं तादात्म्यभेदश्चेति द्वितीयः। अर्थभेदेऽपि तादात्म्यैक्यं शब्दैक्यं चेति तृतीयः। अत्र शब्दैक्यपक्षे शक्यतावच्छेदकभेदेऽपि शक्तिरेकैवेत्येकः पक्षः। तत्रैव भाष्ये 'अस्त्येव शालासमुदाये वर्तते। अस्ति वाटपरिक्षेपे वर्तते[5]' इत्यत्रास्तिक्रियाया वृत्तिरूपार्थबोधिका वर्तत इति वर्तिक्रिया कर्त्री इति भाष्ये सर्वार्थनिरूपितवृत्तीनाम् अस्तिकर्त्रर्थको वर्तते इत्येकशब्दबोधकत्वेनाभेदबोधनादेकशक्तित्वपक्षस्य भाष्यसम्म-

१. महाभा० पस्पशाह्निकम्। २. ल० म० पृ० ५४–५६।
३. अष्टा० १।१।७। ४. तदेव–१।२।६४। ५. महाभा० १, पृ० ५९।

तत्वात् शक्तिभेदकल्पने गौरवाच्चायमेव पक्षः सिद्धान्तिसम्मत इति लघुमञ्जूषा-टीकायां प्रभायां सभापत्युपाध्यायाः ।

वाक्यपदीये तु—

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।**
**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा[1] ॥**

इति कारिकायां योग्यतैव सम्बन्धः, सैव शक्तिरिति निर्णीतम् । तथा च समवायादि-निमित्तानपेक्षयैव उच्चरितमात्राच्छब्दादर्थोत्पत्तेरकृत्रिमा शक्तिरवसीयते ।

किञ्च, मञ्जूषायाम् इच्छाया जनकत्वस्य वोभयवृत्तित्वाभावः । इच्छाविषय-बोधीयविषयतायामिच्छाश्रयतानियामकत्वाभावात् **'सम्बन्धो हि सम्बन्धिभ्यां भिन्नः, उभयाश्रितः, इति द्विष्ठः सम्बन्ध इति च विशिष्टबुद्धिनियामकः'** इति चाभियुक्त-व्यवहारात् । न हि तत्र विषय इच्छावान् इत्यादिव्यवहारोऽस्ति । **'जनकता शक्तिः'** इति पक्षे बोधजनकतायाः पदेऽर्थे च सत्त्वेऽपि तयोः परस्परं सम्बन्धस्य दुरुपपादत्वात् । तस्मात् पदपदार्थयोः सम्बन्धान्तरमेव शक्तिर्वाच्यवाचकभावापरपर्याया । तद्ग्राहकं चेतरेतराध्यासमूलं तादात्म्यम् ।

**सम्बन्धा असङ्ख्येयाः**

अस्यां स्थितौ सम्बन्धो द्विविधः—एकः स नित्यः **'सिद्धे शब्दार्थसम्बन्धे'** इति भाष्येणोक्तः, यो हि शब्दार्थयोर्वाक्यपदीयादौ विस्तरेण प्रतिपादितः । अपरस्तु असंख्यः स्वस्वामिभावादिर्नित्योऽनित्यश्च । विस्तरेणैतत् प्रतिमायां प्रपञ्चयिष्यते ।

किञ्च **'निमित्तात् कर्मयोगे'** इति वार्त्तिके संयोगसमवायात्मकः सम्बन्धः, **'चर्मणि दन्तयोः'** इत्यादौ सप्तमीविधानार्थं स्वीकृत इति वाक्यपदीये संयोगसमवायौ वैशेषिकैः स्वीकृतावित्युक्तिः कथं सङ्गच्छते इति चेत्, न, तत्र वैशेषिकमतेनैव तयोरुपा-दानात् स्वमतेन तु योग्यतारूपायाः शक्तेरेव सम्बन्धत्वेन स्वीकारात् । भाष्ये समवाय-शब्दस्तु भिन्ने भिन्नेऽर्थे प्रयुज्यते । यथा **'वृत्तिसमवायार्थ उपदेशः'** इति वार्त्तिके समवायशब्दो वर्णक्रमविशेषार्थकः ।

**समवायविमर्शः**

**'स्थानेऽन्तरतमः'** इति सूत्रे 'समाजेषु समाशेषु समवायेषु' इत्यत्र समाजेषु-उत्सव-सङ्घातेषु, समाशेषु-सहभोजनेषु, समवायेषु-धर्मनिर्णयादिक्रियायां सम्मेलनेषु इत्यर्थः । **'कारके'** इति सूत्रे **'एवं तर्हि प्रधानेन समवाये', 'अमात्यानां राज्ञा सह समवाये'** इत्यत्र समवायशब्दस्य मेलनार्थकत्वम् । **'सार्वधातुके यक्[2]'** इति सूत्रे भाष्ये **'द्रव्यं क्रियया समवायं गच्छति[3]'** इत्यत्र क्रियानिरूपितकर्मादिसंज्ञासमानाधिकरणशक्तिभिः

---

१. तादात्म्यव्यङ्ग्यः कारणतावच्छेदकधर्मरूपः सम्बन्धः शक्तिरित्यर्थः ।

२. अष्टा० ३।१।६७ ।    ३. महाभाष्यम्—तदेव ।

सम्बन्धं गच्छतीत्यर्थकत्वेन क्रियाभिनिर्वृत्तौ साधनत्वमुपैतीत्यर्थकत्वेन वा नहि समवायशब्दो वैशेषिकाभिमतनित्यसम्बन्धपरः ।

यद्यपि **'कुत्सिते'** इति सूत्रे—

**स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम् ।**
**समवेतस्य च वचने लिङ्गं वचनं विभक्तिं च[1] ॥**

भाष्ये यद्यपि समवेतमित्यस्य समवायेन सम्बद्धमित्यर्थसत्त्वेन समवायशब्दो वैशेषिकाभिमतसमवायसम्बन्धपरकः प्रतीयते; तथापि **'तस्य भावस्त्वतलौ[2]', 'स्त्रियाम्[3]'** इत्यादिसूत्रस्थ **'गुणसमुदायो द्रव्यम्'** इत्यादिभाष्यसमालोचनया अयुतसिद्धरूपादिपरमाणुरूपावयवानुगतः समूहो द्रव्यमिति स्वीकाराद् अवयवावयविभाव एव सम्बन्धो न तु समवायः स्वीकार्यः ।

कैयटस्तु वैशेषिकपद्धत्या समवायं तत्रोदटङ्कयत् । अत एव **'एवं च कृत्वा संयोगसमवायाविव नेह सम्बन्धो यथाऽन्येषां च दर्शनानाम्[4]'** इति **'पदार्थीकृत[5]'** इत्यस्य श्लोकस्योपोद्घाते हेलाराजो निरदिक्षत् ।

अधस्तनेन ग्रन्थेन पारमार्थिकं द्रव्यं निरूपितम् । सम्बन्धश्चानेकभेदभिन्नः संक्षेपेण परीक्षितः ।

साम्प्रतं व्यावहारिकं द्रव्यं निरूप्यते । तच्च—

**वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।**
**द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः[6] ॥**

इत्यनया कारिकया वाक्यपदीये समुपस्थापितम् ।

**सर्वद्रव्यसामान्यं लक्षणम्**

तथाहि इदं तदिति सर्वनामपरामर्शयोग्यं द्रव्यम् । इदमिति प्रत्यक्षार्थवाचकम्, तदिति प्रमाणान्तरावगतपरोक्षार्थाभिधानम् तेन प्रत्यक्षपरोक्षार्थाकारपरामर्शेन वस्तुमात्रवाचित्वं सर्वनाम्नामुक्तं भवति, तथा च सर्वद्रव्यसाधारणमिदं लक्षणम् । निरुक्तकारसम्मतं चेदं द्रव्यलक्षणम् ।

द्वितीयं लक्षणमाह **'भेद्यत्वेन विवक्षितः'** इति । तथा च सामान्यादिभिरुपाधिभिरवच्छेद्यत्वेन अभिप्रेतं यत् तद् द्रव्यम् । एवं सति जात्यादिरपि यदि विशेष्यत्वेन

---

१. महाभा० ५।३।७४ । २. अष्टा० ५।१।११९ । ३. तदेव–४।१।३ ।
४. महाभा० ४।१।३—कैयटकृतटीका । ५. वा० प० ३।३।१२ ।
६. तदेव–३।२।३ ।

विवक्षितः, तदा द्रव्यमित्युच्यते। शास्त्रान्तरीयद्रव्यलक्षणानादराद् व्याप्तिदर्शनेन सार्वत्रिकी द्रव्यपदार्थव्यवस्था सिध्यति। यथा वाजप्यायनदर्शने जातेर्व्याप्तिमतीत्वम्, तथैव व्याडिदर्शने द्रव्यस्यापि व्याप्तिमत्त्वम्।

अत्रेदं रहस्यम्—पाणिनेर्निकाये द्रव्यपर्यायोऽधिकरणशब्दोऽप्यस्ति। **'अधिकरणैतावत्त्वे च[1]'**, **'विप्रतिषिद्धं चानधिकरणवाचि[2]'** इत्यादौ।

**अधिकरणशब्दो द्रव्यवाचकोऽपि**

तथा च अधिकरणशब्दोऽपि द्व्यर्थकः प्रयुज्यते। एकस्तु **'आधारोऽधिकरणम्[3]'** इत्यादिभिः संज्ञात्वेन प्रसाधितः **'सप्तम्यधिकरणे च[4]'** इत्यादौ प्रयुज्यते।

अपरस्तु द्रव्यार्थकः पूर्वत्र प्रयुक्तः। द्रव्यशब्दोऽपि **'द्रव्यं च भव्ये[5]'** इति सूत्रेण भव्यार्थे प्रसाध्यते। **'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे[6]'** इति सूत्रेऽपि प्रयुज्यते। अत्र द्रव्यशब्दो लौकिकद्रव्यपरो व्याड्यभिमतद्रव्यपरो वेति शङ्कायां वाक्यपदीये **'वस्तूपलक्षणं यत्र[7]'** इति कारिकायाष्टीकाया अन्ते 'तथा ह्यस्मिन् द्रव्यलक्षणे रूपादीनामपि द्रव्यत्वाद् अद्रव्यप्रकर्षे इत्यामुप्रत्ययाभावः, 'समयातरं शीतम्, उपांशुतरः शब्दः उच्चैस्तरो ध्वनिरिति' इति हेलाराजोक्त्या नहि लौकिकं द्रव्यं **'किमेत्तिङ्[8]'** इत्यत्र गृह्यते। तथा सति व्याड्यभिमतद्रव्यग्रहणेन पूर्वोक्तान्युदाहरणानि संगच्छन्ते।

**व्याड्यभिमतं द्रव्यं गृह्यते**

वस्तुतस्तु **'किमेत्तिङ्'** इति सूत्रे व्याड्युपदर्शितमेव द्रव्यं गृह्यत इत्यत्र नास्ति किञ्चिन्मानम्। तथा च लौकिकमेव द्रव्यं गृह्यताम्। अस्मिन् पक्षे पूर्वोक्तानि तरबन्तानि रूपाणि आमुप्रत्ययं विना नैव प्रयोज्यानि।

**अपरेषां मते अधिकरणमेव लौकिकद्रव्यपदेन ग्राह्यम्**

अपरे तु अधिकरणमेव लौकिकद्रव्यपदेन ग्राह्यम्। अन्यथा **'विप्रतिषिद्धं चानधिकरणवाचि[9]'** इति पर्युदासस्य निर्विषयत्वापत्तिः। अत एव तत्र अद्रव्यवाचीति नोक्तमित्याहुः। अस्यां स्थितौ को नाम पुरुषो न विस्मयेत, यदेतादृशे वैयाकरणनिकाये शब्ददारिद्र्यं यदेक एव शब्दः संशयपङ्के प्रक्षेप्तुम् अनेकार्थे प्रयुज्यते। एतेनानुमीयते

---

१. अष्टा० २।४।१५। २. तदेव–२।४।१३। ३. तदेव–१।४।४५।
४. तदेव–२।३।३६। ५. तदेव–५।३।१०४। ६. तदेव–५।४।११।
७. वा० प० ३।२।३—हेलाराजटीका। ८. अष्टा० ५।४।११।
९. अष्टा० २।४।१३।

यदियं पाणिनिसूत्राष्टाध्यायी न हि केवलपाणिनिनिर्मितसूत्रसमूहैरेव ग्रथिता; किन्तु बहूनि सूत्राणि पूर्वाचार्यैः कृतानि पाणिनिना स्वीयायामष्टाध्याय्यामविकलानि सन्निवेशितानि। अत एवाधिकरणशब्दः क्वचिद् गुणवदर्थकः, क्वचिच्च स्वसंकेतितार्थमभिधत्ते। **'उभयगतिः पुनरिह भवति'**[1], **'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्'**[2] इत्यादीनि वचनानीत्येतदर्थपरिपोषकाणि जाग्रति। अस्यामष्टाध्याय्यां कैश्चिदेतादृशविषयगवेषणाय प्रयतितव्यम्। द्रव्यविषये भाष्यपद्धत्या विचारः प्रतिमायामेव करिष्यते।

• • •

१. परिभाषेन्दुशेखरः—१०। २. तदेव—१।

# गुणनिरूपणाध्यायः

सम्बन्धनिरूपणानन्तरं गुणो निरूप्यते। तत्र को नाम गुण इति जिज्ञासायां 'वोतो गुणवचनात्'[1] इति सूत्रे।

**सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते।**

**आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः[2]॥** इति।

प्रथमं गुणलक्षणं कृतम्। अस्यायमर्थः—द्रव्यमाश्रयते तत एव द्रव्यान्निवर्तते भिन्नजातीयेषु घटपटादिषु दृश्यते। आधेयः—उत्पाद्यः, अक्रियाजः—अनुत्पाद्यः। असत्त्वप्रकृतिः—अद्रव्यस्वभावः, द्रव्यभिन्न इत्यर्थः। अस्मिल्लक्षणे द्रव्ये निविशते तस्माच्च द्रव्यान्निवर्तते, भिन्नजातीयेषु द्रव्येषु दृश्यते इत्युक्त्या जातेः संज्ञायाश्च गुणत्वं निरस्तम्, सा हि जातिः संज्ञा वा द्रव्ये निविशमाना द्रव्यं न कदाचिज्जहाति, न च भिन्नजातीयानि द्रव्याणि अभिनिविशते जातेर्नित्यत्वात् संज्ञायाश्च यावद्द्रव्यभाविनीत्वात्, यद्यपि गवाश्वादिषु प्राणित्वमस्ति, तथापि प्राणित्वेन तेषामेकजातित्वमेव।

यद्यपि प्राणित्वं प्राणसम्बन्धिरूपं न जातिर्नाप्यखण्डोपाधिस्तथापि तस्य जातित्वाङ्गीकारेणेदम्। क्रियायास्तु पूर्वोक्तलक्षणाक्रान्तत्वाद् गुणत्वं प्राप्नोति। साऽपि हि द्रव्ये निविशते कदाचिद् द्रव्यान्निवर्तते, निष्क्रियं हि द्रव्यं कदाचिद् भवति, कदाचित् सक्रियं भिन्नजातीयानि च द्रव्याण्याश्रयति। अत आह आधेय इति उत्पाद्य इत्यर्थः। यथा घटादेः पाकजो रूपादिः। एतेन नित्यानित्यवृत्तिजातिमत्त्वं लब्धम्। अनुत्पाद्यो यथा आकाशादेर्महत्त्वादिः, क्रिया तूत्पाद्यैव न नित्येति, तस्या द्वैविध्याभावाद् गुणत्वाभावः।

एवं तु द्रव्यस्यापि गुणत्वं प्राप्नोति, अवयविद्रव्यमवयवद्रव्येषु निविशते, असमवायिकारणसंयोगनिवृत्तौ च विनाशात् ततोऽपैति, भिन्नजातीयेषु हस्तपादादिषु दृश्यते। द्विविधञ्च तत्—नित्यानित्यभेदेन निरवयवस्य द्रव्यस्यात्मपरमाण्वादेर्नित्यत्वाद् अवयविद्रव्यस्यानित्यत्वात्। अत आह **'असत्त्वप्रकृतिः'** अद्रव्यस्वभावो द्रव्यभिन्न इत्यर्थः। द्रव्यादन्य इति उत्तरलक्षणे तथोक्तेः। द्रव्यपदेनात्र गुणाश्रय उच्यते। अत्रैवं व्याख्याने पृथग्जातिषु दृश्यते इत्यनेन सत्त्वे निविशते इत्यादिना वा जातेर्वारणे सिद्धे अन्यतरवैयर्थ्यापत्तिः। किञ्च वारकेणैव जातिवारणे सिद्धे उभयोरपि वैयर्थ्यम्। किञ्च पृथग्जातिषु दृश्यते इत्यनेन जातिवारणमशक्यम्। भिन्नजातीयेषु घटपटादिषु

---

१. अष्टा० ४।१।४४।  २. तत्रैव—महाभाष्यम्।

द्रव्यत्वादिदर्शनात् । तथा च **'सत्त्वे निविशते'**[1] इति नेदं लक्षणम् । अतो भाष्ये अपर आह इत्यादिना लक्षणं कृतम् । तथा हि—

**उपैत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि ।**
**वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः**[2] ।। इति ।

अस्यार्थः प्रदीपोद्द्योतोक्तः 'द्रव्यं शुक्लादिगुण आगच्छति, अन्यत्तु परित्यजति, यथा वस्त्ररञ्जकः कुसुम्भेन वस्त्रं रञ्जयति, तत्र कुसुम्भपुष्पगतं रूपं वस्त्रमायाति, कुसुम्भपुष्पं तद्रक्तरूपरहितं भवति । पटुत्वादिगुणः क्वचिदायाति, क्वचिच्च नश्यति, क्वचित् पटोरपटुत्वस्य अपटोश्च पटुत्वस्य दर्शनात् पूर्वलक्षणे एवमेव व्याख्यातुमुचितम्, भिन्नजातीयेषु द्रव्येषु दृष्टः ।' पूर्वार्द्धेन संज्ञाया जातेश्च गुणत्वनिरासः । वाचकः सर्वलिङ्गानामिति गुणस्य वाचकत्वमनुपपन्नम् । अतः शब्दधर्मस्य वाचकत्वस्यार्थे आरोपाद् गुणानां वाचकत्वं लक्ष्यते । अनेन लिङ्गरहितायाः क्रियाया गुणत्वनिरासः । द्रव्यभिन्नश्च द्रव्यसदृश इति भावत्वेन सादृश्याद् अमावस्यगुणत्वनिरासः ।

उद्द्योते 'अत्र वदन्तीत्यनेन यो हि निष्कृष्टोऽर्थः प्रतिपादितः'तं दर्शयामि । गुणो नामेति प्रश्ने गुणशब्दो गुणवचनपरो **'नामैकदेशे नाममात्रग्रहणमिति'**[3] न्यायात् । एवं सति **'वाचकः सर्वलिङ्गानाम्'** इति यथाश्रुतमेव सङ्गच्छते । येषाञ्च शब्दानाम् **'आकडारादि'**[4] सूत्रे गुणवचनसंज्ञा उक्ता, तेषामत्रापि ग्रहणम् । एवं सति द्वयोर्भाष्ययोरेकवाक्यता भवति । तत्र हि समस्त-कृदन्त-तद्धितान्त-सर्वनाम-जाति-संख्या-संज्ञाशब्दातिरिक्तशब्दस्य गुणवचनसंज्ञा कृता, तस्मादत्रापि विशेषणैस्तद्व्यावृत्तिरेव युक्ता । तथा हि तत्र **'सत्त्वे निविशतेऽपैति'**[5] इत्यनेन संज्ञानिरासः ।

न हि संज्ञाजातिशब्दा द्रव्ये विद्यमाने एव रक्तादिशब्दवत् कदाचिद् वाचकत्वेन प्रवर्तन्ते, कदाचिन्न प्रवर्तन्ते । जातिषु पृथग् दृश्यते इत्यनेन सर्वनामनिरासः । यथा शुक्लादयः शब्दाः समाने शुक्ले गवि शुक्लशब्दः अश्वे कर्कशब्दः नैवं सर्वनामशब्दा नियतविषयाः । चार्वादयोऽपि शब्दाः क्वचिच्चारुरिति क्वचिच्चारुतर इत्येवंरूपेण प्रयुज्यमाना दृश्यन्ते, नैवं क्वचिदपि सर्वतर इति भवति । आधेय इत्यनेन संख्याशब्दनिरासः । न हि संख्यावाचकशब्दो रक्तादिगुणवाचकशब्दवद् द्रव्ये विद्यमाने यत्नाधेयार्थको भवति । अर्थात् तस्य संख्यावाचकशब्दस्य आधेयरूपा या संख्या, सा विद्यमाने तस्मिन् संख्यावाचके शब्दे नहि आधातुं शक्यते । अनयैव रीत्या जातिरपि नाधातुं शक्यते तद्वाचके शब्दे ।

---

१. अष्टा० ४।१।४४—महाभाष्यम् ।
२. तदेव ।
३. अष्टा० ४।१।४४—महाभाष्यम् ।
४. तदेव—१।४।१ ।
५. तदेव—४।१।४४—महाभाष्यम् ।

अक्रियाज इत्यस्य क्रियाप्रतिपादकधात्वजन्य इत्यर्थः, तेन कृदन्तनिरासः। समासतद्धितान्तयोः प्रायेण सत्त्ववाचकं सुबन्तमेव प्रकृतिर्भवति, इति सत्त्वभिन्न-प्रकृतिकत्वं न तयोरिति असत्त्वप्रकृतिरित्यनेन तयोर्निरासः।

**गुणलक्षणम्**

**'उपैत्यन्यद्'**[1] इत्यादिश्लोके तु उपैत्यन्यज्जहात्यन्यदित्यनेन संज्ञाशब्दनिरासः। न हि संज्ञाशब्दस्तस्यामेव व्यक्तौ वाचकत्वेन च वर्तते, न च वर्तते। दृष्टो द्रव्यान्तरेष्वपि इत्यत्र पृथगिति शेषः। तथा च सर्वनामशब्दा द्रव्यान्तरेषु पृथग् नहि दृश्यन्ते; किन्तु सर्वेऽपि सर्वनामशब्दाः सर्वत्र समानभावेन प्रयुज्यन्ते, नहि कर्कशुक्लशब्दवन्नियतविषया भवन्ति, तेन च सर्वनामनिरासः। वाचकः सर्वलिङ्गानामित्यनेन जातिनिरासः, न हि जातिवाचकाः सर्वेषु लिङ्गेषु जातिप्रवृत्तिनिमित्ततया प्रयुज्यन्ते।

न च **'उपैत्यन्यज्जहात्यन्यदित्यनेन'**[2] जातेर्व्यावृत्तिः कर्त्तुं शक्यते। तथा हि याज्ञवल्क्यस्मृतौ—

> **जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा।**
> **व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्**[3] ॥

इत्युक्तम्।

अस्यार्थः—जात्युत्कर्षः–उत्कृष्टजातिप्राप्तिः, सप्तमे अपिशब्दात् षष्ठे पञ्चमे वा ज्ञेयः, अर्थाद् विप्रोढा शूद्रा कन्यां सूते, सापि तदूढामन्यामिति सप्तमं विप्रं सूते, एवं विप्रोढवैश्याजन्या षष्ठं विप्रं सूते। विप्रोढक्षत्रियाजन्या पञ्चमं विप्रं प्रसूते, क्षत्रिया-च्छूद्रोत्पन्ना षष्ठं क्षत्रियम्, वैश्यजा पञ्चमं वैश्यं सूते इति पूर्वार्धार्थः। एवं विप्रस्य क्षात्रवृत्त्याऽपत्यपरम्परयाऽनापदि जीवने पञ्चमः क्षत्रियः। वैश्यवृत्तौ जीवने षष्ठो वैश्यः। शूद्रवृत्तौ षष्ठः शूद्रः, वैश्यस्य शूद्रवृत्तौ पञ्चमः शूद्र इति। एतत्सर्वमनापदि स्मृत्यन्तर-प्रामाण्यात्। तथा च तद्वर्णवृत्त्या सप्तमादौ ब्राह्मणत्वादिजातेर्निरासाद् विश्वामित्रादौ तत्सम्बन्धाच्च। आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय प्रवर्तते, उत्पत्तिप्रभृत्याविनाशात् तल्लिङ्गं न जहाति, इति **'विशेषणानां चाजातेः'**[4] इति सूत्रे भाष्योक्ते तद्वाचकानां न सर्वलिङ्गवाचकत्वम्। अनेन संख्यानिरासोऽपि विंशत्यादीनां सर्वलिङ्गत्वाभावात्।

द्रव्यादन्य इत्यस्य द्रव्यवाचकप्रातिपदिकप्रकृतिकादन्य इत्यर्थः, द्रव्यवाचका-न्यप्रकृतिक इत्यर्थो वा। तेन समस्ततद्धितान्तयोर्निरासो द्वितीयपादस्थेन अपिना अधातुजत्वस्य ग्रहणम्, तेन कृदन्तनिरासः। अत एव उत्तरसूत्रे बहुग्रहणं चरितार्थम्। कृदन्तनिरासो यदि न स्यात् तर्हि बहुशब्दस्यापि गुणवचनत्वे ङीप्रत्ययसिद्धौ

---

१. अष्टा० ४।१।४४—महाभाष्यम्। २. अष्टा० ४।१।४४—महाभाष्यम्।
३. या० स्मृ० ९७। ४. अष्टा० १।२।५२।

**'बह्वादिभ्यश्च'**[१] इति सूत्रे बहुग्रहणवैयर्थ्यमापतेत्, संख्याशब्दस्य गुणवचनत्वादिति। कैयटव्याख्यानेऽपि आधेयश्चेत्यादिना संख्यावारणसम्भवः।

वस्तुतो **'वोतो गुणवचनात्'**[२] इति सूत्रस्थं भाष्यमेकदेश्युक्तिः व्याख्यालेशस्याप्यभावात्। **'आकडार०'**[३] इति सूत्रे स्वयमुक्तत्वाच्च भगवताऽत्र गुणवचनलक्षणं नोट्टङ्कितम्। तथा च **'वोतो गुणवचनाद्'**[४] इति सूत्रे आकडारसूत्रोक्तमेव गुणवचनत्वं ग्राह्यम्। एवमेव **'गुणवचनब्राह्मणादिभ्यः कर्मणि च'**[५] इत्यत्राऽपि तदेव गुणवचनत्वं मन्तव्यम्।

**नवीनमतस्यैकदेश्युक्तिः**

नवीनास्तु **'वोतो गुणवचनाद्'**[६] इति सूत्रे तत्सूत्रस्थभाष्योक्तमेव लक्षणं ग्राह्यम्। न च तद्भाष्यमेकदेश्युक्तिः, तद्घटकानां सर्वेषां पदानां सार्थक्यात्। तथा च भाष्यकृता यस्मिन् सूत्रे वार्तिके वा गुणस्वरूपं वाच्यवृत्या व्यञ्जनया वा न प्रदर्शितम्, तत्र आकडारसूत्रोक्तं गुणवचनत्वमभ्युपगन्तव्यमिति वदन्ति। **'पूरणगुण'** इति सूत्रे तु गुणार्थशब्देन गुणवाची सन् गुणोपसर्जनद्रव्यवाची गुणिबोधकप्रकृतिकभावप्रत्ययान्तश्च गृह्यते व्याख्यानात्, आकडारसूत्रोक्तगुणवचनानां तु नेह ग्रहणम्, वचनपदानुपादानात्। एवं सति **'ब्राह्मणस्य शुक्लाः'**, **'काकस्य कार्ष्ण्यम्'** इति तदुदाहरणे दत्ते।

परे तु ब्राह्मणस्य शुक्ला इति न तदुदाहरणम्। षष्ठ्यन्तं समर्थप्रकृतिकेन सुबन्तेन समस्यत इत्यर्थसत्त्वेन सामर्थ्याभावादत्र समासप्राप्तेरभावात्। तथा हि सुबन्तेन शुक्ला इति पदेन वाक्यैकदेशन्यायेन **'शुक्लाः दन्ताः'** इत्यर्थबोधः। एवञ्च सुबुत्पत्तिः शुक्लशब्दात् स्वार्थे एवेति न समर्थप्रकृतिकता सुपः, अत एव **'ब्राह्मणस्य ग्रामं गतः'** इत्यर्थके **'ब्राह्मणस्य गतः'** इति वाक्ये प्रकरणादिना ग्राममित्यर्थस्योक्तन्यायेन गत इत्यनेनोक्तौ समासो न, नेष्यते च तत्र समास इति **'कर्मणि च'**[७] इति सूत्रे भाष्यकैयटयोः स्पष्टम्। तस्मात् कार्ष्ण्यादय एवात्रोदाहरणम्, गुणिपरतापि शुक्लादीनां विशेषद्रव्योपादाने प्रकरणादिना तदवगतौ वा नान्यत्राभिधानस्वाभाव्यादित्याहुः।

अस्य समासस्य च नानित्यत्वम्। अत एव **'सर्वश्वेतः'** इत्यादौ **'गुणेन न'**[८] इति निषेधात् कथं समासः इत्याशङ्क्य **'गुणात्तरेण समासस्तरलोपश्चेति'**[९] वचनमारब्धम्। **'सर्वं गुणकार्त्स्न्यम्'**[१०] इति सूत्रे भाष्ये।

---

१. अष्टा०—४।१।४५। २. तदेव—४।१।४४। ३. तदेव—१।४।१।
४. तदेव। ५. अष्टा० ५।१।१२४। ६ तदेव—४।१।४४।
७. अष्टा० २।२।४। ८. तदेव–६।२।९३–महाभाष्यम्।
९. तदेव–६।२।९२–महाभाष्यम्। १०. तदेव–६।२।९३।

संख्याशब्दा भावशब्दा इति 'योजनशतं गोविंशतिः' इत्यादौ च नायं निषेधः। तथा च 'पङ्क्तिविंशति[1]' इति सूत्रे भाष्यम् 'त एते विंशत्यादयः समुदाये सन्तो भाववचना भवन्ति' इति 'विंशत्यादिषु भाववचनेषु' इति च।

यस्तु तत्रैषां गुणवचनव्यवहारोऽपि, स तु तत्सादृश्यात्। अन्यथा धनमित्युपक्रम्य 'धनमेको गुणः, अपत्यमेको गुणः[2]' इत्यपि भाष्योक्तेः। चैत्रधनं चैत्रापत्यमित्यादि न स्यादिति लघुशब्देन्दुशेखरे उक्तम्। 'षष्ठी[3]' इति सूत्रे भाष्ये तत्स्थैश्च गुणैरिति वार्त्तिकोपरि—

**तत्स्थैश्च गुणैः षष्ठी समस्यते इति वक्तव्यम्।**
**ब्राह्मणवर्णः चन्दनगन्धः पटहशब्दो नदीघोषः॥**

अत्र कैयटः—इह केचिद् गुणाः शब्देन द्रव्यान्निष्कृष्टा एव प्रत्याय्यन्ते, न तु द्रव्यस्योपरञ्जकत्वेन। यथा चन्दनस्य गन्ध इति सर्वत्र वैयधिकरण्यमेव गुणगुणिनोः, न कदाचित् चन्दनं गन्धः इति सामानाधिकरण्यं भवति' शुक्लादयस्तु गुणाः कदाचिन्निष्कृष्टरूपाः शब्दैरुच्यन्ते पटस्य शुक्ल इति। तस्माद् द्विविधगुणसद्भावात् तत्स्थैरिति विशेषणं रूपादिगुणपरिग्रहार्थमुपात्तम् इति ब्राह्मणवर्णादिय उदाहरणम्। अथ बलाकायाः शौक्ल्यमिति समासः कस्मान्न भवति। तत्स्थं हि शौक्ल्यं सर्वदा वैयधिकरण्येन सम्बन्धात्। नैष दोषः। शौक्ल्यशब्देन शुक्लो गुणोऽभिधीयते। शुक्लशब्दस्य द्रव्ये वर्तमानस्य तस्मिन्नेव प्रवृत्तिनिमित्ते भावप्रत्ययविधानात्, न चासौ तत्स्थः। अभेदाध्यवसायेन द्रव्यं प्रत्यनुरञ्जकत्वदर्शनाच्छुक्लः पट इति अर्थस्य च तत्स्थत्वमाश्रीयते इति शब्दभेदेऽप्यर्थस्याभेदान्नास्ति शुक्लस्य गुणस्य तत्स्थत्वम्। रूपवान् पट इत्यादौ तु नास्ति गुणगुणिनोरभेदाध्यवसायः, भेदाश्रयेणैव मत्वर्थीयप्रयोगादिति रूपस्य तत्स्थत्वमव्यावृत्तमिति पटरूपमिति समासो भवत्येव[4]' इति।

तस्मादत्र व्याख्यानात् केवलगुणवाची सन् यो गुणिबोधकः, तत्प्रकृतिकभावप्रत्ययान्तप्रतिपाद्यानां गुणपदेन ग्रहणम्, अर्थपदान्वयाच्च तद्बोधकशब्दमात्रग्रहणम्। एवं च प्राधान्यगौरवादौ निषेधाप्रसक्तिरेव नहि तत्र 'पटस्य शुक्लः', 'पटस्य शौक्ल्यम्' इतिवद् 'अर्थस्य गुरुः', 'बुद्धेर्मन्दः' इति प्रयोगो भवति। एवमेव तत्स्थैश्च गुणैरित्यत्रापि तेनैव गुणवाचकेन समासः, येनापरस्य पदस्य वैयधिकरण्यमेव।

**तल्लक्षणस्यैकदेश्युक्तित्वाभावसमर्थनम्**

अत्रायं निर्गलितोऽर्थः—**'वोतो गुणवचनात्[5]'** इति सूत्रस्थं गुणलक्षणं न ह्येकदेश्युक्तिः; किन्तु तादृशमेव गुणवचनत्वं तत्र गृह्यते। 'तत्स्थैश्च गुणैः[6]' इति वार्त्तिके तु गुणपदेन तेषामेव गहणम्, यत्सन्निधाने वैयधिकरण्यमेव गुणगुणिनोः प्रतीयते।

---

१. अष्टा०—५।१।५९। २. अष्टा० ५।१।५९—महाभाष्यम्। ३. तदेव—२।२।८।
४. अष्टा० २।२।८—महाभाष्यम्। ५. तदेव—४।१।४४। ६. तदेव—महाभाष्यम्।

**'पूरणगुण[1]'** इत्यत्र तु केवलगुणवाची सन् यो गुणिबोधकः, तत्प्रकृतिकभाव-प्रत्ययान्तप्रतिपाद्यानां गुणपदेन ग्रहणम्। अस्यां स्थितौ गोविंशतिरित्यादौ समास-निषेधः प्राप्नोत्येव न हि। अत एव **'क्रोशशतयोजनशतयोरुपसंख्यानम्[2]'** इति वार्त्तिक-प्रयोगः सङ्गच्छते। 'ब्राह्मणस्य शुक्ला' इत्यस्य एकदेशयुक्तित्वाभावे तु संख्यावाचकानां भाववचनत्वमेव, न तु गुणवचनत्वं **'पङ्क्तिविंशति[3]'** इत्यादिसूत्रे संख्याशब्दानां गुण-वचनत्वेन व्यवहारस्तु गुणवचनसादृश्याद् बोध्यः। 'वोतो गुणवचनात्' इति सूत्रे तु तत्सूत्रोक्तमेव लक्षणं ग्राह्यम्। 'सर्वश्वेतः' इत्यादौ 'गुणेन न[4]' इति निषेधात् समासो न स्यात्, तदर्थं **'गुणात्तरेण तरलोपश्च'** इति वार्त्तिकोक्तौ तु यदा नहि पूरणगुणेति सूत्रस्थं भाष्यमेकदेशयुक्तिः, तदापि बुद्धिमान्द्यादौ ज्ञापकस्य नोपयोगः। पूरणगुणेत्यत्र गुणपदेन केवलगुणवाची सन् यो गुणिबोधकः तस्य तत्प्रकृतिकभावप्रत्यान्तप्रतिपाद्यस्य च ग्रहणात्।

**अष्टाध्याय्यां दिक्पदप्रयोगः, वार्त्तिके च**

तथा च कः पदार्थोऽङ्गीकर्तव्यः ? कश्च नेत्याकाङ्क्षायां यान् पदार्थानुद्दिश्य सूत्राणि वार्त्तिकानि भाष्याणि च प्रवृत्तानि तेषां निरूपणं तु सामयिकमेव मन्तव्यम्। तत्र सूत्रेषु **'दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु[5]' 'दिक्शब्देभ्यः सप्तमीपञ्चमी-प्रथमाभ्यो दिग्देशकालेष्वस्तातिः[6]', 'दिक्पूर्वपदाट्ठञ् च[7]', 'दिक्पूर्वपदादसंज्ञायाम्[8]' 'दिक्पूर्वपदन् ङीप्[9]', 'दिक्संख्ये संज्ञायाम्[10]', 'दिगादिभ्यो यत्[11]', 'दिङ्नामान्यन्तराले[12]'** इत्यादौ।

वार्त्तिके च **'दिक्शब्देभ्यस्तीरस्य तारभावो वा', 'दिक्समाससहयोगयोश्चा-न्तरालप्रधानाभिधानात्[13]'** इति। तथा एतद्वार्त्तिकोपरिभाष्येऽपि—**'अथ मतमेतद् दिशि दृष्टो दिग्दृष्टः, दिगदृष्टः शब्दो दिक्शब्दो दिशञ्च यो न व्यभिचरति'** इत्यादौ दिश उद्दिष्टाः सन्ति, तत्र दक्षिणा उत्तरा इति दिक्शब्दौ दक्षिण उत्तर इति व्यवस्था-शब्दौ **'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्[14]'** इत्यादौ च व्यवस्था-वाचकाः शब्दाः समुद्दिष्टा विद्यन्ते।

---

१. अष्टा० २।२।११। २. तदेव–५।१।७४।
३. तदेव। ४. तदेव–२।२।११।
५ अष्टा० ६।२।१०३। ६. तदेव–५।३।२७। ७. तदेव–४।३।६।
८. तदेव–४।२।१०७। ९. तदेव–४।१।६०। १०. तदेव–२।१।५०।
११. तदेव–४।३।५४। १२. तदेव–२।२।२६। १३. तदेव–२।२।२८-महाभा०।
१४. अष्टा० १।१।३४।

अस्यां स्थितौ केयं दिगिति चिन्तायामुक्तं भर्तृहरिणा—

**शक्तिरूपे पदार्थानामत्यन्तमनवस्थिताः ।**
**दिक् साधनं क्रिया काल इति वस्त्वभिधायिनः[1] ।। इति ।**

**हरिमतेन दिशः स्वरूपम्**

अत्र हि हेलाराजः—'**तथा हि परोपाधिरूपाः शक्तयो दिगाद्याः पारतन्त्र्यञ्च शक्तिलक्षणमिति क्रियाऽपि द्रव्यपरतन्त्रा शक्तिरिति व्यपदिश्यते। वैशेषिकनये च दिग् द्रव्यं नोपपद्यते। कार्यानुमेयत्वेन पदार्थोपकाररूपस्य शक्तित्वस्य न्याय्यत्वात्**' इति तथा चेयं दिगाख्या शक्तिः कालाख्या शक्तिरिव विराजते। इयञ्च व्यापिका अमूर्त्ता च। तथा चोक्तं वाक्यपदीये—

**सर्वत्र तत्र कार्यस्य दर्शनाद्विभुरिष्यते ।**
**विभुत्वमेतदेवाहुरन्यः कार्यवतां विधिः[2] ।।** इति ।

किञ्च यथा कालो ब्रह्मणः शक्तिभावेषु प्रतिबन्धाभ्यनुज्ञाव्यापारोऽध्यस्तनानात्वात्, तथा दिगपि सोपाधिभिन्ना पूर्वापरादिभावभेदनिबन्धनीत्याह। तदुक्तं वाक्यपदीये—

**तस्याश्च शक्तेः पूर्वादिर्भेदो भावान्तराश्रयः ।**
**भिन्ना दिक् तेन भेदेन भेदायैवोपकल्पते[3] ।।** इति ।

**'दिक्कालावाकाशादिभ्यः[4]'** इति सांख्यमार्गमवलम्ब्य नास्माभिर्गन्तुं शक्यते। तथा हि—'प्राङ्मुखोऽन्नानि भुञ्जीत अपराह्णे श्राद्धं कुर्यात्' इत्यादयो व्यवहारा दिक्कालयोः प्रत्याख्याने न प्रकल्पेरन्। तथा चोक्तं वाक्यपदीये—

**सङ्करो व्यवहाराणां प्रकृतेः स्याद्विपर्यये ।**
**तस्मात्त्यजन्निमान् भावान्पुनरेवावलम्बते[5] ।।** इति ।

अनया रीत्या (बाह्यार्थनिरूपणरीत्या) दिक् समर्थिता, इदानीमन्तःक्षेपनीत्या समर्थ्यते। तथा चाह भर्तृहरिः—

**अन्तःकरणधर्मो वा बहिरेवं प्रकाशते ।**
**अस्यान्त्वन्तर्बहिर्भावः प्रक्रियायां न विद्यते[6] ।।** इति ।

---

१. वा० प० ३।१२।१।
२. तदेव—३।६।१७।
३. वा० प० ३।६।२०।
४. सां० सू० २।१२।
५. वा० प० ३।६।१९।
६. तदेव—३।६।२३।

**अन्तःक्षेपनीत्या दिक्समर्थनम्**

तथा चान्तःकरणधर्मश्चैतन्यमेव अनाद्यविद्यावशात् स्वरूपनिष्कर्षेण इदमिति बहिराकारावभासेऽपि परमार्थतो बाह्यस्यायोगात् स्वभावे च जगत् प्रत्यवभासते इत्यन्तरवस्थितस्यैव व्यापारः। तथा च वक्ष्यति—

**द्यौः क्षमा वायुरादित्यः सागराः सरितो दिशः।**
**अन्तःकरणधर्मस्य भागा बहिरवस्थिताः**[1] ॥ इति।

तस्यान्तःकरणतत्त्वस्यायं धर्मो बाह्यार्थापेक्षोऽविद्यावशात् स्वभावभूतोऽवभासः, एवं पूर्वाद्याकारेण बहिरध्यवसीयते। असति बाह्ये कथं बहिरध्यवसीयत इति चेदाह— अस्या अविद्यावशादवभासस्यैव बाह्यत्वावभासरूपायां कल्पनायामन्तारूपता बहीरूपता च न मुख्या। परानुरोध्यनुप्रतिभासवशेनैवमुच्यते। सति हि बाह्ये तदपेक्षमान्तरत्वमपि मुख्यमिति काल्पनिकोऽन्तर्बहिर्भावः। एवञ्च पूर्वापरत्वमविद्याध्यस्तं भावेष्वन्तारूपेषु अनादिमिथ्याभासे वासनालक्षणान्तःकरणधर्मरूपं चकास्ति, न बाह्या काचिद् दिगस्ति। इतो विशिष्टं प्रतिमायां प्रपञ्चयिष्ये।

• • •

१. वा० प० ३।७।४१।

# साधननिरूपणाध्यायः

**साधनस्वरूपम्**

तत्र साधनं निरूपयन्नाह भर्तृहरिः—

**स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे ।**
**क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः ॥**

इति वाक्यपदीयकारिकातः **'किं पुनः साधनम्'** इति प्रश्ने गुण इत्याहेति प्रातिपदिकार्थसूत्रभाष्यात् आश्रितत्वाच्छक्तिरेवात्र गुणशब्देन विवक्षिता ।

अस्याः कारिकाया अयमर्थः—क्रियाया आश्रये आश्रयान्तरे वा समवेतानां क्रियाणां सिद्धौ यत् सामर्थ्यं तदेव साधनं ज्ञेयम् । तथा च शक्तिः कारकमिति पक्षो भाष्यसिद्धः । 'परोक्षे लिट्' इति सूत्रे भाष्ये द्रव्यं साधनमुपन्यस्तम् । तथा चोक्तं वाक्यपदीयटीकायाम्—**'शक्तं हि द्रव्यं साधनं न तु निराधारा शक्तिः सम्भवति'** इति तथा चोक्तं तत्रैव—**'यदि तावद् गुणसमुदायः साधनम्, साधनमप्यनुमानगम्यम् । अथान्यद् गुणेभ्यः साधनं भवति प्रत्यक्षपरोक्षाभ्यां सम्भव'** इति ।

**'उपसर्गाच्छन्दसि धात्वर्थे'** इति सूत्रे भाष्ये द्रव्यस्य साधनत्वमुक्तम् । तथा हि **'साधनेऽयं भवन् लिङ्गसंख्याभ्यां योक्ष्यते'** इति । **'साधनशब्देनात्र शक्त्याधारो द्रव्यं विवक्षितम्'** इति च तत्र कैयटः । अस्यां स्थितौ शक्तिः कारकं शक्तिमत् कारकम् इति पक्षद्वयं भाष्यसिद्धान्तसिद्धम् । स च साधनव्यवहारो बौद्धो बाह्यश्च । तत्र बौद्धमेव साधनव्यवहारं परिकल्प्य बहूनां 'भीत्रार्थानां भयहेतुः' इत्यादीनां सूत्राणां प्रत्याख्यानं भाष्योक्तं सङ्गच्छते ।

एवं सति बुद्धया साधनव्यवहारोपपत्तौ एकस्यापि वस्तुनः शक्तिनानात्वं बौद्धं समुपपद्यते । तत्र द्रव्यव्यतिरिक्ता शक्तिः साधनमित्येकं दर्शनम् । द्रव्याव्यतिरिक्ता शक्तिरित्यपि दर्शनं केषाञ्चित् । तथा च मीमांसकवैशेषिकदर्शनेन शक्तिः साधनमिति सिद्धम् । तथा च केषाञ्चिन्मतेन पदार्थव्यतिरिक्ताः शक्तयः । केषाञ्चित्तु सहकारिसाधनोपकृतो भावः स्वरूपेणैव कार्यजनकः, अदृष्टशक्तिकल्पनं व्यर्थमिति आत्मैव भावानां शक्तिरिति ।

किञ्च यद् यदाऽनुगृहीतम्, तदा तत्र तत् साधनम् इति क्रियाया अपि साधनत्वं भाष्याभिमतम् । अत एव सम्प्रदानसंज्ञायां **'क्रियाग्रहणं कर्तव्यमित्युक्त्वा इह कश्चित् कञ्चिदर्थं सम्पश्यति, स दृष्ट्वा प्रार्थयमानो व्यवसायं करोति अध्यवसाये प्रारम्भः, प्रारम्भे फलप्राप्तिरिति सन्दर्शनाभिराध्यमानत्वात् क्रियापि कृत्रिमं कर्मेति'** भाष्य उक्तम् ।

अपि च 'सामग्रीसाध्यत्वात् सर्वे एव कारकत्वं क्रियानिष्पत्तिविषयभेदेन प्रतिपद्यन्ते इति। यदा तु कः कथं पचतीति विवक्षा, तदा प्रधानक्रियानिष्पादनाद् विचित्रव्यापाराणि शब्दरूपाणि यथास्वं व्यापारातिशयवशेन करणादिसंज्ञाः प्रतिलभन्ते' इति। अग्रे तत्रैव सर्वेषां कारकाणां स्वरूपं यथा वाक्यपदीये समुट्टङ्कितं, तथा दर्शयामि—'यत्र हि अन्येषां साधनानां व्यापारो न भवति, स कर्ता। निर्वृत्तिविकारप्राप्तिभिर्यस्य संस्कार आहितः, स कर्तुः क्रियया ईप्सितः कर्म। हेतुतामनुभवन् कारकान्तरव्यापारैरव्यवहितं व्यापारं यस्य तत् करणम्। प्रेरणानुमनननिराकरणव्यापारकर्मणा सम्बध्यमानं सम्प्रदानम् अपायमवधिभावोपगमनेन साधयदपादानम्। कर्तृकर्मव्यवहितक्रियाधारः अधिकरणम्। स्वतन्त्रः प्रेषयन् हेतुरिति सामान्यपूर्वकत्वाच्च विशेषस्य अवान्तरव्यापारोऽपि कारकत्वमनुवृत्तिकरणं कारकमिति करणं कारकमिति सामानाधिकरण्योपपत्तिः। अकारकस्य च विशेषसंज्ञाभावो वृक्षस्य पर्णं पतति[1]' इत्यत्र यथा।

कारकस्थले व्यापारद्वयं भवति। एको व्यापारो धातुवाच्यः, अपरश्च तदवाच्यः। यत्र च देवदत्तः स्थाल्यामोदनं पचतीत्यादौ देवदत्तादीनां कर्तॄणां व्यापारो नापेक्ष्यते, तदा स्थाली पचति, एधाः पचन्ति, ओदनः पच्यते, असिश्छिनत्ति इत्यादौ प्रधानक्रियानिरूपितं कर्तृत्वं स्थाल्यादीनाम्। 'संप्रदानापादानयोः स्वव्यापारे स्वातन्त्र्यविवक्षा नास्ति, द्वितीयस्य आदातुरपगन्तुश्चापेक्षणात्'।

**वस्तुतः सम्प्रदानापादानयोर्न कारकत्वम्**

वस्तुतस्तु पाणिनेः पूर्वं सम्प्रदानापादानयोः कारकत्वमेव नासीत्। यतो हि यत् कारकं भवति, तदवश्यमेव कर्ता भवेत्। यथा कर्मकरणाधिकरणानि अविवक्षया 'ओदनः स्वयमेव पच्यते', 'असिश्छिनत्ति', 'स्थाली पचति' इत्यादौ कर्तृत्वं भजन्ते, नैवं सम्प्रदानापादाने क्वचिदपि अविवक्षया रामो ददाति पर्वतः पततीत्यादिरूपेण कर्तृत्वमासादयतः। न च 'शृङ्गात् शरो जायते', 'अजाविलोमभ्यो दूर्वा जायन्ते' इत्यत्रापादानत्वस्याविवक्षयाऽपादानमपि कर्तृत्वं भजते, इति, तस्यापि कारकत्वे न काचिद् बाधाऽऽपतति, प्रत्युत पूर्ववदत्राप्येतस्य कारकत्वासादनादिति वाच्यम्, द्वयोरपि स्थलयोरधिकरणस्यैव युक्तियुक्तत्वात् 'शृङ्गे शरो जायते', 'अजाविलोमसु दूर्वा जायन्ते' इत्यर्थस्यैव तत्र प्रतीतेः। केवलं पञ्चमीविधानार्थमेवापादानत्वं तयोर्विधीयते। यदि हि अधिकरणे पञ्चमीविधानार्थं तादृशं किञ्चित् सूत्रं निरमास्यत्, तदा तत्रापादानत्वस्य न हि कश्चनोपयोगोऽभविष्यत्।

अपि च यथा कर्तृकर्मकरणाधिकरणेषु कृधातुरनुस्यूतोऽस्ति, न हि तथा सम्प्रदानापादानशब्दयोः। एतेनापि न तयोः कारकत्वं युक्तियुक्तम्, वक्ष्यमाणवाक्य-

---

१. वा० प० ३।७।१८–टीकायाम्।

पदीयटीकासन्दर्भोऽपि अस्मिन्नंशे साहाय्यं भजते। किञ्च भगवान् भाष्यकारो **'बहुगण-वतुडति संख्या'** इति सूत्रे **'एवमिहाप्यसंख्यां संख्येत्याह संख्यावदिति गम्यते'** इत्याह। एतेनापि स्पष्टं प्रतीयते यद् भगवान् पाणिनिः बहुषु स्थलेषु अतथाभूतेष्वपि तथात्व-भूतत्वेन व्यवाहरत्। तथैवात्रापि भगवान् पाणिनिः अकारकं कारकमित्याह।

**निष्कृष्टार्थः**

अत्रेदं रहस्यम्। आख्यातस्थले द्विविधा क्रिया प्रतीयते, एका धातुवाच्या, अपरा च कारकाश्रया। तत्र धातुवाच्या क्रिया कर्तृकर्मकरणाधिकरणेष्वपि वर्तते, न हि सम्प्रदानापादानयोः। अत एव न हि तत्र कर्तृत्वेन विवक्षा भवति। तथा चोक्तं वाक्यपदीये टीकायाम् 'अनपेक्षिते कर्तृव्यापारे स्थाली पचति, एधाः पचन्ति, असिश्छि-नत्तीति, प्रधानक्रियायामेवैषां कर्तृत्वम्, सम्प्रदानापादानयोः स्वव्यापारे स्वातन्त्र्यविवक्षा नास्ति द्वितीयस्या दातुरपगन्तुश्चापेक्षणात्[1]'। अत एव **'सिद्धं तु प्रतिकारकं क्रियाभेदात् पचादीनां करणाधिकरणयोः कर्तृभावः[2]'** इति कारके सूत्रे वार्तिककृतोक्तम्। प्रधान-क्रियार्थेषु यथास्वं कारकव्यापारेषु पचादीनामेव निर्वृत्तिर्वर्णिता, तदेतद् भाष्ये उक्तम्— **'सामान्यभूता या क्रिया वर्तते, तस्या निर्वर्तकं कारकम्[3]'** इति। एतस्य विषयस्य स्फोरणार्थं भाष्यादिसन्दर्भः प्रदर्श्यते। तत्रत्यं भाष्यं चेत्थम्—

**'अपादानादीनां त्वप्रसिद्धिः[4]'** अपादानादीनां तु कर्तृत्वस्याप्रसिद्धिः। यथा हि भवता करणादीनां कर्तृत्वं निदर्शितम्, न तथाऽपादानादीनां निदर्श्यते। प्रदीपः—'न तथेति। न ह्यपादाने ग्रामे ग्राम आगच्छतीति प्रयोगोऽस्ति'। उद्द्योतः— 'भाष्ये अपादानादीनामिति। आदिना सम्प्रदानं बहुवचनं तु प्रयोगबाहुल्याभिप्रायेण। एवं च तयोः कारकसंज्ञाऽप्राप्तिरिति भावः'। 'न वा स्वतन्त्रपरतन्त्रत्वात्तयोः पर्यायेण वचनं वचनाश्रया च संज्ञा' इति।

भाष्यम्—**'न वा एष दोषः, किं कारणम्? स्वतन्त्रपरतन्त्रत्वात् सर्वत्रैव स्वातन्त्र्यं पारतन्त्र्यं च विवक्षितम्, तयोः पर्यायेण वचनम्। तयोः स्वातन्त्र्यपार-तन्त्र्ययोः पर्यायेण वचनं भविष्यति। वचनाश्रया च संज्ञा भविष्यति। तद् यथा बलाहकाद् विद्योतते विद्युत्, बलाहके विद्योतते। बलाहको विद्योतते'** इति।

प्रदीपः—'बलाहकादिति। निःसरणाङ्गे विद्योतने द्युतिर्वर्तते। बलाहके स्थित्वा ज्योतीरूपा विद्युद् विद्योतत इत्यर्थः। बलाहक इति विद्युतो बलाहकस्य चाभेद-विवक्षायामयं प्रयोगः' इति।

---

१. वा० प० ३।७।४६।
२. म० भा० १।४।२३।
३. तदेव।
४. तदेव।

**तत्रत्यभाष्यप्रदीपोद्द्योतानामयमाशयः**

यद्यप्यपादानस्थले तस्मिन्नेवार्थे कर्तृत्वमविवक्षया अपादानादीनां न भवति, यथा हि करणादीनाम्। एवं ब्राह्मणाय ददातीत्यर्थे ब्राह्मणो ददातीति प्रयोगाभावः। **शब्दशक्तिस्वाभाव्याच्चापादानसम्प्रदानव्यापारे धातुर्न वर्तते[1]'** इति। इति कैयटोक्त्या धात्वर्थभूता क्रिया तयोर्न वर्तते इति कारकत्वं कथम्? तथापि तत्र कारकत्वोपपत्त्यर्थं 'वस्तुतस्तु अपादानस्यावधिभावेनावस्थानं व्यापारोऽस्ति' सम्प्रदानस्याप्यनुमननादि-लक्षणः प्रतीयमानोऽपि व्यापारः कारकव्यपदेशनिबन्धनम्। यथा 'प्रविश पिण्डीम्' इति कैयटोक्त्या 'धात्वर्थाभावेऽपि ग्रामादिपदैरेव तस्य प्रतीत्या तन्निरूपितं कारकत्वं कारकशब्दघटकक्रुधात्वर्थत्वात् तस्य व्यापारस्येति भावः' इति। उद्द्योतोक्त्या च कारकत्वव्यपदेशार्थं तत्र कारकपदघटकक्रुधात्वर्थक्रियाश्रयत्वाच्च कारकत्वं संप्रदाना-पादानयोर्व्यवस्थापनीयम्।

वस्तुतस्तु नेयं वस्तुस्थितिः; किन्तु कारकत्वप्रयुक्तकार्यसम्पत्त्यर्थमेव तयोः कारकत्वं व्यवस्थाप्यते। 'संबन्धः क्रियाकारकपूर्वकः[2]' इत्यनेन शेषेऽपि क्रियायाः सत्त्वात् कारकत्वापत्तिः। तथा चोक्तं वाक्यपदीये—

**संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।**
**श्रुतायामश्रुतायां वा क्रियया सोऽभिधीयते[3]॥**

अत्रैव टीकायां 'कारकेभ्योऽन्यः कर्मादिविशेषलक्षणेभ्यः षड्भ्योऽन्योयं संबन्धः, स शेष इति उपयुक्तेतरवचनशेषशब्दाश्रयेण 'कारकाणामविवक्षा शेष' इति भाष्यं व्याख्यातम्। क्रियाकारकपूर्वक इत्यनेन कारकत्वं व्याचष्टे शेषस्य। तथाहि—'राज्ञः पुरुषः', 'वृक्षस्य शाखा', 'पशोः पादः', 'पितुः पुत्रः' इत्यादावश्रूयमाणक्रियाविषये स्वस्वामिभावावयवावयविभावजन्यजनकभावादौ सम्बन्धे ददाति-स्थिति-जन्यादिक्रिया-प्रभाविते पूर्वभाविकारकत्वमुत्तरावस्थायामप्यनुगतमिति भवत्येव शेषः कारकम्। राजा हि पुरुषाय ददाति, यतस्ततो राज्ञः पुरुष इति स्वस्वामिभावोऽवतिष्ठते। तत्र क्रियाकारकभावः सम्बन्धः कारणभूतः। शेषसम्बन्धस्तु फलभूतः। क्रियाकारकसंबन्धो हि वृत्तः स्वाश्रये शेषसम्बन्धफलं निवेश्योपरमते। तत्र पूर्वं कर्तृसम्प्रदानरूपौ राज-पुरुषावभूताम्। शेषसम्बन्धकाले तु कर्त्रादिविशेषरूपतानवगम इति तच्छेषभूतं सामान्यं कारकत्वमवतिष्ठत एव। अस्यां स्थितौ यथा संबन्धस्य न कारकत्वं तथैव सम्प्रदाना-पादनयोर्ज्ञेयम्[4]' इति।

वस्तुतस्तु पूर्वोक्तयुक्त्या चत्वार्येव कारकाणि अभ्युपगन्तव्यानि, तत्रैव धात्वर्थ-व्यापारस्य सत्त्वात्। सम्प्रदानापादानयोर्धात्वर्थो व्यापारो नास्तीत्यत्र भाष्यकैयटा-

---

१. महाभा० १।४।२२—प्रदीपः।
२. वा० प० ३।३।१७।
३. वा० प० ३।३।१।
४. वा० प० ३।३।१—टीकायाम्।

दीनामपि सम्मतिः। तस्माद् असंख्यायाः संख्या संज्ञेव कारकसंज्ञापि अकारकस्येति सर्वं सुस्थम्।

**हेतुसाधनयोर्भेदः**

अत्र प्रत्येकसाधनविषयेऽनुक्त्वा साधारण्येन मया यत् किञ्चिदुक्तम्। अधुना हेतुसाधनयोः प्रयोजकत्वसाम्येऽपि विषयभेदाद् भेदं दर्शयामि। तथा चोक्तं वाक्यपदीये–

**द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्।**
**कर्ता कर्त्रन्तरापेक्षः क्रियायां हेतुरिष्यते[1]॥**

एवं च हेतुर्द्विविधः, तत्र द्रव्यगुणक्रियान्यतमनिरूपितत्वे सति अव्यापारसव्यापारान्यतरवृत्तिरेकः, यद्यपि सव्यापारस्थले करणत्वस्यैव न्याय्यत्वादत्र हेतुत्वस्वीकारो न युक्तियुक्तः, तथापि तत्र सतोऽपि व्यापारस्याविवक्षया हेतुत्वमेव स्वीकार्यम्, न तु करणत्वम्। अपरो हेतुः, प्रयोज्यकर्तृशक्तिव्यवधाने क्रियायामप्रयुज्यमानः प्रयोज्यकर्तारं प्रेषयंस्तत्प्रयोजकः कारकविशेषो न त्वयं रूढो हेतुः। अयं कर्तृसंज्ञश्च **'तत्प्रयोजको हेतुश्च[2]'** इत्यनेन सूत्रेण तस्य सेतुसंज्ञा, कर्तृसंज्ञा च विधीयेते। इत्थं द्विप्रकारको हेतुः।

अस्मिन् पाणिनीये व्याकरणे एतादृशी पद्धतिः परिदृश्यते, यद् भगवान् पाणिनिरसन्दिग्धां पद्धतिं नेच्छति। अत एव शाब्दिकमूर्धन्योऽपि बहुपु स्थलेपु सन्देहोत्पादकानेव शब्दानुपन्यस्यति। यथा प्रकृत एव कर्तुः प्रयोजकस्य हेतुसंज्ञैव कृता। तस्याः प्रयोजनं **'हेतुमति च[3]'** इति सूत्रेण णिज्विधिः। **'हेतौ[4]'** इति सूत्रेणापि तृतीया विधीयते, तत्र च लौकिको हेतुर्गृह्यते। ईदृश्यामवस्थायां तादृश एव संज्ञाशब्दः प्रयोक्तव्यो यत्र संशयो मा भूत्। **'उभयगतिः पुनरिह भवति[5]'** इत्येतादृशस्य वचनस्योपयोगश्च नापेक्ष्येत।

वाक्यपदीयकारमतेन तादर्थ्येऽपि हेतुहेतुमद्भावोऽभ्युपेयते। तथाहि हेतुर्द्विविधः, एकः प्रातिलोम्योपलक्षितः, यथा काष्ठैः पचतितरामित्यादौ। तत्र हि काष्ठरूपहेतोरवस्थाऽपचीयमाना इति प्रातिलोम्योपलक्षितो हेतुः। यत्र ह्युपचिततरमेव कार्यं जनयत् कारणं तत्रानुकूल्योपलक्षितो हेतुः। बीजादङ्कुरो जायते इत्यादौ यथा बीजमुदकातपसंयोगेन आहितविशेषम् उच्छूनतरोच्छूनतमावस्थम् अङ्कुरप्रसवसमर्थम् इति द्वितीयः। तद्विशेषस्तु तादर्थ्यम्, अनुकूल्येनोपलक्षितो हिरण्यरूपो हेतुः कुण्डलरूपं कार्यं जनयतीति तादर्थ्यं हेतुहेतुमद्भावस्याद्भुतं रूपम्। अत्र हि कारणवाचकात् तृतीया न भवति चतुर्थ्यैव कारणगतधर्मस्य बोधनादुक्तार्थानामप्रयोग इति न्यायात्। तादर्थ्यस्याविवक्षणात् तु षष्ठी एव भवति यथा गुरोरिदं गुर्वर्थमित्यादौ।

---

१. तदेव–३।७।२५। २. अष्टा० १।४।५४। ३. तदेव–३।१।२६।
४. तदेव–२।३।२३। ५. तदेव–१।१।२३–पृ० ९।

**साधनविषये मतान्तराणि**

साधनविषये वाक्यपदीयकारो मतान्तराणि निर्दिशति। तत्र प्रथमं तावद् अनित्यानां पदार्थानां स्वशरीरादेव शक्तीनामुद्भवः। नित्यानां तु स्वाभाविकी शक्तिः। यदा सहकारिसन्निधाने कार्योद्युक्ता भावाः, तदा ते साधनमित्युच्यन्ते इत्येके।

केचित्तु क्रियायाः पूर्वं निमित्तान्तराच्छक्तयो जायन्ते। एवं सत्यपि शक्ताशक्तयोर्वस्तुनोः प्रत्यभिज्ञायमानत्वान्न वस्तुभेद इति वदन्ति।

कैश्चित्तु येनैव कारणेन क्रिया जन्यते, तेनैव शक्तय इति सहजत्वं मन्यते।

केचित्तु येनैव कारणेन क्रिया जन्यते, न तेनैव साधनमपि त्वन्येनैवेत्याहुः।

(१) अपूर्वं धर्माधर्माख्यमदृष्टसंज्ञकं भावं केचिदाहुः। अदृष्टवशादेव सर्वं भवति, न च भवति। इति अदृष्टमेव सर्वकार्याणां निमित्तम्।

(२) केचित्तु कालशक्तिमेव भगवतो ब्रह्मणः सम्बन्धिनः साधनमाहुः। कालशक्त्या अनुप्राणितं हि सर्वं क्रियायै प्रभवति।

(३) क्रियां वा राजसीमनन्तरोपवर्णितस्वरूपां साधनमाहुः। न तूत्तरकालभावि किञ्चन साधनं नाम शक्यं निरूपयितुम्। सर्वं क्रियामूलं साधनं व्याख्यातम्। तथा च पूर्वं साधनं क्रियामूलत्वेनोपन्यस्तम्। अधुना क्रियैव साधनमिति विशेषः।

(४) कालमेव वा नित्यमेकम् इत्यादिलक्षणलक्षितं द्रव्यं कालवादिनः साधनमाहुः। कालवशाद्धि सर्वे भावाः प्रभवन्ति, कार्यसम्पत्तये इति काल एव साधनम्।

**शक्तिः साधनमिति मते तासां भेदः**

पूर्वं शक्तिः साधनमित्युक्तम्। तत्रैकेषां मतेन तासां भेदमाह। अन्येषां मते च अर्थेषु नित्याः षट् शक्तयः पृथग्लक्षणलक्षिताः कर्माद्या व्यवस्थिताः। ताश्च यदि भेदेन समन्वितास्तर्हि अर्थस्य शक्तिरहितत्वान्नीरूपता स्यात्। अर्थाभिन्नाः कथ्यन्ते तर्हि विभिन्नकार्योदया नावतिष्ठन्ते। तस्माद् भेदाभेदसमन्विताः शक्तयोऽर्थजातिवदवस्थिताः। तासां च द्रव्यभेदादानन्त्येऽपि तत्त्वं षट् शक्तीर्नातिवर्तते। द्रव्यभेदेन भिन्ना शक्तिः, यथा दात्रमन्यथार्थं छिनत्ति खण्डोऽन्यथेति। आकारभेदेन खण्डोऽन्यथावयवी, दात्रं ह्यन्यथेति।

द्रव्याकारादिभेदेन ताश्चापरिमिता इव दृश्यन्ते। तत्त्वमासां तु षट् शक्तीर्नातिवर्तते। तथा चोक्तं वाक्यपदीये—

**द्रव्याकारादिभेदेन ताश्चापरिमिता इव।**
**दृश्यन्ते तत्त्वमासां तु षट् शक्तीर्नातिवर्तते[1]॥**

---

१. वा० प० ३।७।३६।

अत्रादिग्रहणाद्देशकालभेदेन सैव दहनशक्तिरग्निवैचित्र्यमुपपादयन्ती वस्तुनः स्वरूपं नातिक्रामति ।

अथवा एकैव शक्तिर्निमित्तभेदाद् विशिष्टरूपतया षोढात्वमापन्ना साधनम् । तथा चोक्तं तत्रैव—

**निमित्तभेदादेकैव भिन्ना शक्तिः प्रतीयते ।**
**षोडा कर्तृत्वमेवाहुस्तत्प्रवृत्तेर्निबन्धनम्**[1] ।। इति ।

यस्मात् कर्तृत्वमेव इष्टतमत्वादिना षोढावस्थितं सत् शक्तिभेदस्य प्रवृत्तेः कारकव्यवहारस्य निमित्तभूतम् । यथोक्तं पच्यन्तां विक्लित्त्यै, एधाः ज्वलिष्यन्तीति क्रिया करणस्य पाक इत्यादिन्यायेन कर्तृत्वमेवावान्तरव्यापारविवक्षया करणादिव्यपदेशं भजते ।

**शक्तिः भिन्ना**

तथा च शक्तिविषये मतान्तराण्युपन्यस्य सा शक्तिर्व्यतिरिक्ता, अव्यतिरिक्ता वेति विचार्यते । सर्वथा शक्तिशक्तिमतोर्भेदाभेदयोर्भेद एवेत्युच्यते । एवं च वैयाकरणानुसारिभिस्तत् सामर्थ्यं व्यतिरिक्तमेवोच्यते । लोकप्रतीत्यनुसारेण हि शब्दस्यार्थो वितन्यते । अव्यतिरेके हि सततं क्रियानिष्पत्तिप्रसङ्ग इति ।

इदानीं वैयाकरणमताद् भिन्नं मतमुपपादयति वैयाकरणनयेन तत् सामर्थ्यं व्यतिरिक्तमेवोच्यते । तथा हि—

**परमार्थे तु नैकत्वं पृथक्त्वाद् भिन्नलक्षणम् ।**
**पृथक्त्वैकत्वरूपेण तत्त्वमेव प्रकाशते**[2] ।।

इत्युक्तं वाक्यपदीये ।

परमार्थे तु पृथक्त्वव्यतिरिक्तमेकत्वं नास्ति, इति पृथक्त्वैकत्वरूपेण तत्त्वमेव प्रकाशते । अविद्यादशायां पृथक्त्वेन प्रकाशते । अविद्याविलये त्वेकत्वेन प्रतीयते ।

असन्दिग्धं यत् पृथक्त्वं तद् एकत्वान्न भिद्यते । एतच्चैकत्वम्, तत् पृथक्त्वान्न भिद्यते । तथा चैकमेव सच्चिन्मयं शब्दब्रह्म आकाशः, पृथिवी, वायुः, सूर्यः, समुद्रः, सरितः, दिश इत्यादिसर्वमप्यन्तःकरणतत्त्वस्य भागा बहिरवस्थिता इत्येवंरूपेण प्रत्यवभासते ।

इदानीं वैयाकरणमतमेव सिद्धान्तयति । तन्मतेन अव्यतिरेके सत्यपि प्रकृत्यर्थस्य वृक्षे, वृक्षाय इत्यादौ विभक्त्यर्थस्य साधनलक्षणस्य भेदः ।

द्वयोः स्थलयोर्वृक्षरूपाया एकस्याः प्रकृतेः सत्त्वेऽपि विभक्तिभेदादर्थभेदप्रतीतिरिति मन्यामहे **'अस्ति कश्चिद् व्यतिरिक्तः साधनलक्षणशक्तिशब्दवाच्योऽर्थ इति साधनसिद्धिः**[3]**'** इति ।

---

१. वा० प०–३।७।३७ । २. वा० प० ३।७।३९ । ३. वा० प० ३।७।४३–टीकायाम् ।

अद्यावधि साधनस्वरूपमभिधाय तद्विशेषस्य व्याख्येयस्य स्वरूपमाह वाक्यपदीये—

**सामान्यं कारकं तस्य सप्ताद्या भेदयोनयः।**
**षट् कर्माख्यादिभेदेन शेषभेदस्तु सप्तमी[1] ॥**

तथा च कर्मादिभेदेन षट् कारकाणि सन्ति, शेषभेदेन सप्तमी शक्तिरिति सप्त शक्तयो लक्ष्यन्तेऽधुनेति विशेषतो विवरणं प्रतिमायां भविष्यति।

अस्मिन् साधनविचारे वाक्यपदीयानुसारं क्वचिच्च महाभाष्यानुसारमपि साधनं प्रस्तुतम्। वाक्यपदीये हि न हि विशुद्धं वैयाकरणमतमेव समुपन्यस्तम्, किन्तु **'सर्ववेदपारिषदम्'** इदं शास्त्रमिति शब्दसाधुत्वविषयकं वाक्यपदार्थविषयेऽपि सञ्चारितम्। भूमिकाया विस्तरभिया न हि मया विशकलिततया पदार्थाः स्फोरिताः, नाप्यस्मिन् साधनस्वरूपप्रदर्शने साधनविशेषाः समुट्टङ्किताः, किन्तु अत्यन्तं संक्षिप्ततया केवलं दिग्दर्शनमेव कृतम्। प्रतिमायां भगवद्दयया पूरयिष्यमाणायां वैयाकरणमतं पार्थक्येनोपन्यसिष्यत इति साम्प्रतमेतावतैव सन्तोष्टव्यम्।

● ● ●

---

१. वा० प०–३।७।४४।

# क्रियानिरूपणाध्यायः

तत्रात्यन्तमपरिदृष्टायाः क्रियाया निरूपणमन्यनिरूपणापेक्षया दुष्करमिति तत्स्वरूपं प्रदर्श्यते। भूवादिसूत्रे **'पाठेन वा धातुसंज्ञायां समानशब्दप्रतिषेधः', 'परिमाणग्रहणं च वा'** इत्याभ्यां वार्तिकाभ्यां क्रमशः टावन्तयाशब्दस्य भ्वेध इति समुदायस्य च धातुत्वं वारितम्। ततः **'क्रियावचनो धातुः'** इति वार्त्तिकमुपन्यस्य तद्वार्त्तिकद्वयं निष्फलीकृतम्। तथा च भ्वेध् इति समुदायस्य उक्तयाशब्दस्य च क्रियावाचित्वाभावाद् धातुत्वं न भवति[1]। तत्र का पुनः क्रिया? ईहा[2]। का पुनरीहा? चेष्टा। का पुनश्चेष्टा? व्यापारः। तदनन्तरं सर्वथा भवान् शब्दैरेव शब्दानाचष्टे, न किञ्चिदर्थजातं निर्दिशति एवंजातीयका क्रियेति उपहस्य **'क्रिया नामेयमत्यन्तापरिदृष्टाऽशक्या पिण्डीभूता निदर्शयितुम्, यथा गर्भो निर्लुठितः। सासावनुमानगम्या'** इति।

**द्रव्यस्थले अवयवप्रत्यक्षत्वम्, क्रियाया अवयवस्यापि न प्रत्यक्षत्वम्**

तथा चावयवरूपक्रियाया अप्यप्रत्यक्षत्वमेव, अन्यथा घटावयवदर्शनेन लोके घटस्य यथा प्रत्यक्षत्वव्यवहारो भवति, तथैवात्रापि क्रियाया अवयवप्रत्यक्षत्वे क्रियाया अपि प्रत्यक्षत्वं स्यात्, भवति तु न हि। अत एव उद्द्योते—**'इदं च योगिप्रत्यक्षविषयं तेषामेवावयवक्रियाप्रत्यक्षात्। अस्माकं तद्व्यवहारपरम्परया सर्वथा विकल्पात्मक एव प्रयोगः क्रियापदानामिति बोध्यम्'**। एतच्च **'वर्त्तमाने लट्[3]'** इति सूत्रे ध्वनितम्।

---

१. 'भ्वेध' इति समुदायस्य धातुत्वापादनेन अर्थनिर्देशस्याधुनिकत्वं समायाति। परं 'चुटू' (१–३–७) इति सूत्रे भाष्ये 'उबुन्दिर् निशामने', 'स्कन्दिर् गतिशोषणयोः' इति कथनेन न हि सर्वोऽप्यर्थनिर्देश आधुनिकः; किन्तु क्वचिदेवेति भ्वेध इत्यत्रावयवानां वाचकत्वेऽपि दशदाडिमादिवत् समुदायोऽनर्थक इति भाव इति कैयटः।

२. मानसव्यापार इच्छारूप ईहा। 'इच्छाकाङ्क्षा स्पृहेहातृट्' इति कोशात् 'समानमीहमानानाम्' इति भाष्यप्रयोगाद् 'ईहं चेष्टायाम्' इत्यर्थनिर्देशाच्चेति भावः।

कैयटः—यावद् द्रव्यव्यतिरेकेण क्रियासद्भावे प्रमाणं न प्रोक्तम्, तावत् पर्यायोपादानमात्रेण तस्याः स्वरूपं न निश्चीयत इत्यर्थः। उद्द्योतः—स्वरूपम्–द्रव्यव्यतिरेकः। अर्थेति। अत्रेदं तत्त्वम्—कारकं न क्रिया, तस्यां कारकानन्वयापत्तेः कारकाणां मिथः सम्बन्धायोग्यत्वात्। तस्माद् द्रव्यातिरिक्तक्रियासिद्धेः सर्वथेत्युपहासः कारकातिरिक्तक्रिया प्रत्यक्षेण नोपलभ्यत इत्येवंपरो वाच्यः। स चेष्ट एवेति गूढाभिसन्धिप्रत्युपहासपरं क्रिया नामेत्यादि भाष्यम्।

३. अष्टा० ३।२।१२३।

यद्यपि कैयटे एकैकस्य क्षणस्य प्रत्यक्षत्वं दर्शितम्, तथापि तत्र क्षणशब्दस्य अधिश्रयणाद्यर्थत्वं मन्तव्यम्। अयोगिनां क्षणस्याप्रत्यक्षत्वात्।

**अधिश्रयणादिरपि समूहरूप एव**

परे तु अधिश्रयणादिरपि नैकक्षणात्मकस्तस्यापि हस्तप्रसारणपात्रादानचुल्लीसंयोजनादयोऽवयवाः सन्त्येवेति सोऽपि समूहरूप एव। यस्तु तेषामप्यवयवः परमाणुप्रख्यः, स तु शब्दशक्तिस्वाभाव्यान्नैव वाच्यो नापि प्रत्यक्षः। अनुमानं त्वेवम्—उत्तरदेशसंयोगादिफलं कारणजन्यं कार्यत्वादिति। तच्च कारणं प्रसिद्धातिरेकि इतरबाधबलात् क्रियारूपमेव सिध्यतीति भाष्यतात्पर्यमित्याहुः। एवं स्थितौ भाष्ये **'कारकाणां प्रवृत्तिविशेषः क्रिया[1]'** इति लक्षणं कृतम्। अत्र हेलाराजः 'सर्वेषां वा कारकाणामेकः प्रवृत्तिविशेषः प्रतिकारकं भिन्ना वा प्रवृत्तिरिति आद्ये पक्षे फलभूता भूति—पक्त्यादिका अन्या वेति द्वैतम्। तत्र न तावत् सर्वेषामेकः प्रवृत्तिविशेषः, असम्भवात्। तस्मात् प्रतिकारकं भिन्ना वा प्रवृत्तिः क्रिया। इत्थं च क्रियावाची धातुरिति सकलकारकाभिधायी धातुः प्राप्तः। परन्तु कर्तृकर्मणोर्लकारोत्पत्तेस्तद्व्यापार एव लान्तात् प्रतीयते[2]' इत्येकीयमतम्।

**करणादिव्यापारे एव धातोर्वृत्तिर्न सम्प्रदानादिव्यापारे**

अन्ये मन्यन्ते सम्प्रदानादिव्यापारे धातोर्न वृत्तिः, करणादिव्यापारे एव तु वृत्तिः। तथा च करणादावेव स्वातन्त्र्यविवक्षा नापादानादौ। इत्थं चाधिश्रयणोदकसेचनादिना कर्त्रादीनामेव व्यापारः क्रियेति क्रियायाः स्वरूपमात्रं कथितं न तु धातुवाच्यत्वम्।

अन्ये तु विशेषपदे भरं कृत्वा प्रवृत्तीनां विशेषः प्रवृत्तिविशेष इति सकलकारकजन्या विक्लित्यादिरूपा भूतिः फलभूता कारकप्रवृत्तेः क्रियेति व्याचक्षते।

**कर्तृव्यापार एव सर्वत्र धात्वर्थः**

अपरेषां पुनः कारकमत्र प्रधानं विवक्षितं कर्तृरूपम्, न पुनरप्रधानं करणादि। बहुवचनं त्वनेकक्रियाभेदेन कर्तृभेदात्। कर्तृग्रहणमेव न कृतं कर्मणि लकारदर्शनात्, तस्य व्युदासो मा भूदिति। तेन यत्र सम्भवति कर्म, तत्र तद्व्यापारोऽपि क्रिया अग्रे कर्मणोऽसर्वविषयत्वात् कर्तैव प्रधानं कारकमत्र विवक्षितमित्युक्त्वापि कर्तृव्यापार एव सर्वत्र धात्वर्थ इतीदं दर्शनम्।

**सकलकारकानुयायिक्रिया**

अन्ये तु **'सामान्यभूता क्रिया वर्तते'** इत्येतद्भाष्यानुसारेण प्रवृत्तिमात्रमगृहीतविशेषं सकलकारकानुयायि क्रियेति मन्यते।

---

१. महाभा० ३।२।१२३। २. तत्रैव टीकायाम्।

**व्यक्तिवादेन क्रियालक्षणोऽपोद्धारपदार्थः**

'षड् भावविकारा भवन्ति' इति निरुक्तकारवचनाद् भावशब्दाभिधेयायाः सत्तायाः समस्तक्रियायोनित्वे मूलभूताया क्रियात्वं प्रत्यस्या न विवादः। तदेवं साधनेभ्यो भिन्ना क्रिया, साधनेभ्यश्चान्यद् भवद् वस्तु किमन्यत् साध्यात् स्यादिति साधनस्वभावा क्रिया धातुवाच्या।

एवं तावद् व्यक्तिवादेन क्रियालक्षणोऽपोद्धारपदार्थो निर्णीतः। इदानीं जातिवादेनाह वाक्यपदीये—

**जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम्।**
**असाध्या व्यक्तिरूपेण सा साध्येवोपलभ्यते**[1]॥ इति।

**क्रियासमवेता जातिर्धातुवाच्या**

सर्वत्र प्रत्ययानुवृत्तिप्रमाणसाधिता जातिरिति पचतीतिप्रत्ययस्य कर्तृकर्मादिभेदेऽप्यनुवृत्तेः क्रियाव्यक्तिसमवेता जातिरवश्याभ्युपगन्तव्या। सैव धातुवाच्या स्फोटवच्चास्याः क्षणैरभिव्यक्तिः।

यस्याः क्रियाव्यक्तेरनन्तरं फलं निर्वर्तते, तत्र समवेता या जातिः, सैव क्रिया, पूर्वास्तु तादर्थ्यात् क्रियाः। स्वाश्रयनिष्पादनद्वारेण चास्या अपि साधनयोगः साध्यत्वं च। इयं च अपरा जातिः। परा सत्ता नाम **'सम्बन्धिभेदात् सत्तैव'** इत्यादिकारिकया प्रतिपादिता **'भाव एव हि धात्वर्थ इति षड् भावविकारा भवन्ति'** इति वार्ष्यायण्युक्त्या समुपोद्बल्यते।

बुद्धिः शब्दार्थ इति मते क्रियाव्यवस्थामाह—

**बुद्धिं तज्जातिमन्ये तु बुद्धिसत्तामथापरे।**
**प्रत्यस्तरूपां भावेषु क्रियेति प्रतिजानते**[2]॥ इति।

अत्र बुद्धिपदेन बुद्धिकल्पिताकारो विवक्षितः। तस्यैव भावेष्वध्यारोपो दृश्यविकल्पयोरभेदाध्यवसायात्। पूर्वोक्तरीत्या मतभेदेनात्र जातिव्यक्ती क्रिये। महासामान्यं वा सत्ता, बुद्ध्याकारसमवायिनी सत्ता क्रियाभावेष्वध्यारोपिता च। तदाश्रयेण साधनाकाङ्क्षा साध्यत्वं च सर्वमुपपद्यते। सत्तायाः क्रियात्वे **'सैव भावविकारेषु षडवस्थाः प्रपद्यते'** इत्युक्तम्। तथा चोक्तं वाक्यपदीये—

**आविर्भावतिरोभावौ जन्मनाशौ तथा परैः।**
**षट्सु भावविकारेषु कल्पितौ व्यावहारिकौ**[3]॥ इति।

---

१. वा० प० ३।८।१०।    २. तदेव–३।८।२४।
३. वा० प० ३।८।२५।

**द्वयोर्भावविकारयोः षट्स्वन्तर्भावः**

सत्कार्यनये पदार्थानामाविर्भावः, अभिव्यक्तिरेवोत्पत्तिः। तिरोभावश्च ध्वंसः। असत्कार्यनये तु जन्म अपूर्वोत्पत्तिः, विनाशश्च लय इत्येतौ दर्शनभेदेन भिन्नौ द्वौ भावविकारौ षट्सु मध्ये परिकल्पितौ = व्यवहारप्रसिद्ध्यारोपितौ।

इदानीं षड् भावविकारा भवन्तीति निरुक्तसन्दर्भं वाक्यपदीये समुपक्षिप्तं दर्शयामि—

**ताभ्यां सर्वप्रवृत्तीनामभेदेनोपसंग्रहः।**
**जन्मैवाश्रितसारूप्यं स्थितिरित्यभिधीयते**[1] ॥ इति।

अस्याः कारिकायाः स्वारसिकोऽर्थस्तु प्रतिमायां प्रकटयिष्यते। हेलाराजेन तु कारिकार्थं क्रोडीकृत्यातिविस्तृता व्याख्या प्रदर्शिता। हेलाराजस्येयं रीतिः सर्वत्रैव कारिकाव्याख्यानेऽवलोक्यते। सर्वः क्रियाकलापो जन्मनाशाभ्यामभिन्नः। उपचयापचयौ हि धर्मान्तरस्याविर्भावतिरोभावरूपौ मन्तव्यौ। तथा हि पूर्वावस्थायाः परावस्थयाश्च मध्ये वर्तमानं वस्तु जायत इति पदेनोच्यते। अर्थात् सैव सत्ता यदा पूर्वावस्थां जहाति, उत्तरावस्थां चाङ्गीकुर्वती आस्ते, तदा द्वयोरवस्थयोर्मध्ये जायते पदेनाभिधीयते। आत्मलाभोन्मुखं वस्तु समासादितरूपं सव्यापारमिव अस्तीतिपदेनाख्यायते। तथा च अस्तित्वमात्मलाभपर्यायमाविर्भावरूपस्य जन्मन एवोत्तरावस्थाविशेषः। यावच्च सदृशसन्तानप्रवाहस्तावदलक्षितविवेको भावोऽस्तीत्येवमभिधीयते। अस्त्यात्मानं बिभर्त्येव न ध्वंसत इत्यर्थः।

विसदृशसन्तानोपजनेऽर्थभेदेन विपरिणमत इति व्यपदिश्यते, तत्त्वादप्रच्युतं वस्तु। यदाह निरुक्तकारः—**'विपरिणमत इति अप्रच्यवमानस्य तत्त्वाद् विकारमाचष्टे'**[2] इति। अत्रैवोपचयविवक्षायां वर्धत इति यदाह निरुक्तकृत्—वर्धत इति स्वाङ्गाभ्युच्चयं संयोगिनां पदार्थानामाचष्टे' इति। वर्धते शरीरेण वर्धते विजयेन इति। अपचयविवक्षायां तु पूर्वमपक्षीयत इति तदनन्तरं विनश्यतीति तिरोभावाभिधानमवस्थाद्वयेन यदाह, स एव अपक्षीयत इति स्वाङ्गापचयं संयोगिनामर्थानामाचष्टे, विनश्यतीति पूर्वभावस्यान्तमाचष्टे इति। पूर्वभावोऽस्तित्वमुच्यते। ताभ्यां द्वाभ्यामाविर्भावतिरोभावाभ्यां षड् व्याप्ताः। तत्राव्याप्तिर्भाष्यकृतोद्भाविता। सर्वथा स्थित इत्यत्र धातुसंज्ञा न प्राप्नोति। बाह्यो हि एतेभ्यस्तिष्ठतिः इत्याशङ्क्य तिष्ठतेरपि क्रियात्वं **'जन्मैवाश्रितसारूप्यं स्थितिरित्यभिधीयते**[3]' इति जायत इतिवत् तिष्ठति इत्यपि सिद्धम्।

किं बहुना जन्मनाशावपि नार्थान्तरभूतौ, अपि तु सत्तैव धात्वर्थः सर्वत्रेत्याह—

---

१. वा०प०—३।८।२६। २. निरुक्तम्—१।२, पृ० २३—२४। ३. वा० पा० ३।८।२६।

**जायमानान्न जन्मान्यद् विनाशोऽप्यपदार्थता ।**
**अतो भावविकारेषु सत्तैका व्यवतिष्ठते[1] ॥**

**सत्ताया एव साध्यत्वं साधनत्वं च**

धर्मातिरिक्तो धर्मी नास्ति, एवं सतो निरन्वयध्वंसविरोधाच्च विनाशोऽपि न व्यतिरिक्तः पदार्थः कश्चित् । एवं च षट्सु भावविकारेषु सत्यभूता सत्तैव महासामान्यस्वभावा । तस्याश्च नित्याया अपि आख्यातवाच्यत्वेन साध्यत्वम् । नामपदवाच्यत्वेन तु साधनत्वम् । जातस्य वस्तुनः पूर्वावस्थाविशेषो जन्म कथ्यते । यद्वशादसौ पदार्थो जात इति व्यपदिश्यते । तच्च जन्म निमित्तत्वेन साधनानां सव्यापारत्वे विवक्षिते पूर्वापरीभूतं जायतेशब्दगोचरः क्रिया भवति । अनया रीत्या असौ साध्यरूपोऽर्थ आख्यातशब्दैर्जायत इत्यादिभिरभिधीयते । नामशब्दैस्तु सिद्धरूपार्थाभिधानमनुसरणीयम् । यथा च जन्म पूर्वभागस्वभावम्, तथा विनाशोऽपि उत्तरभागस्वभाव इति केषाञ्चिन्मतम् । तद्यथा—

**फलं फलापदेशो वा वस्तु वा तद्विरोधि यत् ।**
**तदन्य एव पूर्वेषां नाश इत्यभिधीयत[2] ॥** इति ।

फलं कार्यरूपं कारणविरुद्धं विनाशपदेनोच्यते । यथा ग्रामं गच्छतो देवदत्तस्य यो व्यापारस्तस्य यत् फलम्, तस्य ज्ञानस्य विनाशो नान्यत् किञ्चित् । अनया रीत्या धर्माधर्मयोः सुखदुःखसंवेदनम् । अपरं फलापदेशो न तु वस्तुतः फलम् । यथा मुद्गराभिघाताज्जायमाना घटस्य कपालादयः, शीर्णस्य पटस्य तन्तवः फलत्वेनापदिश्यमाना विनाशव्यपदेशमासादयन्ति ।

ननु वस्त्वन्तरं कथं वस्तुनो विनाश इत्याशङ्क्याह—

**नैवास्ति नैव नास्तीति वस्तुनो ग्रहणाद् विना ।**
**कल्पते पररूपेण वस्त्वन्यदनुगम्यते[3] ॥** इति ।

यथा कस्यचिद्रूपस्यानुगमं विना अस्तीति व्यवहारो न कल्पते, तथा नास्तीत्यपि इति दृष्टान्तगर्भाभिधानम् । यथा संसर्गिवस्तुनो रूपस्याविवेकेन न कश्चिदपि वस्तुनो व्यवहार इति, यथा सत्ताभिसन्धानादिना अस्तीति व्यवह्रियते, तथा फलाद्युपजने नास्तीति व्यवहारोऽपि युज्यते । भावप्रतियोगी ह्यभावः, स च शून्यतारूपो न युज्यते अकिञ्चिद्रूपस्य प्रत्येतुमशक्यत्वात् । न हि प्रत्ययश्च जायते प्रत्येतव्यं च नास्तीति युज्यते । तस्माद् वस्त्वन्तरं फलाद्येव विशेषनाश इति युक्तमुच्यते । पररूपेणैव हि वस्तुनो ब्रह्मकल्पस्यान्यान्यरूपतया व्यवहारावतरणम् ।

---

१. तदेव—३।८।२८ । २. वा० प० ३।८।३१ । ३. तदेव—३।८।३२ ।

दर्शनान्तराश्रयेण व्यापकं प्रधानतत्त्वं क्वचिद् देशे काले वा तनुतामापद्यते, साऽवस्था नाश इत्युच्यते। क्वचित् तदेव व्यापकं वस्तु स्वनिमित्तवशात् सङ्घातरूपतां भजते, इति साऽवस्थाविर्भावात्मिका इति जायत इत्युच्यते। तदेवं निरुक्तकारमताश्रयेण भावविकारा व्याख्याता:, एतत् सर्वं परिणामवादेनोक्तम्।

वाक्यपदीये हि क्वचित् परिणामवाद:, क्वच्चि विवर्तवाद इति द्वयोरप्युपन्यासात् कतर एको भर्तृहरेरभीष्ट इति निश्चेतुं न पार्यते।

यद्वा निष्क्रिय एको व्यापकः परब्रह्माभिधानो भावोऽचिन्त्यप्रभावशक्तियुक्तो जन्मनाशव्यवहारमविद्यादशायां वर्तयति। न तु भावतो जन्मनाशौ क्वचित् स्तः।

अधुना विवर्तवादानुसारेणोच्यते—

**सर्वरूपस्य तत्त्वस्य यत् क्रमेणैव दर्शनम्।**
**भागैरिव प्रक्लृप्तैश्च तां क्रियामपरे विदुः॥** इति।

सर्वकल्पनातीततत्त्वमपि ब्रह्म समाविष्टसर्वशक्तित्वात् सार्वरूप्येणावभासमानं कालाख्यशक्तिप्रवर्तितक्रमावभासं पूर्वापरीभूतावयवसमाहारात्मिकां क्रियाप्रतिपत्तिमुपजनयति साध्यस्वभावभावविषयाम्। सिद्धस्वभावविषये तु दिक्शक्तिप्रकल्पितभागभेदप्रकल्पनाद्, मूर्तिप्रविभागमारचयति। इदानीं सत्ताद्वैतदर्शनेन षड् भावविकारा भवन्तीति निरुक्तकारमतमेव निगमयितुमाह—

**सत्ता स्वशक्तियोगेन सर्वरूपा व्यवस्थिता।**
**साध्या च साधनं चैव फलं भोक्ता फलस्य च॥** इति।

इयं हि कारिका हेलाराजेन निरुक्तटीकाकारमतानुकूल्येन व्याख्याता। तथा च सैव सत्ता सर्वशब्दानां विषयः। एवं च सैव स्वशक्तिरूपोपाधिनियमितशरीर सर्वात्मकत्वमनुभवन्ती सिद्धसाध्यरूपतया नामाख्यातपदवाच्यतामनुभवति, तद्भिन्नस्य पदार्थान्तरस्याभावाद् विचित्रशक्तित्वाद् भोग्यभोक्तृसाधनरूपतया विश्वयात्रामुद्वहति। सर्वत्र भोक्त्रादिषु सन्मात्रस्य संविद्रूपस्यानुगमात् तस्यैव सत्यता, विकल्पपरिघटितस्तु नानाव्यवहार इति सर्वाद्वैतिषु समानमेतत्।

अनया रीत्या शब्दाद्वैतवादोऽपि स्वाभिमतत्वेन समुपन्यस्तः। एतावत्पर्यन्तं साधारण्येन क्रिया समुद्दिष्टा, विशेषतस्तु शुद्धं व्याकरणाभिमतं तत्स्वरूपं पक्षान्तरोपन्यासपूर्वकं प्रतिमायां प्रकटयिष्यत इति शम्।

**सूत्रादिषु कालसामान्यविशेषयोरुपन्यासः**

क्रियानिरूपणानन्तरं **'क्रियाभेदाय कालस्तु'**[1] इति सदुक्त्यनुसारं कालो निरूप्यते। तत्र पाणिनिसूत्रे कालविषयकाणि बहूनि सूत्राणि वार्त्तिकानि च तदवान्तर-

१. वा० प० ३।९।२।

भेदसंभिन्नानि सन्ति। यथा **'समां समां विजायते'**, **'संख्यायाः संवत्सरसंख्यस्य च'**, **'दामहायनान्ताच्च**[1]**'**, **'वर्षस्याभविष्यति**[2]**'**, **'वर्षाल्लुक् च**[3]**'** इत्यादिसूत्रेषु, **'दामहायनान्तात् संख्यादेः**[4]**'** इत्यादिषु वार्त्तिकेषु च वर्षात्मककालवाचकशब्दनिर्देशः कृत। **'अयनञ्च**[5]**'** इति सूत्रे अयनशब्दोपादानेन अयनात्मककालोऽपि निर्दिष्टः। **'अल्पाच्तरम्**[6]**'** इति सूत्रे भाष्ये **'शिशिरवसन्तावुदगयनस्थौ**[7]**'**; इत्यनेन अवान्तरभूतमयनमपि निर्दिष्टम्। **'ऋतोरण्**[8]**'**, **'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्**[9]**'** **'ऋतुनक्षत्राणां समानाक्षराणामानुपूर्व्येण**[10]**'**, **'ऋतोर्वृद्धिमद्विधावयवानाम्**[11]**'** इत्यादिषु सूत्रवार्त्तिकादिषु ऋतुसामान्यानि निर्दिष्टानि सन्ति।

**'हेमन्तशिशिरावहोरात्रे च च्छन्दसि**[12]**'**, **'हेमन्ताच्च**[13]**'** **'वसन्तादिभ्यष्ठक्**[14]**'**, **'वर्षाभ्यष्ठक्**[15]**'**, **'ग्रीष्मवसन्तादन्यतरस्याम्**[16]**'**, **'ग्रीष्मावरसमाद्वुञ्**[17]**'**, **'अव्ययीभावे शरत्प्रभृतिभ्यष्टच्**[18]**'** इत्यादिषु सूत्रेषु बहुषु स्थलेषु भाष्ये च ऋतुविशेषाः सङ्गृहीताः।

**'कार्त्तिक्या आग्रहायणी मासे**[19]**'**, **'मासाद्वयसि यत्खञौ**[20]**'**, **'पद्दन्नोमास्**[21]**'**, इत्यादिषु सूत्रेषु भाष्ये च मासस्योपादानं कृतम्।

**'पक्षात्ति**[22]**'** इति सूत्रे पक्षस्योद्देशः कृतः। **'कालाः परिमाणिना**[23]**'** इति सूत्रे मासस्य त्रिंशद्रात्रात्मकत्वमुपपादितमस्ति। किञ्च **'येन मूर्त्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमाहुः। तस्यैव हि कयाचित् क्रियया युक्तस्याहरिति च भवति रात्रिरिति च। कया क्रियया? आदित्यगत्या। तयैवासकृदावृत्तया मास इति भवति, संवत्सर इति च**[24]**'**। इत्यनया भाष्योक्त्या कालस्वरूपं परिचेतुं शक्यते।

**'सास्मिन्पौर्णमासीति**[25]**'**, **'विभाषा फल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः**[26]**'** इत्यादिभिः मासविशेषस्यापि सूचना सूत्रे भाष्यादौ च दत्ताऽस्ति।

**'फल्गुनीप्रोष्ठपदानां च नक्षत्रे**[27]**'** इत्यादिना सन्धिवेलादिगणे अमावास्यात्रयोदशी-चतुर्दशी-पञ्चमी-पौर्णमासी-प्रतिपदा तिथीनाम्, तथा **'अमावस्यदन्यतरस्याम्**[28]**'**

---

१. अष्टा० ४।१।२७। २. तदेव—७।१।१६।
३. तदेव—५।१।८८। ४. अष्टा० ४।१।२७–वार्तिकम्।
५. अष्टा० ८।४।२५। ६. तदेव—२।२।३४। ७. तत्रैव—वार्तिकम्।
८. तदेव—४।४।४९। ९. तदेव—४।३।१६। १०. तत्रैव–२।२।३४–वार्तिकम्।
११. तत्रैव–१।१।७२–वा०। १२. तदेव—२।४।२८। १३. तदेव–४।३।२१।
१४. तदेव—४।२।३६। १५. तदेव—४।३।१८। १६. तदेव—४।३।४६।
१७. तदेव—४।३।४९। १८. तदेव—५।४।१०७। १९. तदेव—२।३।२८।
२०. तदेव—५।४।८१। २१. तदेव—६।१।६३। २२. तदेव–५।२।२५।
२३. तदेव—२।२।५। २४. तत्रैव–महाभाष्यम्। २५. तदेव—४।२।२१।
२६. तदेव—४।२।२३। २७. तदेव—१।२।६०। २८. तदेव—३।१।१२२।

इति सूत्रे अमावास्यायाश्च **'साऽस्मिन्पौर्णमासीति'** सूत्रे च अमावास्यायाः पौर्णमास्याश्च निर्देशः कृतः। **'रात्राह्नाहाः पुंसि**[१]**', 'रात्र्यहः संवत्सराच्च**[२]**'** इत्यादौ रात्रेर्दिवसस्य चोपन्यासः कृतः।

**'सद्यःपरुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः**[३]**'** इत्यादौ **'हैयङ्गवीनञ्च संज्ञायाम्**[४]**'** इत्यत्र च गतवर्षाणां गतदिवसस्य च ग्रहणम्। **'श्वसस्तुट् च**[५]**'** इत्यादौ आगामिदिवसस्य चोपादानं कृतम्।

**'ऊकालोऽज्झ्रस्वदीर्घप्लुतः**[६]**', 'तपरस्तत्कालस्य**[७]**'** इत्यादिसूत्रैस्तु मात्रापरिमितोऽपि कालो गृहीतोऽस्ति।

एतावता पाणिनीयव्याकरणे कालविभागविषये बहूनि सूत्राणि पाणिनिना निर्मितानि सन्ति। **'वर्तमाने लट्', 'भविष्यति'** इत्यादिभिः सूत्रैः कालोऽत्यन्तं संरम्भेण सामान्यविशेषात्मकः संगृहीतोऽस्ति। स च भूतभविष्यद्वर्तमानभेदेन त्रिविधः। उत्पन्नध्वस्ता यदा क्रिया भवति, तदा क्रियोपाधिः कालो भूत इति व्यपदिश्यते। यदा संनिहितसाधनाः सम्भाव्यमानोदयाः क्रियाः, तदा तदुपाधिः कालो भविष्यत्तां प्रतिपद्यते। ते च भूतादयः कालविभागाः पुनरवान्तरभेदेन एकादशधा भिद्यन्ते। कथमिति चेद्? वाक्यपदीयकार आह—

**भूतः पञ्चविधस्तत्र भविष्यंश्च चतुर्विधः।**
**वर्तमानो द्विधा ख्यात इत्येकादश कल्पनाः**[८]॥ इति।

तत्र च हेलाराजेन सामान्यः प्रथमो भूतभेदः, अद्यतनो द्वितीयो भूतभेदः, अनद्यतनस्तृतीयः। अद्यतनानद्यतनसमुदायस्ताभ्यामन्यत्वाच्चतुर्थः[९]।

**'आद्यन्तौ टकितौ**[१०]**'** इति सूत्रे **'तेनायं विशेषेण शब्दान्तरं समुदायं प्रतिपद्यते'** इति भाष्येण अवयवात्समुदायोऽतिरिच्यते। **'सामान्यमपि यथा विशेषस्तद्वत्'** इति। परोक्षस्तु अनद्यतनभेद एव इति न पृथग् गण्यते।

---

१. अष्टा०—२।४।२९। २. तदेव—५।१।८७।
३. अष्टा० ५।३।२२। ४. तदेव–५।२।२३। ५. तदेव ४।३।१५।
६. तदेव–१।२।२७। ७. तदेव–१।१।७०। ९. वा० प० ३।९।३८।

टि० कारिकार्थलापने मार्गः—वस्तुतस्तु अस्याः कारिकाया अर्थो न हि समीचीनः। यतो हि अद्यतनभूतः कश्चिन्नास्तीति तदर्थं नैव कस्यचिल्लकारस्य विधानम्। एतदर्थं सामान्यभूतः, अनद्यतनभूतः, भविष्यति भूतवदतिदेशः अतिदिष्टो भूतः, क्रियातिपत्तिभूतः परोक्षानद्यतनभूतश्चेत्यनयैव रीत्या तद्भेदः स्वीकार्यः। एवं भविष्यन्नपि चतुर्विधः–सामान्यभविष्यः, अनद्यतनभविष्यः, अतिदिष्टभविष्य इति क्रियातिपत्तिभविष्यश्चेति। वर्तमानः, अतिदिष्टो वर्तमानश्चेति द्विविधो वर्तमानः। अनयैव रीत्या कारिकार्थोऽभिलापनीयः।

१०. अष्टा० १।१।४६।

१. यस्तु भविष्यन्नप्यतिदेशाद् भूतकार्याणि लभते, स पञ्चमो भूतभेदोऽध्यारोपित-भूतभावो गौणः। भविष्यत्सामान्यम्। अद्यतनः, अनद्यतनः, अद्यतनानद्यतनसमुदाय-श्चेति चत्वारो भविष्यद्भेदाः। यस्तु अनद्यतनवत्प्रतिषेधाद्भविष्यत्सामान्यकार्याणि प्रतिपद्यते, सोऽनद्यतनोऽपि शास्त्रव्यवहारे भविष्यत्सामान्यमेव[1]।

मुख्यो वर्तमान एकः। अमुख्यस्तु योऽतिदिष्टवर्तमानभावो भूतभविष्यतोः **'वर्तमानसामीप्ये[2]'** इति सूत्रविहितः, स द्वितीयः। तदेते शास्त्रकार्यप्रविभागार्थं कालस्य भेदाः कल्पिताः। न त्वसावियत्संख्यः।

अत्रेदं विचार्यतेः—स्वयमेव टीकाकारः 'तदेते' इत्यादिना कथयति। तथा च कालस्य भेदकल्पना तत्तत्कालावच्छिन्नक्रियावाचकधातुभ्यो लकारविधानप्रयुक्तैवा-भ्युपगन्तव्या। तत्र प्रथममनद्यतनभूते 'अनद्यतने लुङ्[3]' इत्यनेन लङ् विधीयते। अद्य-तने भूतेऽर्थे लकारविधायकं किञ्चित्सूत्रं नास्ति। तत्र अद्यतनत्वस्य भानं तेन रूपेण भवेदेव नहि; किन्तु तत्र 'लुङ्[4]' इति सूत्रेण भूते सामान्ये लुङ्विधानेन भूतसामान्य-त्वेनैव भानं स्यात्। अनद्यतनभूतस्य तु द्विधा भानं, परोक्षत्वेन शुद्धानद्यतनत्वेन च। एवं सति भूतस्य परोक्षानद्यतनत्वेन शुद्धानद्यतनत्वेन सामान्यत्वेन आतिदेशिकत्वेन क्रियातिपत्तित्वेन वर्तमानसमीपत्वेन च भानात् षड्विधमेव भूतं ग्राह्यम्।

भविष्यंश्च अनद्यतनत्वेन सामान्यत्वेन वर्तमानसमीपत्वेन क्रियातिपत्तित्वेन चतुर्विधमेव मन्तव्यम्। वर्तमानत्वं तु द्विविधमस्माभिरभ्युपगम्यते। अस्यां स्थितौ वाक्यपदीयोक्ता एकादशकालकल्पना चिन्त्या। एवं च द्वादशविधैव लकारविषयिणी कालस्थितिर्युक्तियुक्ता प्रतिभाति।

**स्वातन्त्र्यापरपर्याया कालाख्या शक्तिः**

अधुना सूत्रवार्तिकभाष्यवाक्यपदीयादिग्रन्थानां कालविषये सारांशो निर्दिश्यते। तथा हि **'स्वतन्त्रः कर्त्ता'** इत्यादिवचनचयैः शब्दब्रह्मणः स्वातन्त्र्यापरपर्याया कलाद्य-नेकावान्तरशक्तिविशिष्टा कालाख्या शक्तिः समुज्जृम्भते। सैव शक्तिर्निमित्तरूपमुपादन-

१. युक्त्या कालभेदस्वरूपम्—अत्रेदं रहस्यम्—तत्तत्कालभेदे किं मूलम्? यदि हि कालभेदः, उपाधिकल्पितम्, न तु शास्त्रविहितं मत्वा व्यवस्थाप्यते, तदा तु अनन्ता भेदा भवेयुः। एतदर्थं शास्त्रकृद् यदि उपाधिं परिकल्प्य तत्र लकारं विदधाति, तदा तत्प्रयुक्तभेदेनैव भूतादिकालभेदः स्वीकार्यः। अनया रीत्या भूतस्तावद् अनद्यतनत्वेन, परोक्षानद्यतनत्वेन, सामान्यत्वेन, अतिदिष्टत्वेन, वर्तमानसमीपत्वेन, क्रियातिपत्तित्वेन च भिद्यते। एवं भविष्योऽपि अनद्यतनत्वेन, वर्तमानसमीपत्वेन, सामान्यत्वेन, क्रियातिपत्तित्वेन चेति दिङ्-मात्रमेतत्। एवं वर्तमानः सामान्यत्वेन आतिदेशिकत्वेन चेति तद्द्विधा भिद्यते इति। विशिष्टोविचारः प्रतिमायां भविष्यति।

२. अष्टा० ३।३।१३१। ३. अष्टा०–३।२।१११। ४. तदेव—३।२।११०।

रूपञ्च धत्ते। एवञ्च जन्मादिमय्यः शक्तयस्तद्विज्जृम्भितमेव। सैवात्र अभ्यनुज्ञाशक्ति-पुरस्कारेण विश्वं सृजति। प्रतिबन्धशक्तिं पुरोधाय विश्वं विलापयति। तथा चोक्तं वाक्यपदीये—

**एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।**
**अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते॥**
**अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।**
**जन्मादयो विकाराः षड् भावभेदस्य योनयः[1]॥**

इति वाक्यपदीयात् कालाख्यस्वातन्त्र्यशक्त्या सर्वाः परतन्त्रा जन्मवत्यः शक्तयः समा-विष्टाः। कालशक्तिवृत्तिमनुपतन्ति, ततश्च प्रतिभावं वैश्वरूप्यस्य प्रतिबन्धाभ्यनुज्ञाभ्यां शक्त्यवच्छेदेन क्रमवानिवाभासोपगमो लक्ष्यते। ततश्च सैव कालख्या शक्तिः प्रतिबन्धा-भ्यनुज्ञाख्यावान्तरशक्तिव्यपाश्रयेण विश्वं सृजति, संहरति चेति निष्कृष्टोऽर्थः।

अपि च तत्रैव कालसमुद्देशे अभिन्नेन कालेन व्यवहर्त्तुमशक्यतया क्रियोपाधिः भूतभविष्यवर्तमानभेदाद् अभिन्नोऽपि कालो भिद्यते। एकस्यैव कालस्य तिस्रः शक्तयः सन्ति। तत्र भूतशक्तिसम्बन्धेन प्रध्वंसाभावः, भविष्यसम्बन्धेन च प्रागभावः प्रतिपाद्यते। वर्तमानशक्तिसम्बन्धेन सतां भावानामभिव्यक्तिर्जन्म कथ्यते। तत्र प्रथमं प्रतिबन्धाभ्यनुज्ञात्मकं शक्तिद्वयमुपन्यस्तम्। तत्र प्रतिबन्धशक्तिर्भूतभविष्यभेदेन द्विधा भिद्यते।

अभ्यनुज्ञाशक्तिस्तु स्वरूपसत्येव विद्योतते। अतीतानागतावध्वानौ भावावरण-हेतुत्वात्तमःस्वभावौ। आवरणं हि तमोधर्मः **'गुरुवरणकमेव तमः[2]'** इति सांख्यकारि-कायामुक्तत्वाद् वर्तमानोऽध्वा प्रकाशतुल्यः सत्त्वसदृशः। **'सत्त्वं लघुप्रकाशकमिष्टम्[3]'** इत्युक्तेः। रजस्तु प्रवृत्तिसामान्यं कालस्वरूपं सर्वत्रान्वयि। प्रतिबन्धाभ्यनुज्ञाभ्यां प्रवर्तकं प्रेरणानुरूपं रजः कालात्मकमेव। अनेन एतत् सूच्यते यद् विश्वात्मा एक एव, परब्रह्माभिधानः सत्यो भावः स एव नानाविधकार्यकारितया अनन्तशक्तित्वेन व्यव-ह्रियते। तथा च क्रमिकांश्चक्रभ्रमिवत् परावर्तमानान् भावान् प्रकाशयन् कालयति भूतानीत्युच्यते। स विभुः स्वतन्त्रश्च। अत एव स्वातन्त्र्यशक्तिः काल इति **'अध्याहित-कलां यस्य[4]'** इत्यादिना सिद्धान्तितम्।

कालसमुद्देशे च—**'शक्त्यात्मदेवतापक्षैर्भिन्नं कालस्य दर्शनम्[5]'** इत्यनेन कालाख्या स्वातन्त्र्यशक्तिर्ब्रह्मण इति भर्तृहरेरभिप्राये सत्यपि व्याख्यातारः कारणशक्ति-रेव काल इति व्याचक्षते।

---

१. वा० प० १।२–३। २. सां० का० १३। ३. तदेव–१३।
४. वा० प० ३।९।३। ५. तदेव–३।९।६२।

तथा हि बीजशक्तिरङ्कुरोपलम्भमभ्यनुजानती काण्डप्रसवञ्च तदानीं प्रतिबध्नती कालकार्यकरणात् कालः। एवमङ्कुरादिशक्तावपि यथोत्तरमनन्तकार्यजननाद् व्यवहित-तत्कार्यप्रतिबन्धाच्च कालतत्त्वं बोद्धव्यम्। एतच्च अयुक्तमिति प्रतीयते। यतो हि नियतकारणा भावाः स्वकारणसान्निध्ये भवन्ति, नान्यथा इति कारणसामर्थ्यमेवेदम्। तत्तु नियतकालत्वात् सहकारी कालस्तदन्य एव प्रोक्तः। कारणपरम्परया भावानामुत्प-द्यमानानां क्रमदर्शनाच्च क्रमाख्या कालशक्तिः भावोपाधिरित्येवाभ्युपगन्तव्यम्। ततश्च भावभेदावभासने प्रभुः स एव। स एव च तत्र तदनुयायिक्रमावभासनेऽपि समर्थ इति स्वतन्त्रस्य चिदात्मन एव जीवात्मगतेयं शक्तिः कालाख्या युक्ता।

**चिदात्मनः शक्तिः कालः**

तादृशशक्तिविशिष्ट आत्मा पुरुषो जीवो वा कथ्यते। स एव यथातत्त्वमर्थवान् प्रत्येतुमसमर्थः स्वाभासकालानुसारेण तत्र क्रममध्यवस्यति। ततश्च कालभेदप्रक्लृप्तेः स एवोपचारेण कालाख्यां प्रतिपद्यते। स एव हि कालशक्तेरविद्याशक्तिसहचारिण्याः फलभूमिः। तददृष्टादिवशेनैव च भावेषु प्रतिबन्धाभ्यनुज्ञे भवतः।

**विग्रहवती देवता कालः**

अन्ये तु विग्रहवतीं महाप्रभावां देवतां कालत्वेन प्रतिपन्नाः। अत्रापि चिद्रूपस्य ब्रह्मणः शक्तिर्देवतैव सकलजगद्ग्रासघस्मरेत्येतदानुगुण्यमेवेतीदमेवात्र दर्शनम्। अत एवैतत्कालदर्शनमविद्यायां संसारहेतुभूतायां प्रथमम्। भेदावभासमयो हि संसारः, भेदश्च देशकालाभ्याम्, तत्र च कालभेदो जगत्सृष्टेराद्यः। अक्रमा हि पश्यन्तीरूपा संवित् प्राणवृत्तिमुपारूढा कालात्मना परिगृहीतक्रमेव चकास्ति। आविर्भूतायां तु विद्यायां सर्वस्य भेदप्रपञ्चस्यापगमादयमप्यपैति। व्यवहारे सर्वस्यैवासत्यतया युक्तायुक्तविचारो निष्फलः। तदेवमयं जन्मवतां पदार्थानां व्यवहारकाले उपयोगीति सिद्धम्।

**सत्त्वमेव तिरोभूतमसत्त्वम्**

अस्माकं मते सत्त्वादसत्त्वस्य भेदो नास्ति, सत्त्वमेव तिरोभूतमसत्त्वमिति व्यवह्रियते। न त्वभावो नाम किञ्चित्पदार्थान्तरम्। तदुक्तं पातञ्जलेन **'धर्मी त्र्यध्वा, धर्मास्तु त्र्यध्वानः। तल्लक्षितास्तां तामवस्थां प्राप्नुवन्तोऽन्यत्वेन प्रतिनिर्दिश्यन्ते। अवस्थान्तरतो न द्रव्यान्तरत इति'** इति। कथं तर्हि नित्यानां शब्दानां नित्येन कालेन कृतो ह्रस्वत्वादिभेदः? कल्पित इत्येव ब्रूमः। तद् यथा चिरमिदं क्षिप्रमिदं कृतमिति ज्ञानयोः स्वतः समानकालत्वेऽपि विषयगतप्रचयापचयाभ्यां कालप्रतिभास इव स्वात्मनि

१. पातञ्जलसू० वृ० पृ० २०८।

लक्ष्यते, तथा ह्रस्वादावपि शब्दतत्त्वस्य नित्यत्वात् समानकालत्वेऽपि समुपचरितः कालभेदः ।

तदुपचरितश्चेत्थम्—यावान् क्षणसन्तानः संकलनाबुद्ध्या एकत्वेन गृह्यते, तावानेकः कालो दिनपक्षमासादिरूपेण व्यवस्थाप्यते । एवञ्च अपचयकाष्ठागतः क्षणः उपचयकाष्ठागतो मन्वन्तरादिरिति । तत्परिच्छेदिका नालिकाविवरादम्भःस्रुति । अन्यच्च घटिकायन्त्रादिकम्, चन्द्रसूर्यसञ्चारादिकञ्च तत्परिच्छेदकम् ।

**योगिनः प्राणसंचारेण कालं कलयन्ति**

योगिनस्तु प्राणसञ्चारेण कालं कलयन्ति । एवञ्च स्त्रीत्वपुंसत्वाभ्यामपचयोपचयाभ्यामजस्रप्रवृत्तिभ्यां सर्वभावानां सम्बन्धः, अतश्च अतिक्रान्तेन्द्रियसम्बन्धं भूतम् । भविष्यदिन्द्रियसम्बन्धं भावि । वर्तमानेन्द्रियसम्बन्धं वर्तमानमिति संक्षेपः ।

यत्तु केनचित्, पाणिनिमहर्षिणा स्वप्रणीतायामष्टाध्याय्यां कालतत्त्वविषये न किञ्चिदभिहितम्, इत्याद्युक्तम्, तत्तु अयुक्तम् । **'कालोपसर्जने च तुल्यम्[१]'** इति सूत्रयता भगवता पाणिनिना कालस्य लक्षणं नैव कर्तव्यमन्यत्र तस्य प्रसिद्धत्वादित्युक्तत्वात् । सैव प्रसिद्धिः 'येन मूर्त्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते, तं कालमाहुः[२]' इत्यनेन भगवता पतञ्जलिना प्रदर्शिता । कालविषये विस्तरस्तु प्रतिमायां द्रष्टव्यः ।

**त्रयाणां पुरुषाणामाविर्भावक्रमः**

क्रियानिरूपणावसरे पुरुषविचारः समयप्राप्तः । तत्रास्मिन् व्याकरणे प्रथममध्यमोत्तमभेदेन त्रयः पुरुषाः सन्ति । एषां प्रादुर्भावोऽपि **'एकोऽहं बहु स्यां प्रजायेय[३]'** इति श्रुतिमूलक एव । तथा हि अहमित्यर्थो यदा स्वात्मनि अनेकत्वं द्रष्टुं स्पन्दते, तदा स एवैको द्विधा भवतीति युष्मदर्थं प्रसूते । एवमहं त्वञ्चेति द्वयोरुद्भवो भवति । तत्र सत्त्वादुत्तमः पुरुषः, रजसो मध्यमस्तमसस्तु प्रथमः पुरु। उद्भवति । अत एव **'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः[४]'** इत्यादिसूत्रत्रयव्याख्यावसरे भगवान् पतञ्जलिः, युष्मदस्मदोरन्येषां च प्रयोगे अस्मदनुसारेणैव क्रियावाचकशब्दप्रयोगो भवति, तथा च स, च त्वं च, अहं च पचामः इति प्रयोगमेव सिद्धान्तसिद्धमसूचयत् । स च त्वं च पचथ इति च प्रयोगं निरदिक्षत् । एतदेव सूचयति यत् प्रथमस्य युस्मदि लयः, युष्मदश्च अस्मदि लयो भवतीति ।

किञ्च **'ब्रह्म वा इदमग्र आसीत्[५]'**, **'तदात्मानमेवावेदहं ब्रह्मास्मीति[६]'** इति वृहदारण्यके । **'त्वं वा अहम्, अहं वे त्वम्'**, **'कस्त्वमहमिति होवाच त्वमेवेदं सर्वं**

---

१. अष्टा० १।२।५७ ।
२. तदेव–२।२।५–महाभाष्यम् ।
३. तै० उ० ३।८ ।
४. अष्टा० १।४।१०५ ।
५. बृ० उ० १।४।२ ।
६. तदेव—१।४।१ ।

**तस्मादहमिति सर्वाभिधानम्'** इति तापनीये। **'हंसः सोऽहम्'** इत्यादिश्रुतिजातैः सर्वेषां पुरुषाणामभेदेऽपि अस्मद एव प्राधान्यम्। अस्मत्सन्निधावन्येषां लोपात्। अनया रीत्या संक्षेपतः पुरुषव्यवस्था प्रदर्शिता। अहं च, त्वं च, स च, इति दशायां सहविवक्षाया-मेकशेषे वयमित्येव शिष्यते। तद्गता संख्यापि केवलमस्मद्येव विश्राम्यति। स एवास्मत् पदवाच्यो युष्मदर्थमन्यपुरुषार्थञ्च बोधयितुं क्षम इति च भाष्ये स्पष्टम्। किञ्च प्रत्यक्ता उत्तमपुरुषवाच्योऽर्थः। मध्यमपुरुषस्य तु परत्वम्। तथा च स्वपराधिष्ठानचैतन्यं भाविकमध्यारोपितमाभ्यामभिधीयते। चैतन्यभागे प्रथमः पुरुषो न वर्तते। स च, त्वं च, अहं च, पचामः इति उत्तमपुरुषस्त्रयाणामपि पुरुषाणामर्थं बोधयितुं सहते। अन्यान् पुरुषानात्मनि विलाप्य अस्मदर्थे एवावतिष्ठते।

तथा च प्रथमपुरुषेण प्रकृतिः, अस्मदर्थेन परचैतन्यम्, युष्मदर्थेन त्वपर-चैतन्यं ग्राह्यम्।

**द्वित्वादिसंख्या भेदव्यवहारे कारणम्**

इदानीं संख्यां विचारयति। तत्र वैशेषिकाणां मते द्रव्याश्रिता गुणात्मिका संख्या। सर्वोऽपि सत्त्वभूतोऽर्थः संख्यायुक्तः प्रतीयते। यथा घटशब्देन एकस्य बहूनां वा घटानां प्रतीतौ एकस्मिन् घटे अभेदव्यवहारहेतुरेकत्वसंख्या विद्यते, द्वित्वादिका संख्या तु भेदव्यवहारे कारणतां भजते, तथा च तादृशभेदाभेदव्यवहाररूपात् कार्यात् कारणी-भूता संख्याश्रीयते। एवं च सर्वोऽपि सत्त्वभूतोऽर्थः संख्यावानेव प्रतीयते।

**आश्रयादव्यतिरिक्ता संख्या**

धर्मो धर्मिणो नातिरिच्यत इत्यव्यतिरिक्तधर्मवादिन आश्रयादव्यतिरिक्तां संख्यां मन्यन्ते। समवायेन तिरोहितभेदत्वाद् व्यतिरेकानवधारणाच्चेदं मतं सिद्ध्यति, तन्मते हि अत्यन्तभेदे तद्विशिष्टप्रत्ययानुदय इति काल्पनिक एव भेदः। अत्र हि **'अस्माकं वैयाकरणानां पदार्थविचारे नास्ति समादरः, अन्यशास्त्रप्रणेतृभिः पदार्थानां निर्णीतत्वात्, तदभ्युपगमेनैवास्माकं व्यवहारोदयात्'**[1] इत्युक्तं प्राचीनैर्वाक्यपदीय-टीकाकारैः; परं ते व्याकरणरहस्यमजानानाः संग्रहरूपं नावागच्छन्। यदि अवा-गमिस्यंस्तर्हि नैवमवक्ष्यन्।

अतो वाक्यपदीयकार आह—

**स धर्मो व्यतिरिक्तो वा तेषामात्मैव वा तथा।**
**भेदहेतुत्वमाश्रित्य संख्येति व्यपदिश्यते**[2]॥ इति।

---

१. वा० प० ३।३।३—हेलाराजटीकायाम्।
२. वा० प० ३।११।२।

**द्रव्ये समवेता संख्या आत्मनोऽपि भेदं साधयति**

संख्यालक्षणो धर्मः, तेषां सत्त्वभूतानां संख्येयानामात्मैव अभिन्न एव वास्तु, व्यतिरिक्तो वास्तु किमनेन निष्प्रयोजनेन विचारेणास्माकम्, शब्दार्थस्येह विचारयितुं प्रक्रमात् । यदि द्रव्याश्रिता संख्या कथं गुणादीनां तन्निमित्तो व्यवहार इति चेत्, न, अस्माकं मते द्रव्ये समवेताऽपि संख्या आत्मनोऽपि भेदं साधयति शतम्, शते, शतानी-त्यादि । एवं च गौणमुख्यभेदेन संख्याया व्याप्तिः सर्वत्र वर्ण्यते । अनया रीत्या त्रीणि रूपाणि इति व्यवहारोपपत्तये गुणेऽपि तस्याः सत्ता स्वीकार्या । अनया पद्धत्या सामान्येषु सामान्यम्, विशेषे विशेषः, संख्यासु संख्या, लिङ्गेषु लिङ्गमपि व्यवहार-दर्शनादवकल्पते । तथा च भाष्यकारो **'भावो भावेन युज्यते, स्त्रीत्वं स्त्रीत्वेन'**[1] इत्याह ।

अनया रीत्या एकविंशत्यादयः संख्यावाचकाः शब्दाः सन्ति । तत्र सा संख्या न हि संख्याद्वयारब्धा, किन्त्वन्यैव । एवमेव सितपीतनीलादिव्यतिरेकेण यथारूपमन्य-न्नास्ति, तथैकत्वादिसंख्याभेदव्यतिरेकेण संख्या नामावयविनि काचिन्नास्ति, समाख्या-मात्रमेषां सर्वेषां सामान्यभूतम् ।

**वचननिरूपणम्**

इदानीं वचनविषये किञ्चिद् विचार्यते । अन्यासु बह्वीषु भाषासु एकवचन-बहुवचने इति द्वौ एव भेदौ समुपलभ्येते । तच्च नैव युक्तम् । न हि एकस्माद् द्वित्वं विना बहुत्वस्यास्ति सम्भव इति स्वीकारात् । अनित्यत्वेनावभासमानेषु पदार्थेषु यद्येकस्मादेकस्यैवोत्पत्तिः स्यात्, तदा सृष्टेर्विकास एव नहि भवेत् । अतो यथा शब्द-तन्मात्रतः स्पर्शतन्मात्रमुदेति, तत्र वायौ शब्दस्पर्शतन्मात्रे तिष्ठतः । तथा च एकस्माद् बीजाद् अङ्कुरो जायते । तस्माद् अङ्कुरादभिनवं पत्रद्वयं समुत्पद्यते इति कारणं मिलित्वा तत्र त्रयं कथयितुं शक्यते[2] । एकवचनद्विवचनबहुवचनानामुपन्यासो युक्ति-युक्तः । किञ्चास्माकं भाषासु तथा परिगणिताः शब्दाः सन्ति, यत्र द्विवचनं विहाय भाषाया व्याकृतिः कर्त्तुमेव न शक्यते । अतोऽस्यां देवभाषायां द्विवचनप्रयोगो युक्त एवेति सिद्धान्तः ।

**इदानीमुपग्रहस्वरूपं समुपन्यस्यते**

यद्यपि **'व्यत्ययो बहुलम्'**[3] इति सूत्रे सिद्धान्तकौमुद्यामुपग्रहः परस्मैपदात्मनेपदे इत्युक्तम्, तथापि वाक्यपदीये उपग्रहस्वरूपं यादृशं प्रकटितम्, तादृशं दर्शयामि ।

---

१. महाभा० ४।१।३ ।

२. अस्यां स्थितौ न हि वयं दर्शनान्तरमुखप्रेक्षिणः । अस्माकं मतं न हि मतान्तरमनुसरति ।

३. अष्टा० ३।१।८५ ।

व्यत्ययो बहुलमिति सूत्रे लादेशव्यङ्ग्यं स्वार्थत्वादि इह तत्प्रतीतिनिमित्ते परस्मैपदात्मनेपदे उपग्रहपदेन लक्षणयोच्येते। **'तौ सत्[1]'** इति सूत्र भाष्ये **'उपग्रहप्रतिषेधश्च', 'उपग्रहस्य च प्रतिषेधो वक्तव्यः', 'उपग्रहस्येति आत्मनेपदसंज्ञाया'** इत्यर्थः। **'सर्वधातुके युक्[2]'** इति सूत्रे प्रदीपः (उपग्रहोऽनेकप्रकारः, स्वार्थपरार्थत्वादिकः)। वाक्यपदीये तु आत्मनेपदपरस्मैपदव्यङ्ग्यः कर्त्रभिप्रायतदितरादिरूपो विशेषो यः क्रियायाः साधनस्य, स उपग्रहः, क्वचित्साधनं कर्म उपग्रहः, पच्यते गम्यते इति। आदिशब्दात्कर्ता भावश्च। तत्र कर्ता लादेशव्यङ्ग्यः एधते यातीति, भावे आस्यते सज्ज्यते इति आत्मनेपदव्यङ्ग्य एव। तथा च येन प्रकारेण यमेव वा क्रियाविशेषणमर्थमन्तर्भाव्य परस्मैपदात्मनेपदे विधीयेते, स सर्वोऽप्यर्थ उपग्रहपदाभिधेयः। परमत्र तद्वत् प्रत्यायकात्ममेपदपरस्मैपदे लक्षणया उपग्रहपदबोध्ये इति संक्षेपः।

**लिङ्गविचारः**

तत्र **'स्त्रियाम्[3]'** इति सूत्रे का स्त्री नाम? इति प्रश्ने लोकत एते शब्दाः प्रसिद्धाः। स्त्री, पुमान्, नपुंसकमिति प्रघट्टके। किं लिङ्गमिति प्रश्ने—

**स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।**
**उभयोरन्तरं यच्च तदभावे नपुंसकम्॥**

इत्युत्तरिते स्तनकेशादेः कुमार्यामभावाद् अन्यस्यापि स्त्रीप्रतिपत्तिनिमित्तस्य कुमार्यादिगतस्य योन्यादेरुपलक्षणम्। एवं लक्षणे भ्रूकुंसे टावापत्तिमुपपाद्य खरकुटीः पश्येत्यत्र नत्वापत्तिम्, खट्वावृक्षयोश्च लिङ्गाभावं प्रदर्श्य क्वचन समाधाय तटे सर्वेषां लिङ्गानामसम्भवं निश्चित्य—**'तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यमेव कश्चित् स्वकृतान्त आस्थेयः[4]'** इत्यादिना पूर्वपक्षमुपसंहृत्य **'संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः[5]'** इत्यनेन स्वसिद्धान्ते लिङ्गलक्षणमुपन्यस्तम्।

**लिङ्गव्याप्तिः**

यद्यपि लोकेऽपि संस्त्यानप्रसवौ एव स्त्रीपुंसौ, यतो हि स्त्यायति अस्यां गर्भ इति स्त्री, सूतेऽसौ पुमान् इति तदर्थो गम्यते। तथापि संस्त्यानप्रसवशब्दयोर्भावसाधनत्वेन तिरोभावप्रादुर्भावार्थकत्वात् स्थितेश्च तन्मध्ये पाताद् गुणानामाविर्भावः पुंस्त्वम्, तिरोभावः स्त्रीत्वम्, स्थितितदन्तरालावस्था नपुंसकत्वम् इति सर्वत्र लिङ्गत्रयावस्था न विरुध्यते। अयं पदार्थः, इयं व्यक्तिः, इदं वस्तु इति शब्दभेदेन त्रयाणामपि लिङ्गानां सर्वत्र व्याप्तिरायाति; तथापि शिष्टव्यवहाराद् यत्र यो हि गुण आविर्भवति, तिरोभवति च, तेषां शिष्टानां दृष्टौ तत्र तस्यैव लिङ्गस्य व्यवहारः।

---

१. तदेव–३।२।१२७–महाभाष्यम्। २. तदेव–३।१।६७। ३. अष्टा० ४।१।३।
४. तदेव–महाभाष्यम्। ५. अष्टा० ४।१।३–महाभाष्यम्।

ननु निर्गुणे पुरुषे कथं चैतन्यं चितिः पुरुष इत्येवं लिङ्गत्रययोग इति चेत्, न, बिम्बप्रतिबिम्बन्यायेन प्रकृतिगतलिङ्गानां तत्र प्रतिबिम्बात्। एतच्च प्रतिमायां विशिष्टतया प्रस्फुटीभविष्यति।

**गुणानामुपचयः पुंस्त्वम्, अपचयः स्त्रीत्वम्**

वाक्यपदीयेऽपि अयमेवार्थो विस्तरेण प्रतिपादितोऽस्ति। सोऽत्यन्तं संक्षिप्ततया प्रदर्श्यते। तथा हि सांख्याः सत्त्वरजस्तमसां गुणानां सततपरिणामिनाम् उपचयः पुंस्त्वम्, अपचयः स्त्रीत्वम्, साम्यावस्था नपुंसकत्वमिति भाष्यकाराभिमतं दर्शनमङ्गीकुर्वन्ति। तथा चोक्तम् महाभाष्ये—**'संस्त्यानप्रसवौ लिङ्गम्। सर्वाश्च मूर्त्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः[१]'** इति सर्वा इति वदता भाष्यकारेण वृक्षादावपि लिङ्गयोग उपपादितः, त्रिलिङ्गता च समर्थिता। परं क्वचिदेकं लिङ्गम्, क्वचिल्लिङ्गद्वयम्, क्वचन च लिङ्गत्रयमिति नियमे कारणं वक्ष्यते।

तत्र संस्त्यानं संहननं प्रविलयस्तिरोधानमिति यावत्। इयमवस्था स्त्रीत्वम्। प्रसवः प्रवृत्तिरारम्भ आविर्भाव इति यावत्। इयमवस्था पुंस्त्वम्। न स्त्रीपुंसौ नपुंसकमिति स्थितिर्नपुंसकत्वमर्थाल्लक्षितम्। तथा हि संग्रहकारः पठति—**'संस्त्यानं संहननम्, तमः निवृत्तिः, अशक्तिः उपरतिः प्रवृत्तेः, प्रतिबन्धः तिरोभावः स्त्रीत्वम्। प्रसवो विष्वग्भावः, वृद्धिः शक्तिः, वृत्तिलाभः अभ्युद्रेकः, प्रवृत्तिराविर्भाव इति पुंस्त्वम्। अविवक्षातः साम्यं स्थितिः, औत्सुक्यनिवृत्तिः अपरार्थत्वम् अङ्गाङ्गिभावनिवृत्तिः कैवल्यमिति नपुंसकत्वम्[२]'** इति।

**अवस्थाविशिष्टा गुणा लिङ्गम्**

अवस्थाविशिष्टा गुणा एव लिङ्गमित्यत्रैव दर्शने पक्षान्तरम्। ते हि कार्यान्तरवत् स्त्र्याद्यवभासमपि प्रत्ययमुपजनयन्तो भवन्ति लिङ्गव्यपदेश्याः। एकस्यापि वस्तुनः शब्दभेदेनार्थो व्यक्तिः वस्त्वित्रि लिङ्गभेदस्य दर्शनाद् वहिरसन्नेव शब्दैरुत्पादित इव बाह्ये वस्तुनि लिङ्गयोग इति शब्दाभिधेयस्वभावं लिङ्गमिति केचित्।

**लिङ्गं शब्दसंस्कारमात्रम्**

तटस्तटी तटमित्यभिन्नेनापि शब्देन अभिन्नं वस्तु त्रिलिङ्गं प्रत्याय्यते इति शब्दसंस्कारमात्रं लिङ्गमाश्रितं कैश्चित्। एवमपि बाह्यत्वेनावसायान्नोदात्तादिधर्मवच्छब्दधर्मत्वं लिङ्गस्य; किन्तु स्त्रियां पुंसि नपुंसके इति शब्दान्वाख्याननिमित्तभावदर्शनाच्छब्दसंस्कारत्वमस्य। तथा प्रतिपादितम्—**'तयोस्तु तत्कृतं दृष्ट्वा यथाकाशेन ज्योतिषः[३]'** इति भाष्ये वर्णितम्।

---

१. अष्टा० ४।१।३—महाभाष्यम्।

२. वा० प० ३।१३।२—टीकायाम्।

३. महाभाष्यम्—४।१।३।

**सप्त विकल्पाः**

एवं स्थितौ लिङ्गानां ग्रहणविकल्पाः सप्त सन्ति। तत्र विकल्पेन चत्वारः, संनियोगेन त्रयः। तथाहि विकल्पेन स्त्रीपुंनपुंसकानां शब्दैः प्रत्यायने चत्वारो भेदाः। ते च—

१. केचित् पुन्नपुंसकविषयाः शङ्खः, पद्मः, शङ्खं पद्मम् इत्यादयः पद्मशङ्खौ निधौ पुंसि स्थितौ पुंसि च तोयजे इति।

२. केचित् स्त्रीनपुंसकनियताः, भागधेयम् भागधेयी, भेषजम् भेषजी, अर्चिरित्यादयः।

३. अन्ये स्त्रीपुंससाधारणाः। यथा इषुः अशनिः, वत्सः वत्सा इत्यादयः।

४. अपरे त्रिलिङ्गाः। तटस्तटी तटमित्यादयः।

सन्नियोगो नियमस्तेन त्रयो विकल्पाः—१. वृक्षादयः पुंस्येव नियताः, २. खट्वादयः स्त्रियामेव, ३. द्रव्यादयो नपुंसके एवेति सप्त विकल्पाः।

**पूर्वोक्तस्य भङ्ग्यन्तरेण समर्थनम्**

तत्र प्रकाशः प्रसवः, आविर्भावः सत्त्वधर्मः। प्रवृत्तिः क्रिया रजोधर्मः। वरणं तिरोभावः, स्थितिस्तमोधर्मः। एत एव धर्मा लिङ्गम्। तथा हि आविर्भावः प्रकाशनियमरूपसत्त्वतमोधर्मानुगतः प्रवृत्तेः क्रियाया रजोधर्मलक्षणाया विशेषः पुंस्त्वम्। एवं तिरोभावः स्त्रीत्वम्। सामान्यरूपा तु प्रवृत्तिः तमोबहुला स्थितिर्नपुंसकम् इति लिङ्गत्रयं सार्वत्रिकम्।

**पुंस्त्वादिरूपा लिङ्गजातिर्वैशेषिकाणाम्**

वैशेषिकाः सर्वत्राभिन्नाभिधानप्रत्ययोन्नीतसद्भावाज्जातिं मन्यन्त इति स्तनाद्युपव्यञ्जनाभिव्यक्तविशेषस्त्रीत्वपुंस्त्वनपुंसकत्वरूपा लिङ्गजातिरित्याहुः। सा चाचेतनेष्वपि यथास्वमुपव्यञ्जनाभिव्यक्ता विद्यत एवेति। ननु स्तनाद्युपव्यञ्जनाऽपि जातिः कथमचेतनेष्वपि नहि तत्र स्तनादयः सन्ति। **'स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादयः**[1]**'** इत्यत्रादिग्रहणाद् यथायथं विशिष्टमेवोपव्यञ्जनम्।

एवं सति स्तनकेशादिसम्बन्ध इत्यादि पूर्वोक्तमपि पक्षद्वयं नाव्यापकम्। अचेतनेष्वपि यथास्वमुपव्यञ्जनविशेषस्य ग्रहणात्। अस्ति हि खट्वादीनामपि किञ्चिन्निमित्तम्, यद्वशात् स्त्र्याद्याकारप्रत्ययप्रसवः। सत्यमेतत्। अर्थव्यक्तिवस्तुशब्दानां तु त्रिलिङ्गानां सर्वभावेषु अव्याहतप्रसवत्वात् त्रिलिङ्गयोगस्तदाकारप्रत्ययान्यथानुपपत्त्यानुमीयते। तत्र च परस्परविरोधिनियतव्यञ्जनसम्बन्धरूपं लिङ्गत्रयं लौकिकं कथं स्यादिति तदवधीरणेन जातिपक्षावलम्बनम्। जातीनां हि सर्वगतत्वादेकाश्रयसमवायित्वं बह्वीनामप्युपपद्यते। एवं गुणावस्थानामपि लिङ्गानां सर्वत्राविरोधः। तथा चोक्तं वाक्यपदीये लिङ्गसमुद्देशे—

**स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादयः।**
**तदुपव्यञ्जना जातिर्गुणावस्था गुणास्तथा॥** इति।

---

१. वा० प० ३।१३।१।

**लिङ्गं शब्दनिष्ठम्**

तच्च लिङ्गं शब्दनिष्ठमर्थनिष्ठं वेति विचारे 'एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम्' इति भाष्यपङ्क्तेः एकार्थे अर्थैक्येऽपि शब्दान्यत्वात् शब्दभेदाद् बुद्धिः, प्रत्ययः, ज्ञानमित्यादौ लिङ्गान्यत्वस्य दर्शनाद् लिङ्गं शब्दनिष्ठमेवेत्यर्थकरणेन कश्चन लिङ्गं शब्दनिष्ठमेव मन्यते। पुराहमपि **'एकार्थे शब्दान्यत्वादित्यादेः'** एकस्मिन्नप्यर्थे शब्दभेदेन लिङ्गभेदो दृश्यते, यथा व्यक्तिः पदार्थ इत्यादिशब्दभेदेन लिङ्गभेद एकस्मिन्नप्यर्थे वर्तते, तथा च शब्दनिष्ठमेव लिङ्गं सिध्यतीति अर्थमवागमम्।

**अर्थनिष्ठं केवलान्वयि**

परमधुना भाष्यपर्यालोचनया अर्थनिष्ठमेव लिङ्गमिति निरचिनवम्। नागेशभट्टा अपि **'स्त्रियाम्'**[1] इति सूत्रे अचेतनखट्वावृक्षादिसाधारणं लिङ्गन्तु तत्त्वादीनां गुणानामुपचयापचयस्थितिरूपं क्रमेण पुंस्त्रीनपुंसकाख्यम्। **'एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम्'** इति भाष्योक्तेरर्थनिष्ठं केवलान्वयि, इयं व्यक्तिः, इदं वस्तु, अयं पदार्थ इति त्रिविधव्यवहारस्य पदार्थमात्रे सत्त्वात्। केनचिच्छब्देन किञ्चिद् वस्तु एकैकविशिष्टमेव केनचित् पर्यायेण लिङ्गद्वयविशिष्टं केनचिल्लिङ्गत्रयविशिष्टमिति लिङ्गानुशासनतो निर्णेयम् इत्यादिना सत्त्वादिगुणानामर्थनिष्ठत्वेन तदुपचयापचयरूपस्य लिङ्गस्यार्थनिष्ठत्वमेव व्यवास्थापयन्।

**शब्दनिष्ठताखण्डनम्**

श्रीमन्तो वैयाकरणमूर्धन्या राघवेन्द्राचार्या अपि लिङ्गं चार्थगतमेव, न शब्दगतमिति प्रकृतसूत्रभाष्यात् स्वमोर्नपुंसकादिति सूत्रस्थभाष्याच्च स्पष्टमेव गम्यते। स्त्रीपुंनपुंसकादिशब्दानां प्रवृत्तेर्निमित्तमेव लिङ्गं न ततोऽन्यत्। तदपि प्रायेण शास्त्रीयमेव, सति सम्भवे लौकिकमपीत्यादिना प्रत्यपादयन्।

तथा चोक्तं **'स्त्रियाम्'** इति सूत्रे **'शब्दस्पर्शरूपरसगन्धानामिति भाष्योपरि उद्द्योते भाष्ये शब्दस्पर्शेत्याद्युपलक्षणं सत्त्वरजस्तमःकार्यमात्रस्य'**। अत एव रसो गन्धः पाक इत्यादौ लिङ्गव्यवहारनिर्वाहः। पद्मावत्यादौ रूपादीनां सुखदुःखमोहजनकतया तेषां सत्त्वरजस्तमोमयतायाः स्पष्टतया तत्कथनद्वारा सर्वं तत् कार्यमुपलक्षितमिति बोध्यम्। एतेन शब्दनिष्ठमेव लिङ्गमिति नव्योक्तं परास्तम्।

**भाष्योक्ता लिङ्गस्यार्थनिष्ठता**

किञ्च **'स्वमोर्नपुंसकात्'** इति सूत्रे 'अस्थ्यादिशब्दग्रहणम्' इति वार्तिकव्याख्याने भाष्ये **'अस्थ्यादिषु नपुंसकग्रहणं द्रष्टव्यम्। युक्तं पुनरिदं विचारयितुम्। नत्वनेनासंदिग्धेनार्थग्रहणेन भवितव्यम्, न हि नपुंसकं नाम शब्दोऽस्ति। किं तर्ह्युच्यतेऽस्थ्यादिषु शब्दग्रहणमिति'**। अत्राप्यर्थग्रहणमेवेत्यादिना भाष्यकृता लिङ्गस्यार्थनिष्ठत्वं कण्ठरवेणैवोक्तम्।

१. अष्टा० ४।१।३।

# वृत्तिनिरूपणाध्यायः

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तय इति प्रसिद्धिर्विद्यते। अत्रत्यं तत्त्वं सोपोद्घातं विचार्यते।

**'तत्रोपपदं सप्तमीस्थम्'** इति सूत्रे 'उपपदसंज्ञायां समर्थवचनम्' इति वार्त्तिकं सूत्रयन् वार्त्तिककारोऽत्र **'समर्थः पदविधिः'** इति शास्त्रानुपस्थितिं मनुते, संज्ञाविधायकस्यास्य पदविधित्वाभावात् समर्थः पदविधिरिति शास्त्राविषयत्वात्।

**चतस्र एव वृत्तयः सिद्धान्तसिद्धाः**

सिद्धान्तपक्षे तु भगवान् भाष्यकारः **'समर्थग्रहणं कर्तव्यम्' इति, न कर्तव्यम्। धातोरिति वर्तते। धातोः कर्मण्यण् भवति, तत्र सम्बन्धादेतद् गन्तव्यं यद्धातोर्यत् कर्मेत्यादिना। यावता चेदानीं पदगन्धोऽस्ति (पदसम्बन्धः) पदविधिरयं भवति। पदविधिश्च समर्थानां भवति। तत्रासामर्थ्यान्न भविष्यति'** इत्यादिना च तद् वार्त्तिकं प्रत्याचख्यौ।

तथा च 'आहर कुम्भं करोति कटम्' इत्यत्र यद्धातोर्यत् कर्म तस्मिन्नुपपदे इत्यर्थस्वीकारेण कुम्भरूपकर्मणः करोतिना सामर्थ्याभावाद् अण्प्रत्ययाभावे च उपपदसंज्ञापि फलाभावान्नेति **'उपपदसंज्ञायां समर्थवचनमनर्थकम्'** इति च तत्रोक्तम्। एवं सत्यपि च्व्यन्तस्थले अकुम्भं कुम्भं करोति कुम्भीकरोति मृदमित्यत्र अण्प्रत्ययोत्पत्तिमाशङ्क्य **'न भवितव्यम्। किंकारणम्? प्रकृतिविवक्षितत्वात्। प्रकृतिविवक्षायां च्विर्विधीयते। तत् सापेक्षम्, सापेक्षं चासमर्थं भवति'** इति भाष्योक्त्या विकारेण प्रकृतेरपेक्षणात् सापेक्षत्वेऽसामर्थ्यात् प्रत्ययोत्पत्तिर्न भविष्यति।

ननु नित्यसापेक्षत्वेन असामर्थ्यादत्र अण्प्रत्ययः स्यात्, प्रकृतेरनपेक्षायां च्वेरभावेन च्व्यन्तस्य नित्यसापेक्षताया उपपादनादिति चेन्, न, नित्यसापेक्षत्वस्य वृत्तावप्रयोजकत्वेन गमकत्वस्यैव वृत्तिप्रयोजकत्वात्। अत एव कुम्भीकरोति मृदमित्यत्र अण्प्रत्ययाभावमुपपाद्य तत्समकक्षस्थले काशकटीकारमित्यत्र अण्प्रत्ययो भगवता भाष्यकारेण साधितः। उभयोः साम्येऽपि मृत्कुम्भीकारः, मृदः कुम्भीकार इत्यनयोरगमकत्वात् प्रत्ययानुत्पादः। काशकटीकार इत्यस्य तथाबोधजनकत्वेन संगृहीतत्वात् तत्समानार्थकस्य काशानां कटीकार इत्यस्य तु अगमकत्वादसाधुत्वमेव। तथा चोक्तं तत्रैव भाष्ये **'न तर्हीदानीमिदं भवति इच्छाम्यहं काशकटीकारमिति। इष्टमेवैतद् गोनर्दीयस्येति'**। तथा च काशान् कटीकरोति इत्यत्र त्विष्ट्याऽण् प्रत्ययो भवति। तस्मिन्नुपपदे काशशब्दात् कृद्योगे षष्ठी। तस्याः षष्ठीति समासः **समासरूपस्यैव चेष्ट-**

त्वेनोपात्तत्वात्, 'काशान् कटीकार इति काशानां कटीकार इति च न भवतीत्याहुः' इत्युक्तं प्रदीपे ।

यद्यपि सनः पदविधित्वाभावः, पदोद्देश्यकविधित्वाभावात्; तथापि **'वा वचनानर्थक्यं च तत्र नित्यत्वात् सनः**[1]**'** इति वार्त्तिके **'वा वचनं चानर्थकम् । किं कारणम् ? तत्र नित्यत्वात्सनः**[2]**' । इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च । स्वभावतश्चैतद् भवति वाक्यं च प्रत्ययश्च'** तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन **'किमन्यच्छक्यमभिसंबन्द्धमन्यदतः संज्ञायाः । न च संज्ञाया भावाभावाविष्येते । तस्मान्नार्थे वावचनेन'** इति भाष्ये **'वावचनानर्थक्यं चेति'** इति प्रतीकमादाय **'वृत्तेरेकार्थीभावविषयत्वाद् व्यपेक्षाविषयत्वाच्च वाक्यस्य भिन्नार्थत्वाद् बाध्यबाधकभावाप्रसङ्गात्'** इति प्रदीपे वृत्तेरिति प्रतीकोपरि **'नन्वस्य पदविधित्वाभावात् समर्थपरिभाषानुपस्थितौ कथमस्यैकार्थीभावविषयत्वम् इति चेत्, न, भाष्यप्रामाण्यादस्याप्येकार्थीभाव एव प्रवृत्तेः'** इति उद्द्योतोक्त्या सन्नादीनामपि पदविधित्वमभ्युपगन्तव्यम् ।

तथा च **'तस्य भावस्त्वतलौ**[3]**'** इत्यादिषु तद्धितेषु सामर्थ्यस्याङ्गीकारात्, तद्धितस्यापि वृत्तित्वं स्वीकार्यम् । वाक्यपदीये मूले न हि कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयो निर्दिष्टाः सन्ति, किन्तु वृत्तिविचारप्रकरणपर्यालोचनया तद्धितसमाससनाद्यन्तधातुरूपास्तिस्र एव वृत्तयः प्रतीयन्ते । भाष्यसम्मतिरप्येतादृशी एव । यत्तु नागेशभट्टप्रभृतिभिर्विद्वद्भिश्चतस्रो वृत्तयः प्रदर्शिता एकशेषं विहाय, तत्तु भाष्यविरोधाद्धेयमेव । अस्माभिस्तु भाष्यसूचितरीतिरेवानुस्रियते, अत एव कृद्वृत्तिः परित्यक्ता, समासेनैव गतार्थत्वात् ।

एवं सति तद्धितसमाससनाद्यन्तधातुरूपास्तिस्रो वृत्तयोऽभ्युपगताः । तथा च कृतः पार्थक्येन गणनमयुक्तं प्रतिभाति । 'मूलकेनोपदंशं भुङ्क्ते' इत्यादौ समासाभावेऽपि कथं वृत्तित्वमिति केदुच्यते । वृत्तिसमानार्थकतया आरोपितवृत्तित्वमादाय तद्व्यवहार इति । कुम्भकारादिष्वेव सामर्थ्यस्यापेक्षितत्वात्, तस्य च समासेनैव गतार्थत्वात् । भाष्यकृता तु **'समर्थः पदविधिः**[4]**'** इति सूत्रं प्रत्याख्यातम् । प्रत्याख्याय च **'अथ क्रियमाणेऽपि समर्थग्रहणे समर्थमित्युच्यते, किं समर्थं नाम**[5]**'** इत्यादिना वार्त्तिकानामुपोद्घातः प्रदर्शितः । इतः पूर्वं भाष्यग्रन्थो गोनर्दीयस्य स्वत्वम् ।

---

१. महाभाष्यम्—२।१।१ ।

२. ननु चोक्तम्–सोपसर्गस्य कर्मत्वे धात्वधिकोऽपि सनोऽविधानमकर्मकत्वाद् इति । नैष दोषः । कर्मण इति नैषां धातुसमानाधिकरणा पञ्चमी कर्मणो धातोरिति; किन्तु अवयवयोगे एषा षष्ठी । कर्मणो यो धातुरवयव इति । यद्यवयवषष्ठी, केवलादुत्पत्तिर्न प्राप्नोति चिकीर्षति जिहीर्षतीति । ( पा० सू० २–३–९ महाभाष्यम्; )

३. अष्टा० ५।१।११९ । ४. अष्टा० २।१।२ । ५. महाभाष्यम्—तदेव ।

कैयटे उद्द्योते च समर्थसूत्रमबुधबोधनार्थमपेक्ष्यते। सर्वत्र गमकत्वागमकत्वे लक्षणैकचक्षुष्कैर्दुर्ज्ञेये अतस्तदर्थं सूत्रमावश्यकम्। प्रदीपोद्द्योतयोस्तु इतः पूर्वो ग्रन्थो वक्ष्यमाणग्रन्थस्य सारभूतोऽर्थ इति स्थिरीकृतम्। अर्थाभिधानस्य स्वाभाविकत्वपक्षे महाविभाषा न कर्तव्या। **'नित्यं क्रीडाजीविकयोः'**[1] इत्यादौ नित्यग्रहणं च न कर्तव्यम्। समासनिषेधशास्त्राण्यपि न कर्तव्यानि। व्यपेक्षायां वाक्यस्य एकार्थीभावे तु समासस्येष्टत्वात्! तथा च कार्यशब्दिकानामेव मते महाविभाषादिकं कर्तव्यम्। अर्थादेशश्च विधेयः। स एव पक्षोऽत्र प्रदृश्यते। तथा चोक्तम् **'अथ ये वृत्तिं वर्तयन्ति, किं त आहुः'**[2] भाष्ये। 'कार्यशब्दिका वाक्यादेव विकल्पेन वृत्तिनिष्पाद्यां मन्यमाना किं वृत्तेर्लक्षणं कुर्वन्ति इति प्रश्नः। **'नैत्यशब्दिकास्तु वृत्तिवाक्ये नित्ये विविक्तविषये मन्यन्ते'** इति च कैयटे।

अत्रत्यभाष्यकैयटयोरयं भावः—ये हि एकार्थीभावरूपां वृत्तिं शास्त्रैकसमधिगम्याम्, न तु स्वाभाविकीम् मन्यन्ते, तेषां कार्यशब्दिकानां मते सुबन्तं सुबन्तेन सामर्थ्यवद् भवति, समर्थं च समाससंज्ञम्। एवं च विभाषाधिकारादि सर्वं चरितार्थम्। समासादौ वृत्तिव्यवहारस्तु वृत्तिवृत्तिमतोरभेदोपचारात्।

शब्दस्य नित्यत्वे तदर्थसम्बन्धस्यापि नित्यतया तन्मते उभयोरपि लोकत एव भिन्नविषयत्वेन सिद्ध्या एकोपस्थितिजनकतावत्समुदायस्यैव वृत्तित्वेन तद्गतैकोपस्थितिजनकतावत् सामर्थ्यं लोकतः सिद्धम्।

स्वाभाविकत्वमते (नैत्यशब्दिकानां मते) एकार्थीभावरूपा वृत्तिर्लोकतः सिद्धेति न किञ्चित् तत्र वक्तव्यम्। ये तु शास्त्रनिष्पाद्यां मन्यन्ते, ते किं तत्स्वरूपं शास्त्रविधानयोग्यमाहुरिति प्रश्नतात्पर्यम्।

तथा च कार्यशब्दिकानां मते शब्दानां शास्त्रकार्यत्वात् तेषां लोके सिद्ध्यभावाद् अर्थसम्बन्धस्य लोकतो ज्ञानासम्भवेन तस्यापि शास्त्रविधेयत्वमेव वाच्यम्। एवं च तद्विकल्पादिबोधकतया विभाषापदादिचरितार्थम्। तथा च शास्त्रैकगम्यत्त्वात् सामर्थ्यरूपवृत्तेर्लक्षणमपि वाच्यम्। तन्मते परार्थाभिधानं वृत्तिरिति वृत्तेर्लक्षणम्।

महाभाष्ये तु **'परार्थाभिधानं वृत्तिरिति'** वृत्तेर्लक्षणं कृतम्। तदर्थस्तु परस्य शब्दस्योपसर्जनार्थकस्य यत्र शब्दान्तरेण प्रधानार्थकपदेन अर्थाभिधानं विज्ञेयत्वेन ग्रहणम्, सा वृत्तिरिति।

यद्वा परार्थस्य प्रधानार्थस्य अप्रधानपदैर्यत्र स्वार्थविशेष्यत्वेन ग्रहणम्, सा वृत्तिरिति लक्षणस्य **'परार्थाभिधानं वृत्तिरिति'** भाष्योक्तस्य वृत्तेर्लक्षणस्यार्थद्वयं स्फोरितम्।

---

१. अष्टा० २।२।१७।

तथा च राजपुरुष इत्यत्र परस्य शब्दस्य उपसर्जनार्थकस्य राजरूपस्य शब्दान्तरेण प्रधानार्थकपदेन पुरुषरूपेण अर्थाभिधानं विशेष्यत्वेन ग्रहणम्, सा वृत्तिरित्यर्थः।

यद्वा परार्थस्य प्रधानार्थस्य पुरुषपदार्थस्य अप्रधानपदै राजादिपदैर्यत्र स्वार्थविशेष्यत्वेन ग्रहणं सा वृत्तिरित्यर्थः। एतावतैव एकार्थीभाव इति व्यवहार:[1]।

तथा च परार्थाभिधानं वृत्तिरित्यनन्तरं भाष्ये **'अथ तेषाम्'** (वृत्तिवर्तनवादिनाम्) एवं ब्रुवतां किं जहत्स्वार्था वृत्तिर्भवति, आहोस्विदजहत्स्वार्था भवति ? किं चातः ? यदि जहत्स्वार्था वृत्तिः; राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति, औपगवमानयेत्युक्ते अपत्यमात्रस्येति। **'अथाजहत्स्वार्था वृत्तिः'** उभयोर्विद्यमानस्वार्थयोर्द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति। का पुनर्वृत्तिर्न्याय्या ? 'जहत्स्वार्था' इत्याद्युक्तम्।

तत्रास्मिन् पक्षे राजपुरुष इत्यत्र राजपदेन परार्थस्य पुरुषरूपार्थस्याविरोधित्वेन स्वगतविशेष्यत्वस्यैव विरोधित्वात् स्वगतं विशेष्यत्वमेव त्यज्यते, न तु राजरूपोऽर्थः। एवं पुरुषपदस्यापि इतरान्वितमेव स्वार्थमुपस्थापयति, न केवलम्। अतो न भार्य्याया इत्याद्यन्वयस्तत्र।

**अत्रायं भावः**—पदानां तत्तद्विशेष्यताविशिष्टे शक्तिः, अत एव बोधे विषयताभानम्। एवं च राजपदादे राजत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नं स्वार्थः, तत्र समासे विशेष्यत्वांशत्याग इत्येतावता जहत्स्वार्थत्त्वमिति। अत्र च बीजं समुदायशक्तिः। एवं चावयवशक्तिसहकृतसमुदायशक्त्या विशिष्टैकोपस्थितिरिति तत्त्वम्। अयं प्रथमः पक्षः।

भाष्ये हि तक्षदृष्टान्तेन जहत्स्वार्थामुपपाद्य अथवेत्यादिना धृतघटदृष्टान्तेन समाधानान्तरं कृतम्। राजपुरुष इत्यत्र राजपदं वाक्यदृष्टस्वजन्योपस्थितिविषयार्थनिमित्तं राजसम्बन्धरूपं विशेषं पुरुषपदजन्योपस्थितिविषये पुरुषे आधाय ( पुरुषं

---

१. यदि बहुव्रीहावपि प्रधानं पदं समुदाय एव तद्घटके च चित्रेति गुरिति च पदे अप्रधाने तत्र प्रधानपदेन चित्रगुरूपेण अवयवार्थक्रोडीकारेणैव स्वस्य समुदायरूपस्यार्थबोधनम्। पूर्वोक्तपक्षे त्ववयवैः समुदायार्थक्रोडीकारेण वा बोधः, समुदायस्य प्राधान्ये च अवयवाप्रतिपाद्यप्रधानभूतान्यपदार्थबोधकत्वात्। द्वन्द्वेऽपि प्रधानं पदं यो हि समुदायः तदुपस्थाप्यस्य साहित्यस्यार्थावस्कन्दनेन बोधः। समाहारेतरेतरयोगयोरपि साहित्यं विशेष्यम्, परं समाहारे अनुद्भूतावयवभेदः, इतरेतरयोगे तु उद्भूतावयवभेद इति विशेषः। एतन्मते तु यदा समुदायस्य विशेष्यत्वं तदा समाहारद्वन्द्वः। यदा तु तद्वैपरीत्यं तदेतरेतरयोगः। एतत्पक्षेऽवयवगतसंख्यायाः समुदाये आरोपो नापेक्ष्यते। नापि च द्वन्द्वे ह्रस्ववारणार्थं ( भा० १।२।४८ ) 'द्वन्द्वे च' इति वार्त्तिकं कर्तव्यं भवति।

तद्वैशिष्ट्येन पुरुषपदेनोपस्थितिविषयं कृत्वा ) राजरूपार्थस्य स्वजन्योपस्थितिविषयत्वं तद्वाक्यनिष्पन्नवृत्तौ जहाति । एवं च राजशब्दात्तदर्थप्रतीत्यभावेऽपि तच्छब्दार्थान्वय-मात्रेण वाक्ये यादृशविशेषणविशिष्टः पुरुषः शब्दात् प्रतीतः, तादृशस्यैवात्राप्युपस्थिति-रित्यनुमानात् पुरुषपदस्य तथा शक्तिग्रहः । राजपदकृतो वाक्ये पुरुषगतो विशेषो भविष्यति, न निवर्त्यत इत्यर्थः । एवं च राज्ञो राजादिपदजन्योपस्थितिविषयत्वाभावेन जहत्स्वार्थत्वमिति बोध्यम् । भाष्ये घृतघटदृष्टान्तं विषम उपन्यास इत्यादिना खण्ड-यित्वा चम्पकपुटदृष्टान्त उपस्थापितः । अयं द्वितीयः पक्षः ।

ततश्च **'अथवा समर्थाधिकारोऽयं वृत्तौ क्रियते'** इत्यादिना समाधानान्तरं कृतम् । अयं तृतीयः पक्षः । अत्र पक्षे भेदः, संसर्गः, वा सामर्थ्यम् ।

**अत्रायं भावः**—समभिव्याहृतपदार्थनिरूपितः संसर्गः समासेन प्रत्याय्यते । तथा च संसर्गपक्षे राजसम्बन्धवान् पुरुष इति राजपुरुष इत्यस्माद् बोधः । तादृशपुरुषाद्यु-पस्थितौ राजपदं तात्पर्यग्राहकम् । राजकीयान्यनिरूपितभेदवान् अर्थाद् अराजकीयभिन्न इति भेदपक्षे बोधः ।

**'अथवाऽन्वयाद् विशेषणं भविष्यतीति'** द्वितीयपक्षे पुरुषपदं राजसम्बन्ध-वत्पुरुषत्वेनोपस्थापकम् । भेदसंसर्गपक्षे तु पुरुषपदात् पुरुषत्वेनैव पुरुषविशेषोपस्थितिरिति भेदः । तथा च संसर्गपक्षेऽपि भेदप्रतीतिः, भेदपक्षे च संसर्गप्रतीतिः । एकोऽपरं न जहाति । एवं सति भेदः संसर्गाविनाभावित्वाद् अनुमीयमानसंसर्गः सामर्थ्यम् । संसर्गो वा भेदाविनाभाव्यनुमेयभेदः सामर्थ्यम्, तथा सति राजसम्बन्धवान् अराजकीयभिन्नः पुरुष इति बोधः । अत एवैकार्थीभावरूपं स्वाभाविकं सामर्थ्यमाश्रयताऽपि इदमवश्यं वक्तव्यम् । भेदसंसर्गवानेवार्थो वृत्त्योपस्थाप्यत इति । एवं च भेदसंसर्गवदर्थोपस्थाप-कत्वमेवैकार्थीभावत्वम् **'अपर आहेत्यादिना'** भाष्येण भेदसंसर्गौ यौगपद्येनाश्रीयमाणौ सामर्थ्यम् । तथा च **'अथवा समर्थाधिकारोऽयम्'**[1] इति तृतीयपक्षेऽपि भाष्ये त्रयः पक्षाः सन्ति । ते हि भेदः, संसर्गः, यद्वा भेदसंसर्गौ यौगपद्येनोभौ इति ।

अत्रेदं तत्त्वम्—

(१) जहदप्यसौ नात्यन्ताय जहातीति प्रथमः पक्षः ।

(२) अथवाऽन्वयाद् विशेषणं भविष्यतीति द्वितीयः पक्षः ।

(३) अथवा समर्थाधिकारोऽयं वृत्तौ क्रियत इति तृतीयः पक्षः ।

एषु प्रथमः पक्षो युक्तियुक्तः; तत्र पक्षे राजरूपार्थस्यात्यागेऽपि स्वगतं विशेष्य-त्वमेव त्यज्यते इत्येतावतैव जहत्स्वार्थेति व्यवहारः । तथा सति महाबाहुरित्यत्र पूर्व-पदस्यार्थवत्त्वेन **'आन्महत'**[2] इत्यादिनाऽऽत्वं सम्पद्यते ।

---

१. अष्टा० २।१।१—महाभाष्यम् । २. तदेव—६।३।४६ ।

**'समर्थसूत्रे'** वार्त्तिकम् **'पृथगर्थानामेकार्थीभावः समर्थवचनम्'** इति **'परस्परव्यपेक्षां सामर्थ्यमेके'** इत्यपरं वार्त्तिकम्। तत्र समर्थशब्दस्य यदि संगतार्थः संसृष्टार्थ इति वा विग्रहः क्रियते, तदा एकार्थीभावः। यदा संप्रेक्षितार्थः शब्दार्थ इति वा विग्रहः करिष्यते, तदा व्यपेक्षा। परं व्यपेक्षायां सामर्थ्ये बहूनि वचनानि कर्त्तव्यानीति एकार्थीभाव एवाश्रयणीयः। एकार्थीभावरूपसामर्थ्यस्वीकारेऽपि जहत्स्वार्थाजहत्स्वार्थेतिवृत्तिद्वयं भाष्ये दर्शितम्। तत्र पूर्वं जहत्स्वार्थां वृत्तिमुक्त्वा पश्चादजहत्स्वार्था वृत्तिः प्रदर्शिता।

तथा च इयमजहत्स्वार्था वृत्तिः वृत्तिवर्तनवादिनस्तदवादिनश्च तुल्या जहत्स्वार्था तु वृत्तिवर्तनवादिन एव। वृत्त्यवर्तनवादिमते तु अखण्डानि निरवयवानि पदानि इति उभयोः कदाप्यर्थ एव नासीदिति कथं जहत्स्वार्थत्वव्यवहारस्तन्मते स्यात्। वृत्तिवर्तनवादिनो मते तु जहत्स्वार्थत्वस्वीकारेण राजपुरुष इत्यत्र प्लक्षन्यग्रोधौ इतिवद् द्विवचनं न भवति। अक्षौहिणी रथान्तरादिपदे तु जहत्स्वार्थैवेति।

वृत्तिवर्तनवादिनो मते यथा वृक्ष इत्यादिपदे वर्णानां न कश्चनार्थस्तथैव रथन्तरादिपदेषु तन्मते पदानां न कोऽप्यर्थ इति।

**'परस्परव्यपेक्षा सामर्थ्यमेके[1]'** इत्यपि वृत्तिवर्तनवादिनामेव मते भाष्ये तत्सन्दर्भे एवोपन्यासात्। परमयं व्यपेक्षापक्षो न युक्तः, एकार्थीभावकृतानां विशेषाणां कृते नानाकारकान्निघातयुष्मदादेशप्रतिषेधाद्यर्थं वचनोपन्यासे गौरवात्।

अतः **'अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः, स वक्तव्यः[2]'** इति भाष्यम्। **'तत्र नानाकारकान्निघातयुष्मदस्मदादेशप्रतिषेधः', 'प्रचये समासप्रतिषेधः'** इति वार्त्तिके च सङ्गच्छन्ते।

परं नवीनैस्तु पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकविधित्वम्। तच्च कृत्प्रत्ययविधायके, तद्धितप्रत्ययविधायके, समाससंज्ञाविधायके, सनादिविधायके चास्ति। तत्राद्यानां त्रयाणां पदसंज्ञाप्रयोजकसुप्प्रत्ययोत्पत्तिप्रयोजकप्रातिपदिकसंज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदककृत्त्व-तद्धितत्वसमासत्वान्यतमत्वावच्छिन्नसम्पादकत्वात्। सनादिविधायकस्य च पदसंज्ञाप्रयोजकतिङ्प्रत्ययोत्पत्तिप्रयोजकधातुसंज्ञाविधायक **'सनाद्यन्ता धातवः[3]'** इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकसन्त्वाद्यवच्छिन्नसम्पादकत्वात्। इत्थमेव **'समासेऽङ्गुलेः सङ्गः[4]'** इत्यत्र समासग्रहणस्य **'पदान्ताद्वा[5]'** इति सूत्रस्थान्तग्रहणस्य च चारितार्थ्यम्।

---

१. अष्टा० २।१।१—महाभाष्यम्।
२. अष्टा० २।१।१—महाभाष्यम्।
३. तदेव—३।१।३२।
३. तदेव—८।३।८०।
५. तदेव—६।१।७६।

**'ओत्वोष्ठयोः'** इत्यादौ चाप्रवृत्तिरुपपद्यत इति तत्र तत्र निरूपितम्। तिसृषु वृत्तिष्वत्र समासवृत्तिविषये किञ्चिदुच्यते। सङ्केतसम्बन्धेन समासपदवत्त्वमेव समासस्य लक्षणम्।

**समासवृत्तिविचारः**

तत्र विशेषसंज्ञाविनिर्मुक्तः केवलसमासः। तत्र समासेति नामधेयबीजं तु व्यस्तानां पदानां समसनं नाम एकीभावेनावस्थानम्। एवमेव सङ्केतसम्बन्धेन अव्ययीभावादिपदवत्वं तत्तदवान्तरभूतानां समासानां लक्षणमवसेयम्। पूर्वपदार्थप्रधानोऽव्ययीभाव इत्यादीनि लक्षणानि तु व्यभिचरितानि, अतो न मया तानि प्रदर्श्यन्ते। अव्ययीभावतत्पुरुषौ, तत्पुरुषभेदः कर्मधारयः, कर्मधारयभेदो द्विगुः, बहुव्रीहिः, द्वन्द्वः, इत्याद्यवान्तरभेदानां विशेषरूपेण विचारः प्रतिमायां भविष्यतीति ततो विरम्यते।

**अव्ययीभावादि संज्ञानामन्वर्थताविचारः**

केवलमेतासां संज्ञानामन्वर्थताऽस्ति न वेति विचार्यते। एतद्विषये किमुत पाणिनीयेऽस्मिन् व्याकरणे संज्ञामात्रविषये क्वचिदन्वर्थविशिष्टायाः, क्वचिदन्वर्थरहितायाः, क्वचिच्च यदृच्छाशब्दात्मिकायाः संज्ञाया ग्रहणम्। तत्र संख्यासर्वनामाव्ययोपसर्जनकारककर्मप्रवचनीयाव्ययीभावप्रत्ययोपपदादिसंज्ञासु अन्वर्थत्वविशिष्टायाः पारिभाषिक्याः संज्ञाया ग्रहणम्। स्वरव्यञ्जनद्रव्यादिविषये तु अन्वर्थग्रहणम्। यद्वा पूर्वाचार्यैः सङ्केतितस्य ग्रहणम्। वचनविषये क्वचित् पारिभाषिक्याः, क्वचिच्च केवलमन्वर्थायाः। उदात्तादिसंज्ञा अपि मन्दबुद्धिव्युत्पादनार्था इति उदात्तस्वरितौ अन्वर्थौ स्तः।

**'अनुदात्तं पदमेकवर्जम्'**[1] इत्यत्र त्वनुदात्तपदमन्वर्थमेव, सर्वं पदमुदात्तरहितं भवतीति तदर्थस्य सत्त्वात्। अस्यां स्थितौ समासावान्तरभूतानां संज्ञानामन्वर्थत्वं वर्तते न वेति चिन्तायामुच्यते। भाष्यानुसारं केवलमव्ययीभावसंज्ञैवान्वर्था। अन्यासामन्वर्थत्वे नैव प्रयोजनम्, न वा दूषणं पाणिनीव्याकरणतः पूर्वेषु व्याकरणेषु सम्भाव्यतेऽन्वर्थत्वम्, इति किञ्चिदनुमाय तदर्थः प्रकाश्यते।

तत्राव्ययीभाव इत्यस्य अनव्ययस्य अव्ययीभवनमित्यर्थस्तेनाव्ययीभावस्याव्ययत्वविधानार्थम् **'अव्ययीभावश्च'**[2] इति सूत्रं न कर्तव्यम्, इति भाष्ये उक्तम्। तत्पुरुषशब्दस्य द्वयी व्युत्पत्तिः—एका तस्य पुरुष इति, अपरा स चासौ पुरुष इति। (तत्र वैयधिकरण्ये षष्ठ्या द्वितीयासमासादीनां ग्रहणं भवति) स चासौ पुरुष इत्यनेन कर्मधारयस्य तद्विशेषस्य द्विगोश्च। कर्मधारयशब्दस्तु धारिधातोः **'अनुपसर्गाल्लिम्प'**[3] इत्यादिसूत्रे शप्रत्यये निष्पन्नस्य धारयशब्दस्य षष्ठ्यन्तकर्मशब्देन समासे निष्पद्यते।

---

१. अष्टा० ६।१।१५८। २. तदेव—१।१।४१। ३. अष्टा००–३।१।१३८।

यत्र कर्मधारये विशेषणविशेष्ययोः समासो भवति, तत्र हि समासार्थे शब्दे नीलो घट इत्यादौ द्विविधा क्रिया विशेषणस्य विशेष्ये सम्पत्यर्थमपेक्ष्यते। एका च विधानात्मिका, अपरा च आरोपात्मिकेति। क्रियाया धारकत्वेन कर्मधारयत्वं भवति। यद्वा विशेषण-वैशिष्ट्यमेव क्रियेति व्युत्पत्तिः साध्वी। द्विगुशब्दस्तु अपूर्व एव प्रतिभाति। यो हि अर्थो द्विगुना प्रतिपाद्यते, स एवार्थो यदि बहुव्रीहिणा उच्येत, तर्हि तत्र महान् भेदो भवति। यथा पञ्चवटी। अत्र पञ्चानां वटानां समाहारः पञ्चबटीतिरूपं द्विगौ भवति। पञ्च वटाः सन्तीत्यत्र विग्रहे पञ्चवट इति प्रयोगः सम्पद्यते बहुव्रीहौ।

तत्र द्विगुशब्दे द्विशब्देन संख्यावाचकः शब्दो व्यञ्जनया गृह्यते इति, तथा च संख्या गौः यस्मिन् स द्विगुः। अर्थात् संख्यावाचकः शब्दस्तत्र पूर्वं भवति। एवं सति यथाकथञ्चिद् द्विगुरित्यन्वर्थं नाम।

**'परं संख्यापूर्वो द्विगुः'**[1] इति सूत्रेण सर्वस्यापि संख्यापूर्वस्य द्विगुत्वविधाने द्विमुनि इत्यादावपि द्विगुत्वेऽव्ययीभावेन सन्निविष्टे द्विगुत्वप्रयुक्तः स्वर आपद्येत, तदर्थं पूर्वत्रिसूत्रीविहितस्यैव द्विगुसंज्ञा विधीयते, न तु सामान्यतः संख्यापूर्वस्य। अन्यथा पञ्च राजानो यस्यामिति बहुव्रीहौ पञ्चराजा इत्यत्रापि द्विगुस्वरः स्यात्। तत्रायं विशेषः—यन्न हि तत्पुरुषस्य द्विगुसंज्ञा विधीयते, किन्तु द्विगोस्तत्पुरुषसंज्ञा विधीयते।

बहुव्रीहिरित्यत्र तु बहवो व्रीहयो यत्र स बहुव्रीहिरिति व्युत्पत्तौ लम्बकर्णेत्यादौ द्विपदे बहुव्रीहिसंज्ञैव न भविष्यति, अतोऽन्वर्थसंज्ञायां दोष आपद्येत, एतदर्थं नात्रा-न्वर्थत्वं युक्तम्। यद्वा बहुशब्दोऽनेकार्थकः। किञ्च पाणिनेः पूर्वेषु केषुचिद्व्याकरणेषु हिन्दीभाषायामिव एकवचनं बहुवचनमिति संज्ञाद्वयमेवासीत्, पाणिनिना मध्ये द्विवचनान्तशब्दप्रयोगः साधितः। आसीदेकस्मादतिरिक्ते बहुशब्दप्रयोगो यथा **'एकोऽहं बहु स्यां प्रजायेय'**[2] इति श्रुतौ। द्वन्द्वसंज्ञायामन्वर्थत्वं तु द्वन्द्वशब्दो **'द्वन्द्वं रहस्यमर्यादा'** इत्यादिसूत्रेण निष्पाद्यते। तत्र द्वन्द्वम् अभिव्यक्तिः, साहचर्यं साहित्यं विद्यते यस्मिन् स द्वन्द्वः। तथा च बहूनामपि साहचर्यस्य सत्त्वात्तत्रापि द्वन्द्वपदप्रयोगो युज्यत एवेति सर्वं सुस्थम्।



---

१. तदेव—१।१।५२। २. तै० उ० ३।८।

पञ्चमविश्वसंस्कृतसम्मेलनविशेषाङ्कग्रन्थमाल

[ २ ]

# अघोरदर्शनम्

लेखकः सम्पादकश्च

डॉ० सत्यव्रतसिंहः

भू० पू० कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वै० सं० २०३६

# PREFACE

The 'Aghoradarśanavimarśaḥ' is being presented as a preamble to the 'Aghoradarśanakārikā, yet in the making. The 'Kārika' will be the result of my readings in the Vivekasāra of Aghorī Bābā Kinārāma of Kaśī of the 17th-18th century A. D and also of my recollections of the teachings and preachings of Aughaḍa Bābā Bhagavāna Rāma of the same Kaśī of to-day.

Like the springs of all the systems of Indian Philosophy, the Āstika and the Nāstika Darśanas, the springs of the Aghorādvaita philosophy, termed here, as—Nirdvandvādvaya Darśana' be in the Vedic-Upaniṣadic-Puraṇic literature. The 'Āgamās of the Śaivas, the Śāktas, the Vaiṣṇavas the Bauddhas and the Jainas had made their own contributions to it. The main stream of the 'Nirdvandādvaya Darśana flows in its majesty in the Saiva-Sākta Advaita philosophers of Kāshmir called the Kramadarśana and the Pratyabhijñādarśana. The Aghora-Sādhanā of the Aghora saints, has its rich heritage in the Kulācāra and the Vāmāctra way of life of the Śaiva-Śākta saints and savants of Kashmir.

Ths distinctive features of the Aghoradharma or the Aghora religion in its historical past have been the following :

(i) Making the spirit of toleration towards all religions. sects and sections of Indian society obligatory for the Aghora-Sādhaka.

(ii) Integrating the systems of the Haṭhayoga of all shades culminating in the 'Aṣṭānga Yoga' of Aghorī Bābā Kinārāma and his spiritual predecessors.

(iii) Harmonizing the Haṭha Yoga with the Rājayoga of Patañjali and his predecessors for the realisation of 'Jivanmukti in life here and now.

The Aghoradarśana or the Aghora Philosophy shows the following characteristics :—

(i) Integration of the Vedic-Puranic philosophy of 'Brahman' and 'Māyā' with the Śaiva Śākta philosophy of 'Śiva' as Prakāsa and Śakti as Vimarṣa.

(ii) Syncretisation of the Śaiva-Sākta concepts of Reality with the Vaiṣṇava concept of Reality.

(iii) Simplification of philosophical speculations for the philosophical enlightenment of the common man.

Criticisms and comments are invited for the formulation of the 'Aghoradarśanakārikā' to complete the picture of Aghoradarśana.

# अघोरदर्शनविमर्शः

❀ ❀ ❀

कालचक्रे चलत्यत्र चित्रसर्गे हि भारते ।
वह्नीन्द्रवरुणप्रख्याः देवा रुद्रात्मतां श्रिताः ॥१॥

रुद्रभावनया ध्यार्याः भारतीयाः पुरा युगे ।
भाविताान्तहृदुल्लासाः शिवं रुद्रं हि मेनिरे ॥२॥

वैदिकानामृषीणां या पुरासीदग्निसाधना ।
देशकालपरीवर्ते सा जाताऽघोरसाधना ॥३॥

आर्येषु रुद्र एको हि शिवश्चार्येतरेषु च ।
ऐक्यं समायतुस्सत्यं सर्वैश्वर्यप्रसाधनम् ॥४॥

'या ते रुद्र शिवा तनूरघोरा पापकाशिनी' ।
इत्यादि रुद्रमन्त्राणामत्रार्थे सङ्गतिर्ध्रुवा ॥५॥

आधिभौतिकरूपस्संस्तथा चैवाधिदैविकः ।
आध्यात्मिकोऽथ रुद्रोऽग्निरेकं सदिति कीर्त्यते ॥६॥

यज्ञानुष्ठानतो नैव न मन्त्रार्थोपचारतः ।
तत्त्वसंवित्समुन्मेषात् स ज्ञातस्तु महर्षिभिः ॥७॥

प्रज्वालितो हि यज्ञाग्निः प्रकाशपरमार्थकः ।
ज्ञानाग्निं जनयामास कर्माडम्बरघस्मरम् ॥८॥

ज्ञानाग्नौ ज्वलिते दृष्टा श्रद्धैवाग्निसमिन्धनी ।
हविर्होत्री च श्रद्धैव क्रान्तदर्शिमहर्षिभिः ॥९॥

भस्मीभूते च यज्ञाग्नौ ज्ञानाग्नौ प्रविजृम्भिते ।
वेदैरिवागमैर्ज्ञातं ब्रह्माद्वैतं महोदयम् ॥१०॥

वैदिका ऋषयोऽप्यासन् योगतन्त्रप्रवेदिनः ।
इदं प्रथमतो दृष्टं यैर्वाचः परमं पदम् ॥११॥

पश्चादागमिकैः शैवैः शाक्तैश्चैवाथ वैष्णवैः ।
योगतन्त्रबलाद् ज्ञातं तद् यतो वाङ् निवर्तते ॥१२॥

अग्रभूमिर्हि वाचो वै शिवो वा विष्णुरेव वा ।
तच्छक्तिर्वा तदैकात्म्यभावनैव हि साधना ॥१३॥

भवो रुद्रः शिवः शम्भुः शङ्करो भैरवोऽथ वा ।
एकस्य भावभेदेन ब्रह्मतत्त्वस्य वाचकाः ॥१४॥

रुद्राध्याये यजुर्वेदे सर्वा रुद्रनमस्कृतिः ।
रुद्रात्मैक्यपरामर्शस्वरूपैव विधीयते ॥१५॥

नित्यैर्नैमित्तिकैः काम्यैः यागैरभ्युदयावहैः ।
निःश्रेयसपरैश्चैव रुद्राग्निः सेव्यते बुधैः ॥१६॥

रुद्र एव महादेवश्शङ्करोऽघोरमूर्तिधृक् ।
स एव भैरवश्चापि घोरमूर्तिधरावतः ॥१७॥

स एव ब्रह्मा विष्णुश्च शक्तिमत्त्वव्यपेक्षया ।
सर्वदेवमयत्वाच्च सच्चिदानन्दविग्रहः ॥१८॥

नमो 'रुद्राय सोमाये'त्यादिका याजुषी श्रुतिः ।
साधयत्येव शक्तिं तामुमाख्यां रुद्रसङ्गताम् ॥१९॥

शिवभक्तिरताः लोकाः विष्णुभक्तिरतास्तथा ।
तच्छक्तिं समुपासन्ते शक्तिस्सर्वेश्वरी ह्यतः ॥२०॥

साऽघोरा रुद्रदेवस्य महेशस्यानपायिनी ।
इच्छाशक्तिसमानाम्नी शिवाभिन्ना परात्परा ॥२१॥

परापराऽथ वा घोरा ज्ञानशक्तिर्निगद्यते ।
घोराघोराऽपरा शक्तिः क्रियाख्या भेदमातृका ॥२२॥

शैवाः शिवां तथा शाक्ताः शक्तिं लक्ष्मीं च वैष्णवाः ।
बोधिं बौद्धाश्च तामेकां वहुधा पर्युपासते ॥२३॥

कोऽघोरः शिव इत्यस्यां पृच्छायां रौद्रयामलः ।
पटलोऽघोरसंज्ञो यः स समाधानसाधकः ॥२४॥

महामाया महाकाली तारा त्रिपुरसुन्दरी ।
इत्यादिनामभिर्नूनं रुद्रशक्तिर्निरूप्यते ॥२५॥

अघोरसाधनाऽऽरब्धा मत्स्येन्द्रेण महात्मना ।
योगीश्वरश्च गोरक्षः पारिपूर्ण्यं निनाय ताम् ॥२६॥

महामाहेश्वरैः सर्वैः शारदादेशसम्भवैः ।
महाशाक्तैर्महाकौलैस्सैव रूपान्तरी कृता ॥२७॥

तथागतोऽपि भगवान् बुद्धश्शौद्धोदनिः पुरा ।
महाघोरक्रियां चक्रे श्मशानेऽटन्नितस्ततः ॥२८॥

माहायानिकबौद्धानां तारार्चा या पुरा युगे ।
तत्राप्यघोरशक्तेर्वै परामर्शो विभाव्यते ॥२९॥

मत्स्येन्द्रनिर्गताऽघोरी शक्तिसिद्धिर्हि भारते।
नानारूपैस्तथा नानानामभिर्ज्ञायतेऽधुना ॥३०॥

अघोरसाधनासिद्धयोः परानन्दप्रकाशकः।
दत्तात्रेयोऽपि विष्णवंशोऽघोरिभिस्स्मर्यते सदा ॥३१॥

स्वात्मसंविदभिव्यक्त्यै किनारामेण योगिना।
विचित्राघोरचर्याणां सूत्रधारत्वमास्थितम् ॥३२॥

तत्तद्विधिनिषेधाभ्यां कुलचर्यां सुदुःखदाम्।
ज्ञात्वा योगी किनारामः सुखदां तां विनिर्ममे ॥३३॥

अघोरसाधना सर्वा गुरुभक्तिपुरस्सरा।
पूर्णाहं भावनोल्लासो गुरुभक्त्यैव भाव्यते ॥३४॥

पूर्णाहन्ता परामर्शः परानन्दो महोदयः।
गुरुप्रपदनेनैव प्राप्यते न तु तद्विना ॥३५॥

स्वात्मारामप्रपत्तिर्या गुरोर्या शरणागतिः।
तयोरैकात्म्यसंवित्तौ गुरुतत्त्वज्ञता मता ॥३६॥

'गुह्यागमार्थतत्त्वार्थसन्धानाद्बोधनादपि।
रुद्रादिदेवरूपत्वाद् गुरुरित्यभिधीयते ॥'

इति कौलार्णवप्रोक्तं गुरुतत्त्वं महात्मना।
किनारामेण भाषायां देश्यां सम्यङ् निरूपितम् ॥३७॥

'ब्रह्मानन्द सुबोधमय आतम अनघ अकाम।
छंदरहित आकाशवत अलख निरञ्जन नाम ॥

सतगुरु निरखत शिष्य को भयो परम उत्साह।
चरन वंदि बोलत भयो लह्यो सबैको लाह ॥'

इत्यत्र देश्यां भाषायां दोहावृत्तेन देशितम्।
किनारामेण प्रथममाघोरं साधनापदम् ॥३८॥

गुरुस्तवनमित्याख्यं तद् यस्मात् संप्रसिध्यति।
अनामरूपचिन्मात्रस्वात्मदैवतभावनम् ॥३९॥

यथा पातञ्जले योगे परमो गुरुरीश्वरः।
ईश्वरप्रणिधानञ्च सर्वकर्मार्पणं गुरौ ॥४०॥

तथैवाऽघोरयोगेऽपि किनारामेण देश्यते।
स्वात्मनः प्रत्यभिज्ञानं गुरुस्तवनसम्मितम् ॥४१॥

विना चित्तमलक्षालं गुरुतत्त्वं न वेद्यते।
परतत्त्वस्वरूपं तत्स्वात्मरूपं च तत्तथा ॥४२॥

शैवे शाक्ते तथा कौले बौद्धे जैनेऽथ दर्शने।
मलप्रक्षालनानाञ्च विस्पष्टा देशनाः कृताः ॥४३॥

तप आदि क्रियायोगं युञ्जानस्याधिकारिता।
निर्मलीकृतचित्तस्य सद्गुरुस्तवने मता ॥४४॥

चिदात्मरतिकामो यस्तेनान्वेष्यो गुरुर्यतः।
चिदात्मा शास्त्रसंवेद्यः शास्त्रवेदी च सद्गुरुः ॥४५॥

तद्बोधाद् ज्ञानसंप्राप्तौ गुरुप्राप्तिर्भवेद् ध्रुवम्।
ततश्शास्त्राप्तथेशाच्च गरीयान् गुरुरुच्यते ॥४६॥

गुरुस्तवेन नश्यन्ति ह्यनिर्ज्ञातिष्टकामनाः।
निर्ज्ञाताभीष्टचिन्ताश्च स्वात्मशङ्काश्च मूलतः ॥४७॥

आघोर्यास्साधनाया यत् द्वितीयं पदमुच्यते।
ज्ञानसंज्ञं स्मृतं तद्वै गुरुस्तवनसत्फलम् ॥४८॥

नेदमागमिकं ज्ञानं नानुमानिकमेव च।
ध्यानाभ्यासात्मकं ह्येतत् क्लेशपञ्चकनाशनम् ॥४९॥

निःशङ्कं त्वात्मज्ञानं यन्नित्यमानन्दनिर्भरम्।
भैरवीयं महस्तद्वै यद् ज्ञानाङ्गतयोच्यते ॥५०॥

गुर्वनुग्रहसंसिद्धश्रद्धाभक्तिप्रसाधितात्।
विवेकाज्जायते ज्ञानं यत्तद् ज्ञानमिहोदितम् ॥५१॥

जगत्प्रपञ्चसारार्थप्रतिपत्तिर्यतः स्फुरेत्।
जगदात्मस्वरूपश्रीसंवित्तिरुदियाद् यतः ॥५२॥

आत्मतत्त्वार्थिता प्रोक्ताऽनात्माकाङ्क्षाबहिष्कृतिः।
किनाराममहायोगे सा ज्ञानैकचमत्कृतिः ॥५३॥

ज्ञाने समुदिते मायातमिस्राप्रक्षयो भवेत्।
भावानां निःस्वभावानामाभासानां तु का कथा ॥५४॥

अनात्मनोऽपि पर्यन्ते चिज्ज्योतीरसभावितान्।
ज्ञानेनैव विजानीयाच्चिदानन्दात्मरूपिणः ॥५५॥

ज्ञानं विज्ञानसहितमिति गीताप्रमाणतः।
आघोरयोगे ज्ञानं वै विज्ञाने पर्यवस्यति ॥५६॥

आत्मत्वेन प्रतीतोऽपि शरीरी पञ्चकञ्चुकी।
मलोपेतश्च ज्ञातव्यो जीवन्मुक्तिप्रसिद्धये ॥५७॥

अविज्ञाय शरीरं तु सर्वधर्मैकसाधनम्।
आत्मनो ह्यशरीरस्य सम्यग्ज्ञानं न संभवेत् ॥५८॥

अघोरयोगिनोऽतो वै गुरुभक्तिप्रसादतः ।
पिण्डान्तर्वर्तिब्रह्माण्डं विजानन्ति स्वरूपतः ॥५९॥

ज्ञानं ब्रह्मात्मविज्ञाने परमोपाय उच्यते ।
साक्षात्कारे स्वसंवित्तेर्विज्ञानं हि प्रगल्भते ॥६०॥

अतो ज्ञानं हि गीतासु राजविद्येति गीयते ।
शुद्धसंवित्स्वरूपात्मा तत एव विचिन्त्यते ॥६१॥

अघोरयोगे ज्ञानस्य साधनं निश्चलं मनः ।
मनसो निश्चलत्वञ्च प्राणनिश्चलताकृतम् ॥६२॥

शिवसङ्कल्पतासिद्ध्यर्थं मनसोऽघोरयोगिनः ।
युञ्जन्ते कायशुद्ध्यन्तं हठयोगं महाफलम् ॥६३॥

हठेति प्राणापानैक्यं प्राणायामोऽथवोच्यते ।
मत्स्येन्द्रादिमहात्मानो सिद्धा यत्सिद्धिशक्तितः ॥६४॥

स्वभ्यासो हठविद्याया उत्साहात् साहसात्तथा ।
धैर्यात् सतत्त्वविज्ञानाद् महाविश्वासतो भवेत् ॥६५॥

बह्वङ्गो हि हठस्तत्र पूर्वाङ्गं त्वासनं मतम् ।
तत्र सिद्धासनं साध्यमुन्मन्युन्मेषकारकम् ॥६६॥

प्राणायामस्य संसिद्धिः शरीरमलनाशिका ।
धौत्यादिकर्मषट्कञ्च प्राणायामोपकारकृत् ॥६७॥

श्वासोच्छ्वासक्रियाशून्ये देहे चित्तं निराकुलम् ।
पूर्वरङ्गायते नूनं समाध्यानन्दनर्तने ॥६८॥

उन्मन्यवस्थासिद्ध्यर्थं कुम्भकाष्टकमिष्यते ।
कुम्भकप्राणरोधान्ते भवेच्चित्तं निराश्रयम् ॥६९॥

दशमुद्रादृढाभ्यासस्तद्दार्ढ्येऽत्युपकारकः ।
महासिद्धाः महामुद्रास्साधयन्त्यत एव हि ॥७०॥

यो मनः सुस्थिरीभाव सैवावस्था मनोन्मनी ।
तामवस्थामवाप्नोति प्राणसंयमसाधनात् ॥७१॥

हन्त तस्यामवस्थायामापन्नायां महेश्वरी ।
सुप्ता प्रबुध्यते शक्तिः कुण्डली या निगद्यते ॥७२॥

तत्संप्रबोधसिद्ध्यर्थं मुद्राभ्यासं महाफलम् ।
कुरुतेऽघोरयोगी यस्स मुक्तौ देहवानपि ॥७३॥

अघोरेशः किनारामो ज्ञानसिद्धेरनन्तरम् ।
निरालम्बाह्वयाङ्गस्य साधनामुपदिष्टवान् ॥७४॥

विचित्राऽपि साधिता मुद्रा राजयोगं विना वृथा ।
इति मत्वा किनारामो निरालम्बं समादिशत् ॥७५॥

विज्ञानसिद्धया सिद्धिः स्यान्निरालम्बस्य नान्यथा ।
राजयोगो निरालम्बं जीवन्मुक्तिस्वरूपकम् ॥७६॥

निरालम्बमनस्कत्वं शिवव्योमनि संस्थितिः ।
खेचर्यां सिद्धिमायान्त्यां मुद्रायां सिध्यति ध्रुवम् ॥७७॥

पातञ्जले राजयोगे निर्बीजेति निरूपितः ।
समाधिस्स निरालम्बसाधनाऽत्र निगद्यते ॥७८॥

स्वात्मस्वरूपावस्थानं निरालम्बनभावनम् ।
स्वभ्यस्तखेचरीमुद्रासम्मितं योगिभिर्मतम् ॥७९॥

निरञ्जनो निरालम्बो महादेवश्शिवो यथा ।
तदैकात्म्यानुसन्धाता शिवस्साक्षात्तथा मतः ॥८०॥

निरालम्बनसंसिद्धिश्शून्यता साधनाऽथ वा ।
मनोविलासविरमान्निर्विकल्पात्मभावना ॥८१॥

एतस्यां हि सुसिद्धायां ब्रह्माहमिति भावना ।
अहं ब्रह्मेति संविद्वा योगिहृद्व्योम्नि भासते ॥८२॥

यद् ब्रह्म ज्योतिषां ज्योतिस्तन्निरालम्बसाधनात् ।
विन्दतेऽघोरयोगी यो जितप्राणमनोदयः ॥८३॥

सोऽवधूतस्समाप्नोति शिवमव्ययमद्वयम् ।
जायते धूतसंसारभयस्तद्रूपरूपितः ॥८४॥

आघोर्यास्साधनाया यत्पञ्चमाङ्गं तदुत्तरम् ।
समाधिसंज्ञं तत्प्रोक्तं किनारामेण योगिना ॥८५॥

स्वात्मन्येव सुसंवित्तिः स्वात्मनो या समुल्लसेत् ।
समाधेस्सा पराकाष्ठा स्वात्मारामपदप्रदा ॥८६॥

यत्तु पातञ्जले योगे समाधिद्वयमिष्यते ।
ततो भिन्नं समाध्यङ्गमाघोरे योगदर्शने ॥८७॥

सबीजाद् भिन्नमेवैतन्निर्बीजाच्चैव भेदवत् ।
यतो ह्यात्मलयोऽत्रास्ते शिवैकमयताऽथ वा ॥८८॥

हर्षशोकप्रणाशो यो जीवतो विदुषो मतः ।
निरायासं स संसिध्येत् समाध्यङ्गे सुसाधिते ॥८९॥

एतत्समाधौ संसिद्धे योगी मृत्युजिदुच्यते ।
देहसत्त्वेऽपि हन्तैषा गुरुशक्तिचमत्कृतिः ॥९०॥

आघोरागमतन्त्रेषु यदङ्गं स्मृतमुत्तरम् ।
तदजपाजपसंज्ञाङ्गं स्वात्मसंविल्लयाह्वयम् ॥९१॥

'ओं रों सो हं स हं' मन्त्रः एक एवात्र जप्यते ।
एतन्मन्त्रलये सिद्धे सिद्ध एवाऽजपाजपः ॥९२॥

प्रणवोऽत्र शिवो ज्ञेयस्तत्र चित्तैकतानता ।
शुद्धाहंभावना द्वैताद्वैतद्वन्द्वनिषूदनी ॥९३॥

चिदानन्दात्मदेवान्तः समावेशप्रसन्नता ।
प्रकाशपरमानन्दध्यानधाराधिरूढता ॥९४॥

पराहन्ताचमत्काररससंपीतिनिर्वृतिः ।
इत्यादि सिद्धयः सिद्धाः सिद्धे सत्यजपाजपे ॥९५॥

अजपाजपसिद्धेश्च परं शून्याङ्गमुच्यते ।
यत्साधनासमुल्लासे सर्वमात्मतयोल्लसेत् ॥९६॥

स्वात्मा विश्वम्भरो देवो विश्वात्मा स्वात्मरूपवान् ।
इत्यभेदसुनिर्भासे शिवैकत्वं प्रसिध्यति ॥९७॥

अष्टाङ्गेऽत्र महाघोरयोगे रक्षाङ्गमष्टमम् ।
आत्मरक्षणरूपं तद् भुक्तिमुक्तिद्वयप्रदम् ॥९८॥

शुद्धबोधैकरूपोऽहं शिवो मत्स्फाररूपवत् ।
जगत्सर्वमिति ज्ञानं ह्यात्मरक्षाभिधं मतम् ॥९९॥

एतज्ज्ञानोदये जाते दयोदेति महेश्वरी ।
लोकपीडाप्रशान्त्यर्थं विवेकश्च प्रजायते ॥१००॥

चित्तविक्षोभशान्त्यर्थं विचारश्चोद्भवेत्पुनः ।
शिवलीलाचमत्कारसारसर्वार्थभावकः ॥१०१॥

तत्काष्ठा तु परा सा स्याद् या सत्सङ्गतिरुच्यते ।
सर्वत्र शिवदृष्टिर्वै यतः संसिद्धिमृच्छति ॥१०२॥

किनारामो महाघोरः एतद्योगनिरूपणात् ।
आत्मप्रदाता लोकेभ्यो नन्तव्यो भक्तिभावतः ॥१०३॥

सत्सङ्गतेस्समारभ्य सत्सङ्गत्यां समाप्यते ।
अघोरयोगस्सोऽयं वै सर्वयोगविलक्षणः ॥१०४॥

शिवात्मनि समासक्तिः स्वात्मरामेऽथवा रतिः ।
सत्सङ्गतिः सुखं सिद्धयेत् सता सङ्गाद्धि स्वात्मना ॥१०५॥

ममायं विभवस्सर्वश्शिवस्येति यदा मतिः ।
तदाह्यघोरसिद्धस्य दयादृष्टिर्विजृम्भते ॥१०६॥

लोककल्याणकाम्याभिश्शक्तिभिर्बृंहितो हि सः ।
दयापारमितासिद्धोऽघोरयोगी महेश्वरः ॥१०७॥

तत्तद् योगमहातन्त्रमेलनान्नवतां गतः ।
जयत्यघोरयोगोऽयं किनारामप्रवर्तितः ॥१०८॥

विजृम्भितमहाघोरयोगैश्वर्यो जयत्यसौ ।
'औघड़ो भगवान् रामः' किनारामसदृग् बलः ॥१०९॥

सर्वेश्वरी समानेशस्फूर्जद्वीर्येण येन सा ।
पुरी काशी कृताऽधत्वे शिवयोः सुस्थिरं स्थलम् ॥११०॥

तत्सान्निध्याप्तिसंयोगादाघोरे दर्शने कृता ।
भूमिकेयं मया नूनं स्वान्तःसुखसमीहया ॥१११॥

• • •

# अघोरदर्शनभूमिका

—:❀:—

शिवायै शिवानन्दसंवित्कलायै
परायै परामर्शभूतिप्रदायै ।
अघोरागमज्ञानदानर्द्धिसिद्ध्यै
नमस्तान्नमस्तान्नमस्तादुमायै ॥

**अघोरदर्शनस्य निर्द्वन्द्वाद्वयदर्शनरूपतासमर्थनम्—**

सर्वदर्शनतत्त्वार्थसारसंग्रहसंभृतम् ।
आघोरं दर्शनं नूनं निर्द्वन्द्वाद्वयदर्शनम् ॥ १ ॥

वेदेषु दर्शनस्यास्य बीजावापो निरीक्ष्यते ।
यत्स्तम्बकरिता प्रत्नशैवशाक्तागमेषु च ॥ २ ॥

आगमेष्वपि तद्रक्षा वैष्णवानां विधित्सिता ।
तत्संवृद्धिसमृद्धौ च पुराणान्यपि जाग्रति ॥ ३ ॥

प्रातिपक्ष्येऽपि तत्सेवा बौद्धैस्तन्त्रैश्चिकीर्षिता ।
जैनागमैश्च सिद्धैश्च भोटचीननिवासिभिः ॥ ४ ॥

सर्वेषामेव तन्त्राणां तेजोराशिसमुद्भवम् ।
आघोरं दर्शनं जातं तत्तद्विद्योपबृंहितम् ॥ ५ ॥

सत्तैकताया विज्ञानं वेदैर्विश्रावितं पुरा ।
मायाविभूतयश्चैव वेदैश्चास्मै समर्पिताः ॥ ६ ॥

जगज्जीवेशविज्ञानं पुराणैरागमैस्तथा ।
दत्तं तस्मै महाज्ञानं यद्हृद्ग्रन्थिप्रभेदकम् ॥ ७ ॥

तत्त्वैकत्त्वेऽपि तन्नामनानात्वज्ञानमर्पितम् ।
ऋषिभिर्मुनिभिश्चैव सिद्धसाध्यैश्च योगिभिः ॥ ८ ॥

कर्म – ज्ञान – प्रविज्ञानं भक्तिज्ञानमनुत्तरम् ।
तत्तद्दर्शनप्रस्थानैस्सर्वं तस्मै समर्पितम् ॥ ९ ॥

तत्तद्विद्यारसैः सिद्धं तत्तद्विद्याबलोर्जितम् ।
आघोरं दर्शनं ह्येकं भुक्तिमुक्तिद्वयप्रदम् ॥ १० ॥

इत्यघोरदर्शनस्य निर्द्वन्द्वाद्वयदर्शनस्वरूपतासमर्थनरूपा
प्रथमपुष्पिका ॥

सच्चिदानन्दरूपं यद् ब्रह्माचिन्त्यमनुत्तरम् ।
अघोरं शिवरूपं तत्तत्त्वं परमिहोदितम् ॥ ११ ॥

स्वात्मज्ञानं हि तज्ज्ञानं ततोऽज्ञेयं हि तन्मतम् ।
यो वेद वेद्म्यहं ब्रह्म तस्याज्ञानं विजृम्भितम् ॥ १२ ॥

सिद्धाघोरः किनारामो यथा तत्तत्त्वमुक्तवान् ।
स्वकृतायां चतुष्पद्यां तदधस्ताद्विलिख्यते ॥ १३ ॥

"जिन्ह गाया तिन्ह गाया नाहीं, अन गाया सो गाये माहीं ।
जिन्ह जाना तिन्ह जाना नाहीं, अनजाना सो जानेहि माहीं ॥

जिन्ह बूझा तिन्ह बूझा नाहीं, अनबूझा सो बूझेहि माहीं ।
जिन्ह देखा तिन्ह देखा नाहीं, अनदेखा सो देखे माहीं ॥

जिन्ह लेखा तिन्ह लेखा नाहीं, अनलेखा सो लेखेहि माहीं ।
जिन्ह समुझा तिन्ह समुझा नाहीं, अनसमुझा सो समुझेहि माहीं ॥

जिन्ह पाया तिन्ह पाया नाहीं, अनपाया सो पाया माहीं ।
जिन्ह चाखा तिन्ह चाखा नाहीं, अनचाखा सो चाखे माहीं ॥"

( किनाराम रचित विवेकसार रक्षा अंग )

इत्यादेस्सिद्धमेतद् यन्निरानन्दमनामयम् ।
सच्चित्स्वरूपं ब्रह्मैकं प्रकाशानन्दनिर्भरम् ॥ १४ ॥

तज्ज्ञानैकघनं चैव ज्ञातृरूपञ्च शाश्वतम् ।
योगीश्वरः किनारामो निर्वाणं शून्यमूचिवान् ॥ १५ ॥

"व्यापक व्याप्य प्रकाश मंह चिदानन्द सुखधाम ।"
बहिरन्तर जंह तंह प्रगट बन्दी आत्माराम ॥

इत्यत्र यत् किनारामो ब्रह्मविज्ञानमुक्तवान् ।
ततोऽपि सिद्धं यद्ब्रह्म चिदानन्दात्मकं महः ॥ १६ ॥

अनाख्यं तत्तथाऽमेयं संविन्मयमनन्तकम् ।
शिवशक्तीति विज्ञातं विश्वस्यावविभासया ॥ १७ ॥

गर्भीकृतानन्तशक्तिर्यथेच्छाशक्तिरुच्यते ।
शाक्तैः कौलैस्तथैवेयं किनारामेण देशिता ॥ १८ ॥

"नाम रूप एकौ नहीं नारि पुरुष नहिं चीन्ह ।
लेख अलेख सुवेष में बास निरन्तर कीन्ह ॥

कछुक दिवस ऐसो रह्यौ अविनासी अवधूत ।
तेहि में इच्छा प्रकट तब कीन्हौं शब्द अभूत ॥

प्रथम शक्ति जो प्रनव मंह भई कहों शिव तोहि ।
वेद मातु ता कहं कहिय नित इच्छा संग सोहि ॥
इच्छा क्रिया शक्ति संग शोभित भये अनन्त ।
पाँच तत्त्व गुण तीनि लौ कर्‌यो जगत को तंत ॥"

( किनारामकृत विवेकसार, ज्ञान अङ्ग )

इत्यादि दोहावृत्तेन देश्यां वाचि यदुक्तवान् ।
किनारामो महाघोरस्तद्वेदागमसम्मतम् ॥ १९ ॥

वैदिका ऋषयः पूर्वे यत् परं ब्रह्म मेनिरे ।
तत्र यद् बृंहणं तद्धि चित्परामर्शरूपकम् ॥ २० ॥

सिसृक्षात्मा परामर्शः प्रमातुश्चिन्मयस्य यः ।
परस्य सा भगवती शिवशास्त्रेषु कीर्त्यते ॥ २१ ॥

सच्चिदानन्दरूपे यद् बृंहणं ब्रह्मणि श्रुतम् ।
मायीयं तद्धि निष्कृष्टं शाङ्कराद्वैतदर्शिभिः ॥ २२ ॥

स्वस्वरूपपरामर्शः शुद्धसंविन्मयस्य यः ।
परमस्य शिवस्यासौ शक्तिश्शैवैर्निगद्यते ॥ २३ ॥

किन्त्वाघोरनये नास्ति पक्षपातो नयद्वये ।
ततो नयद्वयाद्वैतं किनारामस्य वाञ्छितम् ॥ २४ ॥

"सर्वालम्बनधर्मैश्च सर्वतत्त्वैकरशेषतः ।
सर्वक्लेशाशयैः शून्यं न शून्यं परमार्थतः ॥"

इति नागार्जुनोपज्ञे शून्याद्वयनयेऽपि नो ।
किनारामस्य विद्वेषः शून्यं ब्रह्मेति वादिनः ॥ २५ ॥

"बह्म दया संतत मत सांचा । ताप तीन की लहै न आंचा ॥
हंस जासु नहिं होइ विनासा । नहिं दुख सुख जँह एको त्रासा ॥
सून्य सो परम सून्य करि देखो । यह विज्ञान बीज दृढ़ लेखो ॥"
"सुषमनि को नाहीं निर्माना । सुन्य माँह तब निरंजन जाना ॥
"सून्य करे जो जीवन अहई । शिव सो सदा निरंतर रहई ॥"

( किनारामकृत विवेकसार; विज्ञानांग, निरालम्बाङ्ग )

इत्याद्या याश्चतुष्पद्यः किनारामकृतास्ततः ।
शून्यब्रह्म-शिवादीनां तत्त्वैकत्त्वं प्रसिद्धयति ॥ २६ ॥

ब्रह्म सत्यं महाशून्यं निष्प्रपञ्चं च तत्पुनः ।
शिवः स्वानन्दनैर्भर्यात् शक्तिश्चेच्छाविलासतः ॥ २७ ॥

शक्तिः शिवे शिवत्वान्नो कथञ्चिद्व्यतिरिच्यते ।
शिवश्च शक्तेश्शक्तित्वादैकात्म्यमुभयोस्ततः ॥ २८ ॥

तत्त्वमेतत् प्रकाशाख्यं संविन्मात्रं स्वरूपतः ।
स्वभावतस्तथा चैतद्विमर्शाच्छुरितं सदा ॥ २९ ॥

माहेश्वर्यं तदीयं तु स्वातन्त्र्यमिति कीर्तितम् ।
पारिपूर्ण्यं च सर्वत्र शुद्धाद्वैताचमत्कृतिः ॥ ३० ॥

तत्त्वमेतादृशं ह्येकं परमात्मस्वरूपकम् ।
कामकामेश्वरीभावो योगिभिर्ह्यत्र भावितः ॥ ३१ ॥

महायोगी किनारामो दोहावृत्ते ह्यधस्तने ।
अतस्स्त्रीपुंमयं ह्येतदुक्तवान् सर्गहेतवे ॥ ३२ ॥

"पुनि विहँसत एक नारि भइ सुमन कमल निर्मान ।
ब्रह्मा विष्णु महेश सुर भये सकल यह जान ॥

निज इच्छा तेहि देइ करि आपु आपु मँह होइ ।
रमत दिगम्बर वेष में सदा निरंतर सोइ ॥"

स्त्र्यंशस्तत्र विमर्शात्मा प्रकाशश्च पुमंशकः ।
शिवशक्तिरिति ह्येकं तत्त्वं मिथुनमुच्यते ॥ ३३ ॥

चिद्घनान्मिथुनादस्मात् किनारामो महायतिः ।
आब्रह्मस्तम्बपर्यन्तब्रह्माण्डव्यक्तिमूचिवान् ॥ ३४ ॥

अध्यस्तं वा भवेत्सर्वं वाच्यवाचकवैभवम् ।
ब्रह्मण्येवेति का हानिर्न किञ्चिद् ब्रह्मणो बहिः ॥ ३५ ॥

ताभिस्ताभिर्व्यपेक्षाभिः परब्रह्मैव कीर्त्यते ।
शिवो वा विष्णुरथवा तच्छक्तिर्वाऽनपायिनी ॥ ३६ ॥

स्वात्मसात्कृतप्रपञ्चस्तत् पूर्णाहंभावनिर्भरः ।
परमात्मा परानन्दपरज्योतिः स्वरूपकः ॥ ३७ ॥

उपादानं निमित्तं च प्रपञ्चस्यास्य तत् स्मृतम् ।
तदेवाहमिति ध्यायन् भुक्तिमुक्ती भजेन्नरः ॥ ३८ ॥

एतत्प्रतीकमोङ्कार उद्गीथः प्रणवोऽथ वा ।
यस्योपासां किनारामो ब्रह्मविद्यामुपादिशत् ॥ ३९ ॥

अकारो ब्रह्मवाच्यो वाऽनुत्तरार्थपरोऽथ वा ।
ईक्षणार्थोऽथ वोकारः स्यादथोन्मेषवाचकः ॥ ४० ॥

तत्संयोगो मकारो वा तत्संक्षोभोऽथ वा भवेत् ।
नात्र भेदं किनारामस्समदर्शी न्यरूपयत् ॥ ४१ ॥

तथैव वेदवेदान्तोत्तीर्णः शैवागमो न वा ।
इत्यादिशङ्कातङ्कान्नो विभेत्याघोरदर्शनम् ॥ ४२ ॥

ब्रह्मनिःश्वासभूतेभ्यो वेदेभ्योऽभिन्नदर्शनाः ।
प्रकाशात्ममहेशानविमर्शात्मागमाः सदा ॥ ४३ ॥

इति मत्वा किनारामो ब्रह्मात्मैकत्वभावनाम् ।
शिवात्मैकत्वसिद्धिं च मिथो भिन्नां न मन्यते ॥ ४४ ॥

देशीभाषामुपादाय किनारामो महेश्वरः ।
विवेकसारमारच्य दिदेशाघोरदर्शनम् ॥ ४५ ॥

विवेको ब्रह्म प्रज्ञानं निर्विमर्शप्रकाशवत् ।
विवेकस्सविमर्शश्च प्रकाशात्मा परःशिवः ॥ ४६ ॥

उपेयो हि विवेकाख्यः उपायश्च स एव हि ।
आघोरं दर्शनं ह्येवं विवेकाख्यं विराजते ॥ ४७ ॥

बौद्धागमैरप्येवं विवेकः प्रविचिन्त्यते ।
निर्वाणरूपो यस्यान्यन्नाम निस्सरणं मतम् ॥ ४८ ॥

निर्वाणाख्यो विवेकोऽयं विवेकादेव सिद्ध्यति ।
कामस्य चेतसः किं चोपाधेर्वैविक्त्यचिन्तनात् ॥ ४९ ॥

निःसारे सत्यसारोऽयं संसारो नश्यति क्षणम् ।
दुःखात्मा क्षणभङ्गात्मा तथानात्मा हि यो मतः ॥ ५० ॥

निस्सारात्मविवेकस्य निर्वाणस्य परस्परम् ।
पर्यायत्वं यदत्रोक्तं तत् किनारामसम्मतम् ॥ ५१ ॥

"अति अगाध अतिसय अगम व्यापक सर्वसमान ।
बिनु गुरु कृपा न कोउ लहै रामकिना निरबान ॥
बानी बहुत प्रकाश हित सिता राम समुदाय ।
यह रवि सार विवेक लहि संशय निशा नसाय ॥"

( किनारामकृत विवेकसार, दोहा संख्या २८३, ३८४ )

"इन्द्रियजित गतवासना प्रेम प्रीति परकाश ।
तेहि प्रिय सार विवेक यह नित नवनेह हुलास ॥"

( किनारामकृत विवेकसार )

इत्यादिदोहागाथासु निर्वाणस्य निरूपणम् ।
अग्रभूमितया चाथ विवेकस्योपदेशनम् ॥ ५२ ॥

सन्मार्गत्वेन यत्सत्यं किनारामो विवेकवान् ।
निर्वृतश्च दिशत्यत्र निर्वाणं ब्रह्मवेदनम् ॥ ५३ ॥

अघोरदर्शनं ज्ञेयं ततो ब्रह्मात्मदर्शनम् ।
शिवात्मदर्शनञ्चैव तथा शक्त्यात्मदर्शनम् ॥ ४ ॥

किनारामः परं तत्त्वं स्वानुभूत्येकमानतः ।
अनामकमनाख्येयमलक्ष्यं चोक्तवान् मुहुः ॥ ५५ ॥

सर्वतोऽपि समुत्तीर्णं सर्वात्मकमनामयम् ।
व्योमवद् व्यापि सर्वत्र शुद्धाहंभावभावनम् ॥ ५६ ॥

सांख्ये शैवे प्रसंख्याताः शाक्ते ब्राह्मेऽथ दर्शने ।
तत्त्वव्राता हि यावन्तस्तेऽत्रान्तर्भावमागताः ॥ ५७ ॥

सत्त्वं रजस्तमश्चेति गुणत्रयपरिग्रहात् ।
पञ्चतन्मात्रभूतादेर्जगत्कारणकल्पनात् ॥ ५८ ॥

प्रकृतेः परिणामिन्याः पुरुषस्य पृथक्स्थितेः ।
आघोरदर्शनं सांख्यच्छायाच्छुरणबन्धुरम् ॥ ५९ ॥

प्रकाशानन्दरूपत्वं चिद्घनस्यात्र कीर्तितम् ।
आत्मनोऽहंपरामर्शाद् विश्वस्याभासनं तथा ॥ ६० ॥

परं ब्रह्मैव सर्वज्ञं सर्वैश्वर्यसमन्वितम् ।
सर्वकर्तृ सदापूर्णं सर्वव्यापकमिष्यते ॥ ६१ ॥

अत्रापि शैवागमवद् ब्रह्मात्मानुभवश्च यः ।
शिवशक्तिसमावेशरूपस्सोऽप्यत्र सम्मतः ॥ ६२ ॥

सर्वैः शाक्तैः समाम्नाता शब्दानां जननी यथा ।
शब्दब्रह्मात्मिका देवी तथा साऽत्रापि कीर्तिता ॥ ६३ ॥

यच्छब्दब्रह्मसर्वार्थविवर्तनसहिष्णु सत् ।
बिन्दुनादात्मकं नित्यं स्फुरज्ज्योतिस्स्वरूपकम् ॥ ६४ ॥

वर्णानाञ्च पदानाञ्च मन्त्राणाञ्चैव वैभवम् ।
यत्स्फुरत्ता समायत्तमाघोरैस्तदपीष्यते ॥ ६५ ॥

परमार्थधिया तत्त्वं ह्येकं ब्रह्माहमात्मकम् ।
शिवोऽहमिति यद्भक्त्याऽघोराचार्या उपासते ॥ ६६ ॥

शिवोऽहमिति शब्देन शिवशक्तिरिति स्फुरत् ।
तत्त्वमेकं महाशाक्ता अघोरा मन्वते परम् ॥ ६७ ॥

भैरवोऽहमिति ध्यानादप्येतत्तत्त्वमेव हि ।
अघोराः संविजानन्ति चिज्ज्योतिः प्रज्वलत्प्रभम् ॥ ६८ ॥

आघोरे दर्शने तत्त्वं परं यत्तत् परं हितम् ।
विश्वोत्तीर्णं हि यच्छश्वद् विश्वरूमपि स्मृतम् ॥ ६९ ॥

स्वात्मरामस्वरूपं तत्स्वात्मशङ्कररूपवत् ।
स्वात्मशक्त्यात्मकं चोक्तमघोराद्वैतदर्शिभिः ॥ ७० ॥

पुरुषार्थस्वरूपञ्च भाव्यते भक्तिशक्तितः ।
भिन्नत्वे पुरुषार्थेभ्यो वृथा तत्परिकल्पना ॥ ७१ ॥

तदेव परमो धर्मपुरुषार्थस्तदेव च ।
अर्थेति पुरुषार्थश्च परमो यो हि सम्मतः ॥ ७२ ॥

तदेव कामरूपश्च पुरुषार्थः परः स्मृतः ।
यतो हि योगिभिस्तद्वै निष्कामैरपि काम्यते ॥ ७३ ॥

साक्षान्मोक्षस्वरूपत्वं निर्विवादं हि तस्य वै ।
सच्चिदानन्दरूपाहंप्रत्यभिज्ञाप्रभावतः ॥ ७४ ॥

अघोरदर्शनेऽतो न स्वपक्षपरपक्षयोः ।
स्थापनोत्त्थापनारूपं मल्लयुद्धं निरीक्ष्यते ॥ ७५ ॥

हितस्य पुरुषार्थस्य तत्त्वस्यैतस्य भावना ।
भक्त्या या शक्तिरूपिण्या सापि तत्त्वान्तरं न वै ॥ ७६ ॥

स्वात्मरामपरामर्शो दयोल्लासो निरर्गलः ।
स्वतः सिद्धो यतो रामो दयाधर्मधुरन्धरः ॥ ७७ ॥

अहं ब्रह्मेति वा ज्ञानं महामायिनि ब्रह्मणि ।
परिपूर्णं कुतो यायात् दयाविज्ञानमन्तरा ॥ ७८ ॥

अद्वयात्ममहाज्ञाने दयासंवित्स्वतः स्फुरा ।
वाङ्मनः कायवैप्लव्ये क्वाऽद्वयज्ञानसंभवः ॥ ७९ ॥

सर्वभूतसमत्वं यत्तद्दयाशक्तिवैभवम् ।
विनैतल्लभ्यते नात्मा विश्वात्मा विश्वविग्रहः ॥ ८० ॥

दयापारमितैश्वर्यं लब्ध्वा बुद्धस्तथागतः ।
पूर्णबोधिप्रभाभास्वान् भगवानिति भाव्यते ॥ ८१ ॥

'या देवी सर्वभूतेषु दयारूपेण संस्थिता ।'
तत्परामर्शसंसिद्धिर्दयासिद्ध्यैव संभवेत् ॥ ८२ ॥

'शरणागतदीनार्तपरित्राणपरायणा' ।
नारायणि स्वभक्तेऽपि निर्दये न दयामयी ॥ ८३ ॥

अत एव किनारामोऽघोरयोगाङ्गमन्तिमम् ।
स्वात्मसंरक्षणप्रख्यं रक्षेत्याख्यं न्यरूपयत् ॥ ८४ ॥

स्वात्मसंरक्षणं नाम पूर्णाहंभावभावनम्।
यद्विना न विनश्येयुर्योगिनो भेदवासनाः ॥ ८५ ॥

'शिवोऽहं भैरवश्चाहं गुरुपादरतोप्यहम्' ।
इति भावनयाऽघोरी स्वात्मसंरक्षणक्षमः ॥ ८६ ॥

सर्वभूतसुहृत्स्वात्मा भेदलक्षणसङ्कटात् ।
स्वभक्तांस्तारयत्येव स्वशक्त्याऽनुग्रहाख्यया ॥ ८७ ॥

गुरुदैवतमन्त्राणां प्रकाशैकवपुष्मताम् ।
याऽभेदचिन्ता सा नूनं स्वात्मरक्षापटीयसी ॥ ८८ ॥

स्वात्मनः परमात्मैकरूपत्वेनैव भावनात् ।
स्वात्मसंरक्षणं सिद्धं सर्वसिद्धिप्रदायकम् ॥ ८९ ॥

स्वात्मस्वाभाव्यतस्सिद्धा सद्योभूतदयामतिः ।
माहैश्वर्यं हि देवस्य न सिद्धं स्याद्दयां विना ॥ ९० ॥

सत्यमाह महाज्ञानी कीनारामः स्वभाषया ।
तदुक्तिर्लिख्यतेऽधस्तात् प्रमाणत्वेन सम्मता ॥ ९१ ॥

"आतम रक्षाचार विधि है शिष सहज सुबोध ।
दया विवेक विचार लहि सन्तसंग आरोध ॥"

( विवेकसार, रक्षा-अंग )

आत्मरक्षाविधौ योऽयं विवेकः परिकीर्तितः ।
दयासब्रह्मचारी सः सांख्यशास्त्रेऽपरिश्रुतः ॥ ९२ ॥

इत्युपर्युद्धृतायां यच्चतुष्पद्यां विवक्षितम् ।
ततोऽभीष्टं विवेकस्य दिव्यं रूपान्तरं त्विह ॥ ९३ ॥

'निर्विकल्पं परं तत्त्वं स्वात्मत्वेनाविशाम्यम्'' ।
इति भावोल्लसच्चित्तं विवेकस्याभिधान्तरम् ॥ ९४ ॥

'संग कुसंग जानि ठहरावै । सो विवेक श्रुति कहि अस गावै ॥'

( विवेकसार, रक्षा-अंग )

इत्येवं हि चतुष्पद्यां किनारामेण गीयते ।
विवेकमहिमा स्वान्तः प्रसादनमहार्थकः ॥ ९५ ॥

सङ्गो नूनं परित्याज्यः यतोऽसौ कामजन्मदः ।
कुसङ्गोऽपि च कामो यो पर्यन्ते बुद्धिनाशनः ॥ ९६ ॥

बुद्धिनाशे समापन्ने ह्यात्मनाशस्सुनिश्चितः ।
क्व भोगो वा क्व मोक्षो वा यद्यात्मा नाभिगम्यते ॥ ९७ ॥

अत्रार्थान्तरमुन्नेतुं शक्यं तच्चापि सार्थकम् ।
सङ्गः सुसङ्गः दुःसङ्गः कुसङ्गः इति रूपकम् ॥ ९८ ॥

ततश्चैषा विवक्षाऽत्र किनारामस्य संभवेत् ।
यत् कुसङ्गपरित्यागाद् विवेकाभ्युदयः स्फुटः ॥ ९९ ॥

यः स्वभ्यस्तविवेकः स्यादघोरी स तु निर्मलम् ।
स्वानुभूत्येकमानं च स्वात्मानं सर्वदाऽमृशत् ॥ १०० ॥

हृदाकाशे विवेकस्य चन्द्रस्योदयनं तु यत् ।
तस्यैव परिपूर्णत्वं विचार इति कीर्त्यते ॥ १०१ ॥

नवोदितोऽपि चन्द्रो वै तमसां नाशकारकः ।
पूर्णोदितस्तु संस्तेषामपुनर्भवकृन्मतः ॥ १०२ ॥

'संग गहै कुसंग विसरावै ।
यह विचार गहि लेइ सो पावै ॥'

( विवेकसारः—रक्षा अंग )

इत्युपर्युद्धृतायां यत् चतुष्पद्यां विवक्षितम् ।
किनारामेण तत्त्वेतद् यद्विवेको हि बीजवत् ॥ १०३ ॥

विचारो फलवच्चैवाघोरयोगे महीयते ।
स्वात्मसंवित्समुन्मेषस्तद्भरो हि यतो मतः ॥ १०४ ॥

दयायाः यद् विवेकस्य विचारस्य समुद्भवः ।
ततो दयेच्छाशक्तिर्वै ज्ञानशक्तिर्विवेचनम् ॥ १०५ ॥

विचारश्च क्रियाशक्तिस्त्रिकोणं तदिहोदितम् ।
संविद्देवी त्रिकोणाऽतः कीर्तिताऽघोरदर्शने ॥ १०६ ॥

त्रिकोणां त्रिपुरां देवीं संविदं पर्युपासते ।
येऽघोराः सदयाः संस्युस्सविवेका विचारकाः ॥ १०७ ॥

आत्मरक्षाविधेः काष्ठां परां प्राप्तं न्यरूपयत् ।
सत्सङ्गं यत् किनारामस्तत् परं स्वात्मरक्षणम् ॥ १०८ ॥

सत्सङ्गतिर्मताऽघोरयोगिनां, सिद्धिरन्तिमा ।
आत्मरत्येकरूपत्वाद्रामरत्केरूपतः ॥ १०९ ॥

शिवात्मभावनादार्ढ्यात् स्वात्मसाक्षात्कृतैस्तथा ।
सर्वं खल्विदं ब्रह्मेत्यद्वैतप्रवर्तनात् ॥ १०० ॥

अहं सर्वमिदं नान्यद् यदिदं परिदृश्यते ।
मय्येवेदमिति ज्ञानं जयत्याघोरदर्शनम् ॥ १११ ॥

• • •

# सुसंग्राह्याः

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयद्वारा प्रकाशिता महत्त्वपूर्णा अनुसन्धानप्रबन्धाः

१–**अथर्ववेदे शान्तिपुष्टिकर्माणि** [वेदः] श्रीमत्या मायामालवीयया वैदिकवाङ्मयस्यानुशीलनं कृत्वा विरचितो विविधैरानुसन्धानिकनिष्कर्षैः समेधितोऽयं गवेषणाप्रबन्धः— ८-००

२–**पाणिनीयव्याकरणे प्रमाणसमीक्षा** [व्याकरणम्] श्रीमता रामप्रसादत्रिपाठिना विरचिता। इयं गवेषणाप्रधानैस्तात्त्विकैः, अथ च शास्त्रीयगभीरानुशीलनतथ्यैः समेधिता— २६-२५

३–**प्रक्रियाकौमुदीविमर्शः** [व्याकरणम्] डॉ० आद्याप्रसादमिश्रेण लिखितः। श्रीरामचन्द्राचार्य विरचितां प्रक्रियाकौमुदीम् उपजीव्यत्वेनाधारीकृत्य लेखकेन गवेषणापूर्णबहुविधानुसन्धानिकनिष्कर्षा इह सन्निवेशिताः— ८-००

४–**ग्रहगणितमीमांसा** [ज्योतिषशास्त्रम्] डॉ० मुरारीलालशर्मणा विरचिता। इह भारतीयग्रहगणितस्य पाश्चात्त्यग्रहगणितस्य च तुलाबोधकमनुशीलनं कृतं वर्तते— ५-५०

५–**सूर्यग्रहणम्** [ज्योतिषशास्त्रम्] डॉ० कृष्णचन्द्रद्विवेदिना विरचितम्। इहास्मिन् प्रबन्धे सूर्यग्रहणस्यार्वाचीनां पद्धतिमनुसृत्यानुसन्धानिकाः सिद्धान्ताः समुपन्यस्ताः— १२-००

६–**प्राच्यभारतीयम् ऋतुविज्ञानम्** [ऋतुविज्ञानशास्त्रम्] डॉ० धुनीरामत्रिपाठिना संरचितम्। इह लेखकेन विदुषाऽऽनुसन्धानिकं पर्यवेक्षणं कृतम् ऋतुविज्ञानस्य— १८-००

७–**कातन्त्रव्याकरणविमर्शः** [व्याकरणम्] प्रबन्धलेखकेन डॉ० जानकीप्रसादद्विवेदेन विदुषा भृशमत्र कातन्त्रीयाः शब्दशास्त्रीयाः पदार्था विमृष्टाः— ४०-००

८–**महाभाष्यनिगूढाकूतयः** [व्याकरणम्] अनुसन्धानप्रबन्धोऽयं नूनम् आनुसन्धानिकफलश्रुतिभिः समेधितो वर्तते। लेखकः सम्पादकश्च डॉ० देवस्वरूपमिश्रः— २६-८०

९–**पुराणेतिहासयोः सांख्ययोगदर्शनविमर्शः** [दर्शनशास्त्रम्] अनुसन्धानप्रबन्धेऽस्मिन् लेखकेन डॉ० श्रीकृष्णमणित्रिपाठिना महता प्रयासेन पौराणिका महाभारतीयाश्च सांख्ययोगपदार्था विवेचिताः— ३२-८०

१०–**वैशेषिकसिद्धान्तानां गणितीयपद्धत्या विमर्शः** [वैशेषिकदर्शनम्] गवेषणाप्रबन्धेऽस्मिन् वैशेषिकसिद्धान्तानां गणितीयसिद्धान्तमूलकं विश्लेषणं कृतं डॉ० नारायणगोपालेन— २४-६०

११–**वैयाकरणानामन्येषाञ्च मतेन शब्दस्वरूपतच्छक्तिविचारः** [व्याकरणशास्त्रम्] अनुसन्धानप्रबन्धोऽयं विदुषा डॉ० कालिकाप्रसादशुक्लमहोदयेन विरचितः। प्रबन्धेऽस्मिन् शब्दस्वरूपतच्छक्तिविषये गवेषणात्मकं विश्लेषणं जातम्— २६-५०

१२–**धात्वर्थविज्ञानम्** [व्याकरणशास्त्रम्] गवेषणाप्रबन्धोऽयं बहुभाषाविज्ञेन गवेषणामर्मज्ञेन डॉ० भागीरथप्रसादत्रिपाठिना विरचितः। प्रबन्धेऽस्मिन् धात्वर्थविज्ञानानि प्रकामं समुल्लसन्ति— ३१-००

१३–**भारतीयकर्मकाण्डस्वरूपाध्ययनम्** [धर्मशास्त्रम्] अनुसन्धानप्रबन्धोऽयं डॉ० विन्ध्येश्वरीप्रसादत्रिपाठिना लिखितः। प्रबन्धेऽस्मिन् कर्मकाण्डस्य साङ्गोपाङ्गविवेचनं विहितमस्ति— २६-००

१४–**श्राद्धविमर्शः** [धर्मशास्त्रम् गवेषणाप्रबन्धोऽयं डॉ० उमाशङ्करत्रिपाठिना विरचितः श्राद्धविधिश्च भृशं विवेचितः— प्रकाश्यते

---

प्राप्तिस्थानम्—विक्रयविभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी–२२१००२

---